न्याम् । भागलपुर० दू० प्र० नगरे ॥

पुष्पाजीवः । पुं माला कारे ॥

पुष्पाञ्जनम् । न० अञ्जनवि० । कौसुम्भे । पुष्पकेतौ ॥

पुष्पाञ्जलिः । पुं० प्रसूनानामञ्जलौ । कुसुमाञ्जलौ ॥

पुष्पाण्डकः । पुं० शालिजातिविशेषे ॥

पुष्पाम्बुजः । पुं० पुष्पद्रवे ।

पुष्पावचायी । पुं० मालाकारे ॥

पुष्पासवम् । न० मधुनि ॥ पुं० पुष्पमकरन्दकृतआसवे ॥

पुष्पास्त्रः । पुं० कन्दर्पे । मकरध्वजे ॥

पुष्पाह्वा । स्त्री० शतपुष्पायाम् ॥

पुष्पिका । स्त्री० दन्तमले । लिङ्गमले ॥

पुष्पितः । त्रि० जातपुष्पे वृक्षादौ । प्रफुल्ले ॥ पुष्पवति ॥ पुष्पाणिसंजातान्यस्य । ता० इतच् ॥ रमणीये ॥ आपातरमणीये ॥

पुष्पिता । स्त्री० रजस्वलायाम् ॥

पुष्पिताक्षः । त्रि० वृद्धदृष्टौ ॥

पुष्पिताग्रा । स्त्री० वर्णवृत्तेष्वर्द्धसमवृत्तप्रभेदे ॥ लक्षणंयथा । अयुजिनयुगरेफतोयकारोयुजितुनजौजरगाश्चपुष्पिताग्रा ॥ य० । करकिसलयशोभयाविभान्तीकुचफलभारविनम्रदेहयष्टिः । स्मितरुचिरविलासपुष्पितायाव्रजयुवतिव्रततिर्हरेर्मुदेऽभूत् ॥

पुष्पेषुः । पुं० कामदेवे ॥ पुष्पाणिइषवोऽस्य ॥

पुष्यः । पुं० अष्टमनक्षत्रे । सिध्ये । तिष्ये ॥ पुष्यः सर्वार्थसाधकः ॥ तत्रजातस्यफलंयथा । प्रसन्नगात्रः पितृमातृभक्तः स्वधर्मयुक्तोऽभिनयाभियुक्तः । भवेन्मनुष्यः खलुपुष्यजन्मासम्मानचामीकरवाहनाढ्यः ॥ पौषमासि ॥ कलियुगे ॥ यथा ॥ सत्सम्प्रदायप्रथनायपुष्येशिष्यैश्चतुर्भिः सह्योवतीर्णः । उक्तोवृहत्सङ्गमतन्त्रराजे श्रीशङ्कराचार्यगुरुं तमीडे ॥ पुष्यातिकार्याणि०पुष्यन्त्यर्थाअस्मिन्नितिवा । पुष्यसिध्यौनक्षत्रइतिकर्त्तर्यधिकरणेचक्यप् निपातितः ॥

पुष्यधः । पुं० भूर्जकण्टके । सङ्करजातिविशेषे । आवन्त्ये ॥

पुष्यरथः । पुं० युद्धंविनासुखभ्रमणारथे । चक्रयाने ॥ असौपुष्यरथश्चक्रयानंनसमराययत् ॥ पुष्यइवरथः । पुष्येयात्रोत्सवादौरथोवा ॥

पुष्यस्नानम् । न० पुष्याभिषेके ॥ यथा । मूलंमनुजाधिपतिः प्रजातरोस्तदुपघातसंस्कारात् । अशुभंशुभञ्चलोकेभवतियतोतोनृपतिचिन्ता ॥ पुष्यस्नानंनृपतेः कर्तव्यं दैवविपत्तौवेभ्याम् । नातः परंपवित्रंसर्वोत्पातान्तकरमस्ति ॥ अस्यविधिः

कालिकापुराणेवाराह्याञ्चद्रष्टव्यः ॥

पुष्या । स्त्री० पुष्यनक्षत्रे ॥

पुस्तम् । न० पुस्तके । लिखितग्रन्थे ॥ यथा । विधायपूजयेन्नित्यंपुस्तपूजो क्तसिद्धये॥ लेप्यादिशिल्पकर्म्माणि॥ आदिनाकाष्ठपुत्तलिकादयोबोध्याः ॥ यथा । मृद्वावादारुणावाथवस्त्रेणा प्यथचर्म्मणा । लोहरत्नैःकृतंवापिपु स्तमित्यभिधीयते ॥ पुस्यते । पुस्त आदरार्थेणिच् । एरच् ॥

पुस्तकम् । न० पुस्ते । लिखितग्रन्थे । पोथी इ० भा० ॥ तस्यपरिमाणं यथा । मानंवक्ष्येपुस्तकस्यशृणुदे- विसमासतः । मानेनापिफलंवि- न्द्यादमानेश्रीर्हताभवेत् ॥ हस्तमा त्रंमुष्टिमात्रमावाहुद्वादशाङ्गुलं।दशा ङ्गुलंतथाष्टौचततोहीनंनकारयेत् ॥ पुस्तकलेखकस्यपूजाफलंयथा। आर म्भेचसमाप्तौच लेखकंप्रतिपूजयेत् हरिद्रागन्धपुष्पाद्यैर्वस्त्रैश्चसुमनोह- रैः ॥ यावदक्षरसङ्ख्यानंप्रतिपत्रे चसुन्दरि । तावद्युगसहस्राणिब्र- ह्मलोकेवसेच्चिरम् ॥ वेतनग्रहणेले खकस्यदोषोयथा । वेतनंयस्तुगृह्- णीयात्लिखित्वापुस्तकंसतु । याव दक्षरसङ्ख्यानंतावन्नरकेवसेदिति योगिनीतन्त्रे तृतीय ३ भागे ७ पटलः ॥

पुस्तकर्म्मा । पुं० लेप्यादिशिल्पकर्म कर्त्तरि ॥

पुस्तकशिम्बिका । स्त्री० शिम्बिप्रभेदे ॥ पुस्तशिम्ब्याम् ॥

पुस्तशिम्बि: । स्त्री० पुस्तकशिम्बि- कायाम् ॥

पूग: । पुं० क्रमुके । गुवाके ॥ वृन्दे । नानाजातीयानामनियतवृत्तीना मर्थकामप्रधानानांसङ्घे ॥ वृक्षदारु णि ॥ न० गुवाकफले । उद्वेगे ॥ यथा । पूगंगुरुहिमंरूक्षंकषायंकफ पित्तहृत् । मोहनन्दीपनंरुच्यमास्य वैरस्यनाशनम् ॥ आर्द्रंतद्गुर्वभिष्य न्दिवह्निदृष्टिहरंस्मृतम् । स्विन्नंदो षत्रयच्छेदिदृढमध्यंतदुत्तमम् ॥ अस्यपाकोयथा । शृङ्गाटकंजीरके द्वे जातीकोषञ्चवंशजम् । लवङ्ग- धान्यकञ्चापिप्रत्येकंकर्षयुग्मकम् ॥ हैयंगवीनंकुडवंसिताचार्द्धतुलोज्ज्व ला । धात्रीवरीद्रव्यञ्जलिस्वपूगस्या ष्टपलानिच ॥ उलूखलेचसंकुट्यचू- र्णंक्षीराढकान्वितम् । सम्पाच्यभ- क्षितंहन्यात्वासरादौयथोचितम् । ज्वरदाहश्वपित्तञ्चयक्ष्मशूलगुदाङ्कु रान् ॥ छर्दिप्रमेहमूत्राणामाघातञ्च विनाशयेत् । वलप्रदङ्गर्भदञ्चस्त्रीणा ञ्चैतद्रसायनमिति ॥ पुनाति० पवतेवा० पूयतेमुखमनेनवा-। पू ञ्० । छापूखडिभ्य:, किदिति गन् ॥

पूगकृत : । त्रि० पुञ्जीकृते ॥ अपूग : पूग : सम्पद्यमान : कृत : इत्यर्थे श्रेण्यादय : कृतादिभिरितिसमासे ० श्रेण्यादिषुच्व्यर्थवचनमिति च्व्यर्थता ॥

पूगतिथ : । त्रि० पूगानांपूरणे ॥ बहुपूगेतिडटितिथुगागमविधानादसंख्यात्वे पिडट ॥

पूगपात्रम् । न० पूगपीठे । फरुवके ॥

पूगपीठम् । न० कटकोले । पतद्ग्रहे ॥

पूगपुष्पिका । स्त्री० कुहलौ । विवाहसम्बन्धिपुष्पताम्बूले ॥

पूगफलम् । न० उद्वेगे । चिक्कणाम् ॥

पूगयाजक : । पुं० बहुयाजके ॥

पूगरोट : । पुं हिन्तालवृक्षे ॥

पूगिका । स्त्री० क्रमुके ॥

पूगिकाफलम् । न० पूगीफले ॥

पूगी । स्त्री० पूगे । पूगवृक्षे ॥

पूगीफलम् । न० उद्वेगे । पूगफले ॥

पूजक : । त्रि० पूजाकर्त्तरि ॥

पूजनम् । न० अर्चने । पूजायाम् । । यथा ॥ शास्त्रप्रणामशुश्रूषादौ ॥ पूजपूजायाम् । ल्युट् ॥

पूजनीय : । त्रि० श्रुताचाराभिजनादिभि : पूजायोग्ये ॥ पूज्ये ॥ पूजेरनीयर् ॥

पूजा । स्त्री० नमस्यायाम् । अपचितौ ॥ सपर्यायाम् ॥ पादप्रक्षालनाचंनधनदानादिरूपायामर्चायाम् ॥ देवार्चनायाम् ॥ तस्या: सामान्यानुष्ठानंक्रम । आदावृष्यादिकन्यास: करशुद्धिस्तत : परम् । अङ्गुलिव्यापकन्यासौहृदादिन्यासएवच ॥ तालत्रयञ्चदिग्बन्ध : प्राणायामस्तत : परम् । ध्यानंपूजाजपश्चैव सर्वतन्त्रेष्वयंविधिरितियामलवचनम् ॥ पूजनम् । पूज० । चितिपूजीत्यङ् ॥

पूजार्ह : । त्रि० मान्ये । अर्घभाजि ॥ कुसुमादिभिरर्चनयोग्ये । पूज्ये ॥ पूजामर्हति । अर्हपूजायाम् । अर्हइत्यच् ॥ स्त्रियांपूजार्हा ॥

पूजित : । त्रि० सत्कृते । अर्चिते ॥ पूज्यतेस्म ॥ पूज० । क्त: ॥ देवे ॥ पूजितोय : सुरासुरैरित्यादौभूतेक्तोनतुवर्त्तमाने० तेन तृतीयातत्रोपपद्यते । अन्यथाक्तस्यचवर्त्तमानइतिषष्ठीस्यात् ॥

पूजितव्य : । त्रि० पूजनीये ॥

पूजिल : । पुं० देवतायाम् ॥ त्रि० पूज्ये ॥

पूज्य : । पुं० श्वशुरे ॥ त्रि० वन्द्ये पूजार्हे । प्रतीक्ष्ये ॥ पूजार्हा य

था । गुरूणामपिसर्वेषांपूज्या : पञ्चविशेषत : । तेषामाद्यास्त्रय : श्रेष्ठास्तेषांमातासुपूजिता ॥ यो भावयतियासूतेयेनविद्योपदिश्यते ज्येष्ठ : भ्राताचभर्ताचपंचैतेगुर वस्मृताइतिकौर्मेउपरिभागे ११ अध्याय : ॥ पूज्यते । पूज० । । अचोयत् ॥ पूजयितुमर्ह : । पूज० । अर्हेकृत्यतृचश्चेतियत् ॥ सर्वस्यैवहिदानस्यग्रहीतागुरुरुच्यते । कन्यायाश्चैव विद्याया : प्रदातापूज्यतेगुरु : ॥

पूज्यपाद : । पुं० भगवच्छङ्कराचार्ये ॥

पूत : । पुं० शङ्खे ॥ श्वेतकुशे ॥ विकङ्कतवृक्षे ॥ न० बहुलीकृते । अपनीततुषधान्ये ॥ सत्यवचने ॥ त्रि० व्रतादिनाशुद्धे । पवित्रे । प्रयते ॥ दधिगोमयादौसामान्यपवित्रे० स्वभावपवित्रे वा । पवित्रे मेध्ये ॥ दृष्टिपूतंन्यसेत्पादंवस्त्रपूतंजलंपिवेत् । सत्यपूतांवदेद्वाचंमन : पूतंसमाचरेत् । शठिते बहुलीकृते ॥ पूयतेस्म । पूङ्० पूञ्० वा । क्त : ॥ पवतेस्मवा । पूङ्गत्यर्थेतिक्त : ॥

पूतक्रतायी । स्त्री० इन्द्राण्याम् । शच्याम् ॥ पूतक्रतो : स्त्री० । पूतक्रतोरैचेत्यैकारादेशोङीप् च ॥

पूतक्रतु: । पुं० इन्द्रे ॥ पूता:क्रतवो येन ॥

पूतक्रतु : । स्त्री० देव्याम् ॥ पूता : क्रतवोययासा ॥

पूतगन्ध : । पुं० वर्वरे ॥

पूततृणम् । न० श्वेतकुशे ॥ कुशे ॥ पूतञ्चतत्तृणञ्च ॥

पूतद्रु : । पुं० पलाशवृक्षे ॥

पूतधान्यम् । न० तिले ॥ पूतञ्चतद्धान्यञ्च ॥

पूतना । स्त्री० हरीतक्याम् ॥ पूतनास्थिमतीसूक्ष्मेतिनिरूपणात् ॥ सिन्धुदेशजाखल्पत्वक्वृहदस्थिहरीतकी लेपनेप्रशस्तेतिराजवल्लभ : ॥ गन्धमांस्याम् ॥ वालरोगविशेषे ॥ वालमातृकाविशेषे ॥ दानवीविशेषे । वकासुरभगिन्याम् ॥ अहोवकीयंस्तनकालकूटंजिघांसयापाययदप्यसाध्वी । लेभेगतिंधात्र्युचितांततोन्यंकंवादयालुंशरणंव्रजेम ॥ पूतंकरोति । तत्करोतीतिणिच् । बहुलमन्यत्रापीतियुच् ॥

पूतनारि : । पुं० बालमुकुन्दे । श्रीकृष्णे ॥ पूतनायाअरि : ॥

पूतनासूदन : । पुं० श्रीकृष्णे ॥ पूतनांसूदितवान्० सूदयतिवा । सूद-क्षरणे । नन्द्यादित्वाल्ल्यु : ॥

पूतनाहा । पुं० श्रीकृष्णे ॥ पूतनांहन्ति । हन० । क्विप् ॥

पूतपाप : । त्रि० निरस्तस्वर्गभोगप्रतिबन्धकपापे ॥

पूतफल : । पुं० पनसे ॥

पूता । स्त्री० दूर्वायाम् ॥

पूतात्मा । पुं० ईश्वरे ॥ पूत : शुद्धः सत्त्वादिगुणसम्बन्धरहित : आत्मा स्वरूपंयस्य ॥ पूतश्चासाआत्माचेति वा ॥ शुद्धदेहे ॥ शुद्धान्त : करणे ॥ पूतआत्मायस्य ॥

पूति : । स्त्री० दुर्गन्धे ॥ पवित्रतायाम् ॥ खट्टाशमुष्के ॥ न० रोहिषतृणे ॥

पूतिक : । पुं० पूतिकरञ्जे ॥ पुनाति । पूञ् ० । तिन्तिडीकादयइति० इकन् ॥ न० विष्टायाम् ॥

पूतिकरज : । पुं० लट्वाकरञ्जवृक्षे । कलिकारके । कलहनाशने । कण्टकितकरञ्जे । काँटाकरञ्जइति० भा० ॥ पूतिश्चासौकरजश्च ॥

पूतिकरञ्ज : । पुं० पूतिकरजे ॥

पूतिकर्णक : । पुं० कर्णरोगविशेषे ॥ तल्लक्षणंयथा । कर्णविद्रधिपाकाद्वा जायतेचाम्बुपूरणात् । पूयंस्रवतिवापूतिसज्ञेय: पूतिकर्णक : ॥ अस्यौषधंयथा । निर्गुण्डीसुरसस्तैलंसिन्धुधूमरजोगुड : पूरणात्पूतिकर्णस्यशमनोमधुसंयुत : ॥ अथवा । वरुणार्द्रकपित्थाम्रजम्बूपल्लवसाधितम् । पूतिकर्णापहंतैलंजातीपत्ररसेनवेति चक्रपाणिदत्त : ॥

पूतिका । स्त्री० मार्जारयाम् ॥ पोदृ इ० प्र० लताशाके । उपोदक्याम् ॥

पूतिकामुख : । शम्बूके ॥

पूतिकाष्ठम् । न० सरलद्रुमे ॥ देवदारुमहीरुहे ॥ पूतिचतत्काष्ठञ्च ॥ पूते : पावनस्यकाष्ठंवा ॥

पूतिकाष्ठकम् । न० पूतिकाष्ठे ॥

पूतिगन्ध : । पुं० गन्धके ॥ हिङ्गुदीवृक्षे ॥ न० रङ्गे ॥ त्रि० दुर्गन्धे ॥

पूतिगन्धि : । } त्रि० दुर्गन्धे
पूतिगन्धिक : । }

पूतिगन्धिका । स्त्री० वाकुच्याम् ॥

पूतितैला । स्त्री० ज्योतिष्मत्याम् ॥

पूतिदारु : । न० देवदारुणि ॥

पूतिनस्य : । पुं० नासारोगभेदे ॥ तल्लक्षणंयथा । दोषैर्विदग्धैर्गलतालुमूलेसम्मूर्छितोयस्यसमीरणस्तु । निरेतिपूतिर्मुखनासिकाभ्यांतंपूतिनस्यंप्रवदन्तिरोगम् ॥ औषधन्तु । । व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसम्भवै : । पाचितंलावणंतैलंपूतिनासागदंजयेत् ॥ अथवा । त्रिकटुविडङ्गकसैन्धवबृहतीफलशिग्रुसुरसदन्तीभि : । तैलङ्गोजलसिद्धंनस्यंस्यात्पूतिनस्यस्य ॥

पूतिपत्र : । पुं० श्योनाकविशेषे ॥

पूतिपुष्पिका । स्त्री० मातुलुङ्गायाम् ।

पूतिफली । स्त्री० वाकुच्याम् । सोम

राज्याम् ॥ पूतिफलीष्वस्या : पाक कर्णेतिङीष् ॥

पूतिमयूरिका । स्त्री० अजगंधायाम् ॥

पूतिमेद : । पुं० अरिमेदे ॥

पूतिवात : । पुं० बिल्ववृक्षे ॥ अधोवायौ ॥

पूतिवृक्ष : । पुं० श्योनाके ॥

पूतिशारिजा । स्त्री० खट्टाश्याम् ॥

पूतिक : । पुं० गंधमार्जारे ॥ घोडा करञ्ज इ० भा०प्र० करञ्जविशेषे ॥ लताविशेषे ॥

पूतिकरञ्ज : । पुं० लट्टा स्थकरञ्जे ।

पूतिगण्ड : । पुं० पूतिकीटे ॥

पूतिभाव : । पुं० दौर्गन्ध्ये ॥ क्लेदे ॥

पूत्यण्ड : । पुं० गन्धकीटे ॥ गन्धैणे ॥ यस्यनाभौमृगनाभिर्जायते ॥

पूप : । पुं० अपूपे । पिष्टके । पूआ० इ०भा० ॥ यथा ॥ समितांगुडतोयेनमेलयित्वासुमर्दिताम् । घृतेविस्तार्यसुपचेत्सुवृत्तोमृदुपूपक : ॥ अपूप : पुष्टिदोवल्योहृद्योगुरुतर: स्मृत : । पित्तानिलहरोवृष्य : सुपक्वोरुचिकारक : ॥ पवनंपू : । पूञ्ं०सं०क्विप् । पुवंपाति०पिवतिवा । पारक्षणे०पानेवा । आतइतिक : ॥

पूपला । स्त्री० पोलिकायाम् ॥

पूपाली । स्त्री० पोल्याम् ॥

पूपाष्टका । स्त्री० आग्रहायणीपूर्णिमाया : परत : कृष्णाष्टम्याम् ॥

पूपिका । स्त्री० पूलिकायाम् ॥

पूयम् । न० पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्ते । क्षतजे । मलजे । पीप०राध०इ०भाषा ॥

पूयनम् । न० रक्तविकारे । पूये ॥

पूयरक्त : । पुं० नासारोगभेदे ॥ तल्लक्षणम् । दोषैर्विदग्धैरथवापिजन्तोर्ललाटदेशेऽभिहतस्यतैस्तै : । नासास्रवेत्पूयमसृग्विमिश्रं तंपूयरक्तं प्रवदन्तिरोगम् ॥

पूयारि : । पुं० निम्बपादपे

पूयालस : । पुं० सन्धिगतरोगभेदे ॥ लक्षणंयथा । पक्व : शोफ : सन्धिज : संस्रवेद्य: सान्द्रं पूयंपूतिपूयालस : स : ॥ इतिसुश्रुत : ॥

पूयोद : । पुं० नरकान्तरे ॥

पूर : । पुं० जलसमूहे । अम्बसांवृद्धौ ॥ व्रणसंशुद्धौ ॥ खाद्यविशेषे ॥ न०दाहागुरुणि ॥

पूरक : । पुं० प्राणवायौ : शनैर्वामनासापुटेन०दक्षिणनासापुटेनवा:सव्यापसव्यन्यायेनान्त : प्रवेशने ॥ बाह्येनवायुनामुर्त्त:शक्तिसीमप्रपूरणम् । पूरक : सतदभ्यासात्सुगुर्वपिविकर्षयेत् ॥ नासिकोत्कृष्टउच्छ्वासोऽयात : पूरकउच्यते ॥ आत्मानुसन्धाने ॥ ब्रह्मैवास्मी तियावृत्ति: पूरकोवायुरीरित : ॥ पूरीआप्याय

मे । खल्ल्॥ बीजपूरे॥ गुणकाङ्के ॥ पुं॰ प्रेतदेहनिष्पादकाशौचकादेय दशपिण्डे । त्रि॰ पूरणकर्त्तरि ॥

पूरणः । पुं॰ सेतौ॥ विष्णुतैले॥ न॰ अङ्कानांगुणने ॥ वृष्टौ ॥ कुटन्नटे ॥ वानतन्तुषु ॥ पिष्टप्रभेदे ॥ हिङ्गुधान्यजलेमांसंसुखिन्नंसूक्ष्मकुट्टितम् । संयुक्तंहिङ्गुजीराद्रैबीजपूरैलसैन्धवैः ॥ घृतेतप्तेपरिभृष्टंधूपितंमांसपूरणम् ॥ मांसस्यपूरणंरुच्यंहृद्यंपुष्टिकरंपरं । वातपित्तहरंबल्यंमन्दाग्निकफनाशनम् ॥ त्रि॰पूरके । पूरणकर्त्तरि ॥ पालनकर्त्तरि ॥ पृणाति । पृपालनपूरणयोः । ल्युट् ॥ पूर्यतेऽनेन । पूरी॰ । करणेल्युट् ॥

पूरणी । स्त्री॰ शाल्मलिद्रुमे ॥ पटारम्भकासूत्रेषु ॥ पूरणकर्त्र्याम् ॥ पूरयति । पूरी॰ । ल्युट् । ङीप् ॥

पूराम्लम् । न॰ वृक्षाम्ले ॥

पूरिका । स्त्री॰ पूपविभेदे । पूरी॰ कचौरी॰इ॰भा॰॥ यथा । माषाणांपिष्टिकांयुञ्ज्याल्लवणाद्रकहिङ्गुभिः । तयापिष्टिकयापूर्णासमिताकृतपोलिका ॥ ततस्तैलेविपक्वा सापूरिकाकथिताबुधैः । रुच्यास्वादीगुरुः स्निग्धावातपित्तासृदूषिका । चक्षुस्तेजोहरीचोष्णापाकेवातविनाशिनी। तथैवघृतपक्वाऽपिचक्षुष्या रक्तपित्तहृत् ॥ बदरचूर्णपूरिकातु । घृतमिश्रकनिक्यायांमेलितंपञ्चमांशकम् । बदरत्वग्भवंचूर्णंजलेना लोडापीडयेत् ॥ पूरिकाघृतसंपक्वा खण्डपाकविलेहिता । पूरिकाबदरोत्थितास्निग्धापित्तहराहिमा ॥ मधुराढ्वातघ्नी सरास्कर्दिविनाशिनी । एवंविप्रायखर्जूरशर्करानारिकेरकैः ॥ द्राक्षयावैसुपूर्यस्सुपूरिकाःपूर्ववत्पचेत् ॥

पूरितः । त्रि॰ कृतपूरणे । पूर्णे ॥ पूर्यतेस्म । पूरी॰ । क्तः । वादान्तेति पक्षेइट् ॥ गुणिते ॥

पूरुषः । पुं॰ पुरुषे । नरे ॥ पुंसि ॥ चेतने ॥ यथा। यस्माद्विश्वमुदेति यत्रमतेयस्मिन्पुनर्लीयतेभासाय स्यजगद्विभातिसहजानन्दोज्ज्वलं यन्महः । शान्तंशाश्वतमक्रियंयम पुनर्भावायभूतेश्वरम् द्वैतध्वान्तम पास्ययान्तिकृतिनः प्रस्तौमितंपूरुषमिति ॥ पुरति । पुरअग्रगमने । पुरः कुशन् । अन्येषामपीतिदीर्घः । पृषोदरादिर्वा ॥ यद्वा । पूरयति पूर्यतेवा । पूरी॰वा॰ कुशन् ॥

पूर्णः । त्रि॰ व्याप्ते ॥ पूरिते ॥ पुं॰ शक्ते ॥ समग्रे । सकले ॥ पूर्यतेस्म पूरी॰ । कर्त्तरिकर्मणिवाक्तः । वादान्तेतिसाधुः ॥

पूर्णकः । पुं० स्वर्णचूडपक्षिणि ॥ कुत्सितः पूर्णः । संज्ञायांकन् ॥

पूर्णकुम्भः । पुं० भद्रकुम्भे । जलपूरितघटे ॥ पूर्णश्चासौकुम्भश्च ॥

पूर्णकोष्ठा । स्त्री० नागरमुस्तायाम् ॥

पूर्णचन्द्रः । पुं० सम्पूर्णेन्दुभयाष्टम्योर्मध्यस्थेन्दौ ॥ पूर्णश्चासौचन्द्रश्च ॥

पूर्णता । स्त्री० पर्याप्तौ ॥

पूर्णपात्रम् । न० वस्तुपूर्णपात्रे ॥ वर्द्धापके । पूर्णानके ॥ उत्सवकालेहर्षात्गृहीतवस्त्रालङ्कारादौ ॥ होमकर्मणिब्रह्मदक्षिणायाम् ॥ हर्षादुत्सवकालेयद्दलङ्काराम्बरादिकम् । आकृष्यगृह्यतेपूर्णपात्रंपूर्णानकञ्चतत् ॥

पूर्णमा । स्त्री० पौर्णमास्याम् ॥

पूर्णमासः । पुं० पौर्णमासयागे ॥

पूर्णमासी । स्त्री० पूर्णिमायाम् ॥

पूर्णबीजः । पुं० बीजपूरे ॥

पूर्णवैनाशिकः । पुं० वैनाशिके ॥ वैशेषिकास्त्वावर्द्धवैनाशिकाः सर्वक्षयवादिनस्तुपूर्णवैनाशिकास्तेनप्रसिद्धाः शास्त्रे ॥

पूर्णा । स्त्री० पञ्चमीदशमीपूर्णिमामावास्यासु ॥

पूर्णानकम् । न० वर्द्धापके ॥ आनके ॥ पटहे ॥ पात्रे ॥ पूर्णपात्रे । हर्षात्उत्सवकालेवस्त्राद्याकर्षणे ॥

पूर्णावतारः । पुं० नृसिंहे ॥ रामे ॥ परिपूर्णतमे श्रीकृष्णे ॥

पूर्णाहन्ता । स्त्री० पराहन्तायाम् ॥ यथाहुर्वार्तिककाराः । भुक्तंयथान्नं कुक्षिस्थंस्वात्मत्वेनैवपश्यति । पूर्णाहन्ताकवलितंविश्वंयोगीश्वरस्तथेति

पूर्णिका । स्त्री० नासाच्छिन्नीनामकपक्षिणि ॥

पूर्णिमा । स्त्री० पौर्णमास्याम् । शुक्लपक्षान्तिमतिथौ ॥ साद्विविधा । यथा । राकाचानुमतीचैवद्विविधा पूर्णिमामता । पूर्वोदितकलाहीने पौर्णिमास्यानिशाकरे ॥ पूर्णिमानुमतीज्ञेयापश्चास्तमितभास्करे ॥ यस्मात्तामनुमन्यन्तेदेवतापितृभिःसह । तस्मादनुमतीनामपूर्णिमाप्रथमा स्मृता ॥ यदाचास्तमितेसूर्येपूर्णचन्द्रस्यचोद्गमः । युगपत्सोत्तरारागात्तदानुमतिपूर्णिमा ॥ राकान्तामनुमन्यन्तेदेवतापितृभिः सह । रञ्जनाच्चैवचन्द्रस्यराकेतिकवयोऽब्रुवन् ॥ तस्यांजातस्यफलंयथा । कन्दर्पतुल्योयुवतिप्रियश्चन्यायात्प्रवित्तः सततंसहर्षः । शूरोबलीशास्त्रविशारदश्चस्तपूर्णिमाजन्मनियस्यजन्मः ॥ पूरी० । भावेक्तः । पूर्णचन्द्रस्यपूरणम् । तेननिर्वृत्ता ॥

पूर्तम् । न० खातादिकर्मणि ॥ खातादिनादेवकुल्यादिप्रहः । तद्यथाम् । पुष्करिण्यः सभावापीदेवतायतनानिच । आरामश्चविशेषेण

पूर्त्तं कर्म्मविनिर्दिशेत् ॥ अपिच ।
वापीकूपतड़ागानि देवतायतनानि
च । अन्नप्रदानमारामः पूर्त्तमित्य
भिधीयते ॥ इति ॥ ग्रहोपरागेय-
द्दानंपूर्त्तं तदपिनाकदम् ॥ आरा
मादिक्रियाजेफले ॥ पालने ॥ त्रि०
पूरिते ॥ छन्ने ॥ पूरणम् । पूर्यतेस्म
वा । पॄ० । भावेकर्म्मणिवाक्तःनध्या
ख्ये तिनिष्ठानत्वंन ॥

पूर्त्तिः । स्त्री० पर्य्याप्ते । उपसम्पन्ने
॥ पूरणे ॥

पूर्व्वः । त्रि० पूर्व्वजे ॥ प्राचि ॥ आद्ये
॥ अग्रे ॥ श्रुतिभेदे ॥ न० कारणे
। पूर्व्वभाविनि ॥ पुअमूत्रि । अति
क्रान्ते ॥ पूर्व्वति । पूर्व्वपूरणे । अ-
च् । पू० ॥

पूर्व्वगङ्गा । स्त्री० रेवायाम् । नर्म्मदान
द्याम् ॥ पूर्व्वाचासौगङ्गाच ॥

पूर्व्वजः । पुं० ज्येष्ठभ्रातरि ॥ अनादौ ॥

पूर्व्वजाः । पुं० भूमिदिव्यपितृगणे ।
ष्मसपश्वेषु । कव्यवालादिषु ॥ पू
र्व्वस्मिन्कालेजातः सप्तम्यांजनेर्डः ॥

पूर्व्वजा । स्त्री० ज्येष्ठभगिन्याम् ॥ टा-
प् ॥

पूर्व्वजिनः । पुं० अतीतजिनवि० ।
मञ्जुघोषे । शार्दूलवाहने ॥

पूर्व्वदिक्पतिः । पुं० इन्द्रे ॥

पूर्व्वदिक् । स्त्री० प्राच्यांदिशि । पूर्व्व-
स्याम् ॥

पूर्व्वदेवः । पुं० असुरे । दैत्ये ॥ पूर्व्वश्चा
सौदेवश्च । पूर्व्वापरप्रथमेत्यादिना
समासः ॥ यद्वा । पूर्व्वदेवः । अ
न्यायाद्विदेवत्वाद्भ्रष्टः । सुप्सुपे
तिसमासः ॥

पूर्व्वदेशः । पुं० सूर्य्योदयोपलक्षितेदेशे
। वर्त्तनौ ॥

पूर्व्वपक्षः । पुं० शुक्लपक्षे ॥ पूर्व्वश्चासौ
पक्षश्च ॥ शास्त्रीयप्रश्ने । सिद्धान्त
विरुद्धकोटौ । चोद्ये । देश्ये ।
फक्किकायाम् ॥

पूर्व्वपक्षपादः । पुं० चतुष्पादव्यवहा
रान्तरर्गतेप्रथमेपादे । भाषायाम् ।
प्रतिज्ञायाम् । पक्षे ॥

पूर्व्वपर्व्वतः । पुं० उदयाचले ॥ पूर्व्वप
र्व्वतः ॥

पूर्व्वफल्गुनी । स्त्री० अश्विन्यादिनक्ष
त्रान्तर्गतैकादशेनक्षत्रे ॥ तत्रजात
स्यफलंयथा । शूरस्त्यागीसाहसी
भूमिभर्त्ताकोपाक्रान्तः स्नाय्वशिरा
लोतिदक्षः । धूर्त्तःक्रूरोत्यन्तवाता
धिकः प्राक्फल्गुन्यस्य जन्मकाले
चयस्य ॥

पूर्व्वफल्गुनीभवः । पुं० बृहस्पतौ ॥

पूर्व्वभद्रपदः । पुं० प्रोष्ठपदासु । पञ्च
विंशतिमेनक्षत्रे ॥

पूर्व्वभद्रपदा : }
पूर्व्वभाद्रपदाः } स्त्री० { अश्विन्यादिस
{ प्तविंशतिनक्ष

त्रान्तर्गतपञ्चविंशतितमेनक्षत्रे । प्रो

षपदासु ॥ तत्रजातस्यफलं । जि-
तेन्द्रियः सर्व्वकलासुदक्षोजितारि
पक्षः खलुतस्यानित्यम् । भवेन्नरो
यानुसुतरामपूर्व्वापूर्व्वापदाभाद्रपदा
प्रसूतौ ॥ पूर्व्वाश्चताभाद्रपदाश्च ॥
एकवचनान्तोपि ॥
पूर्व्वयक्षः । पुं० जिनवि० । जलेन्द्रे ।
मणिभद्रे ॥
पूर्व्वरङ्गः । पुं० नाट्यशालायाम् ॥ ना
ट्योपक्रमे । प्राक्सङ्गीते । गुणनि
कायाम् । रङ्गप्रधानाद्योरङ्गविघ्न
शान्तिकारीनान्दीपाठगीतवादित्रा
दानेकाङ्गविशेषोनाट्यादौकर्त्तव्यः
कर्म्मविशेषः पूर्व्वरङ्गः । तदुक्तंवस
न्तराजीये । यन्नाट्यवस्तुनः पूर्व्वरङ्ग
विघ्नोपशान्तये । कुशीलवाः प्रकु-
र्व्वन्तिपूर्व्वरङ्गः प्रकीर्त्तितः इति ॥
पूर्व्वरङ्गंविधायादौसूत्रधारेविनिर्गते
। प्रविश्यतद्वदपरःकाव्यमास्थापयेन्न
टः ॥ प्रथमंपूर्व्वरङ्गश्चततः प्रस्ताव
नेतिच । आरम्भेसर्व्वनाट्यानामेत
त्सामान्यमिष्यते ॥ पूर्व्वंरज्यतेऽ
स्मिन् । रञ्जेर्घञ् । कुत्त्वम् ॥
पूर्व्वरागः । पुं० नायिकानायिकयोर्द
शाविशेषे ॥ श्रवणाद्दर्शनाद्वापिमि
थः संरूढरागयोः । दशाविशेषो
योऽप्राप्तौपूर्व्वरागःसउच्यते ॥ इ० ॥
पूर्व्वरात्रः । पुं० रात्रेःपूर्व्वभागे ॥ रा
त्राह्नाहाः पुंसि ॥

पूर्व्वरूपम् । न० पूर्व्वलक्षणे ॥ वैद्यके
भाविव्याधिबोधकचिह्ने ॥
पूर्व्ववत् । न० अनुमानविशेषे ॥ यथा
। दृष्टस्वलक्षणसामान्यविषयंयत्०
तत्पूर्व्ववदुच्यते । पूर्व्वंप्रसिद्धम्दृष्ट
स्वलक्षणसामान्यमितियावत्०तद
स्यविषयत्त्वेनास्ति०अनुमानज्ञान
स्येतिपूर्व्ववत् । यथाधूमाद्वह्नित्व-
सामान्यविशेषः पर्व्वतेनुमीयते०
तस्यवह्नित्वसामान्यस्यस्वलक्षणं
वह्निविशेषोदृष्टोरसवत्याम् । वीता
वीतभेदात्तद्द्विविधम् ॥
पूर्व्ववादी । त्रि० प्रागभियोक्तरि । प्र-
थमविवादिनि ॥
पूर्व्ववित् । त्रि० अतीतज्ञे ॥
पूर्व्वशैलः । पुं० उदयपर्व्वते ॥
पूर्व्वसरः । त्रि० अग्रगामिनि ॥
पूर्व्वा । स्त्री० पूर्व्वदिशि । प्राच्याम् ॥
तद्दिग्भववायुगुणाः । पूर्व्वस्तुमधु
रोवातः स्निग्धः कटुरसान्वितः
। गुरुर्विदाहशमनोवातदः पित्त-
नाशनः ॥ इति ॥
पूर्व्वाद्रिः । पुं० उदयाचले । दिनमूर्द्ध-
नि ॥
पूर्व्वाषाढा । स्त्री० अश्विन्यादिसप्तविं
शतिनक्षत्रान्तर्गतविंशतिसंख्याकन
क्षत्रे ॥ तत्रजातस्यफलंयथा । भूयो
भूयः स्तूयमानानुरक्तो भक्तोदेवेब
न्धुमान्योतिदक्षः । पूर्व्वाषाढाक-

न्मकालियदिग्वाटाषाढः स्यादैरि वर्गेनितान्तम् ॥ पूसावर्बाचाषाढाच ॥

पूर्वाह्णः । पुं॰ द्विधाविभक्तदिनस्य पूर्वभागे ॥ यथा । आवर्तनात्तु पूर्वाह्णोह्यपराह्णस्ततः परः । आवर्तनात्॰वासरस्यच्छायापरिवर्तनात्प्रागितिशेषः ॥ त्रिधाविभक्तदिनस्यप्रथमभागे ॥ सचत्रिंशद्दण्डदिनमानेसूर्योदयावधिदशदण्डात्मकः कालः यथा । पूर्वाह्णोवैदेवानां मध्यंदिनंमनुष्याणामपराह्णः पितॄणामितिश्रुतिः ॥ अह्नः पूर्वम् । पूर्वापराधरैत्येकदेशिसमासः । राजाहः सखिभ्यष्टिजिष्टतिटच् । अह्नादेशोणत्वम् ॥

पूर्वाह्णेतनम् । त्रि॰ पौर्वाह्णिके ॥ पूर्वाह्णेभवः । विभाषापूर्वाह्णापराह्णाभ्याम्॰इतिट्युट्युलौतुट्च । घकालतनेष्विंत्यलुक् ॥

पूर्वेद्युः । अ॰ प्रातःकाले । धर्मवासरे ॥ पूर्वस्मिन्नहनि ॥ रुद्य : परुदित्यादिनापूर्वशव्दादेद्युस्प्रत्ययो निपात्यते ॥

पूषः । पुं॰ ब्रह्मदारुणि । तूत॰इ॰भा॰ ॥ पूषवृद्धौ । इगुपधात्कः ॥

पूषकः । पुं॰ ब्रह्मदारुणि ॥ पूषएवकः ॥

पूषा । पुं॰ सूर्ये ॥ जगतः पोषणात् । पुष्णाति । पुषपुष्टौ । श्वन्नु-क्षन्पूषन्निति निपातितः ।

पूषभाषा । स्त्री॰ अमरावत्याम् । इन्द्रनगर्याम् । सुरपुर्याम् ॥

पूषसुहृत् । पुं॰ शिवे ॥

पूषा । स्त्री॰ पिङ्गलापृष्ठवर्त्तिन्यांनाड्याम् ॥ पूषातुपिङ्गलापृष्ठेनीलजीमूतसन्निभा । याम्यभागस्यनेत्रान्तायावत्पादतलंगता ॥

पृक्का । स्त्री॰ मरुन्मालायाम् । पिशुनायामोषधौ । असारक॰इ॰भा॰ । पिडिं॰इ॰गौ॰भा॰स्पृश्यते । स्पृशस्पर्शने । वा॰ कक् । पृ॰ ॥

पृक्तम् । न॰ धने ॥ त्रि॰ खचिते ॥ सम्पर्कयुक्ते ॥ पृच्यते । पृची॰ । क्तः ॥

पृक्तिः । स्त्री॰ सम्पर्के । स्पृष्टौ । स्पर्शे ॥ पर्चनम् । पृचीसम्पर्के । क्तिन् ॥

पृच्छा । स्त्री॰ अनुयोगे । प्रश्ने ॥ प्रच्छनम् । प्रच्छज्ञीप्सायाम् । गुरोश्चहलइत्यः । सम्प्रसारणम् ॥

पृच्छितनुः । पुं॰ प्रश्नलग्ने ॥

पृच्छ्यम् । त्रि॰ प्रष्टव्ये ॥

पृतना । स्त्री॰ सेनामात्रे ॥ सेनाविशेषे । तिसृषुवाहिनीषु ॥ अत्रेभाः ॥ २४३ । रथाः २४३ । अश्वाः ७२९ । पादातिकाः १२१५ । समस्तसङ्ख्ययाखचितुर्विंशतिभिः स्मृता । २४३० ॥ प्रियते । पृङ्व्या-

वाने । वा० तल: गुणाभावश्च ॥
पूतनाषाट् । पुं० इन्द्रे ॥ पृतनांसह ते । षष्ठमर्षणे । छन्दसिसहइतिण्विः सहेरितिष : ॥
पृथक् । च० भिन्ने । विनार्थे । अन्तरे वा । ऋते ॥ असङ्कीर्णे । नानार्थे ॥ पर्थयति । पृथप्रक्षेपे । वा० कक् ॥
पृथक्त्वम् । न० पृथक्प्रत्ययासाधारण कारणत्वे ॥ यथा । सङ्ख्यावत्तपृ यक्त्वंस्यात्पृथक्प्रत्ययकारणम् । अन्योन्याभावतोनास्य चरितार्थत्व मुच्यते ॥ अस्मात्पृथगियंनेतिप्रती तिर्हिविलक्षणा॥ पृथक्त्वं निरूपयति सङ्ख्यावदिति । पृथक्प्रत्ययासाधा रणकारणंपृथक्त्वम् । तन्निस्यता- दिकंसंख्यावत् । यथानित्ये त्वेक- त्वं नित्यम् ० अनित्ये चनित्यम् ० आ श्रयद्वितीयक्षणेचोत्पद्यतेआश्रयना- शान्नश्यति० तथापृथक्त्वमपिद्वित्वादि वत्द्विपृथक्त्वादिकमपीत्यर्थः । वैयो पादेयविवेके ॥ भेदे । भावेत्व : ॥ पृथग्भावे । परस्परभिन्नत्वे ॥
पृथक्त्वचा । स्त्री० मूर्वायाम् । छर्द- रीजा० द्व० भा० । देव्याम् । म- धुरसायाम् ॥ पृथक्त्वचायस्या : ॥
पृथक्पर्णी । स्त्री० पृश्निपर्ण्याम् । चि त्रपर्ण्याम् । पीटवनी० द्व० भा० । आकुल्या० द्व० भा० ॥ पृथक्अस मानंपर्णमस्या : । पाककर्णेतिङीष् ॥

पृथगात्मता । स्त्री० विवेके । व्यक्तौ ॥ पृथगात्मायस्य । तस्याभाव : । त ल् । तलन्तंस्त्रियाम् ॥
पृथगात्मिका । स्त्री० व्यक्तौ ॥
पृथग्जन : । पुं० मूर्खे ॥ नीचे । अधमे ॥ पृथक्कार्यीजन : असभ्य- त्वात्पृथग्जन: । शाकपार्थिवादि: ॥ सज्जनेभ्य : पृथग्भूतोजनोवा ॥ त्रि० पापिनि । भिन्नलोके ॥
पृथग्रूप : । त्रि० बहुविधे । पृथ ग्रूपमस्य ॥
पृथग्वर्त्मात्मा । पुं० वायौ । पृथक्- नानाविधंवर्त्म संचरणमात्मास्वभा वोऽस्य ॥
पृथग्वाद : । पुं० वैतिनि । पृथक् नानावस्तु० वृत्ते वंवदनंयस्य ॥
पृथग्विध : । त्रि० नानारूपे । पृथक् धर्माधर्मादिसाधनवैचित्र्येण० पर स्परविलक्षणाविधायस्य ॥
पृथग्बीज : । पुं० भल्लातके ।
पृथक् । भिन्ने । विलक्षणे । प्रथयति । प्रथ० । प्रथ: कित्सम्प्रसारणञ्च स्यजि : ॥
पृथवी । स्त्री० भुवि । पृथिव्याम् । प्रथते । प्रथविस्तारे । प्रथे : षवन् सम्प्रसारणञ्चेत्यके । षित्वान्ङीष् ॥
पृथा । स्त्री० कुन्त्याम् । वसुदेवस्वस रि । पाण्डो : पत्न्याम् ॥
पृथाजः । पुं० कुन्तीपुत्रे । युधिष्ठि

स्त्रीभार्यौ । पृथायाः पृथायांवा जातः स्त्री० । ढः ॥ अर्जुनपार्थे ॥

पृथापतिः । पुं० पाण्डुनृपे ॥ पृथायाःपतिः ॥

पृथिका । स्त्री० शतपद्याम् ॥

पृथिवी । स्त्री० गोरक्ष्याम् । क्ष्मायाम् । भूमौ । शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्रादुत्पन्नायां शब्दस्पर्शरूपरसगन्धगुणायाम् ॥ पृथिवीपञ्चसंभूतं घ्राणञ्चाध्यात्ममुच्यते । अधिभूतं तथा गन्धो वायुश्चाधिदैवतम् ॥ न्यायमतेन पृथिवीविभजते । गन्धवती पृथिवी । सा द्विधा । नित्याऽनित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा । पुनस्त्रिविधा । शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्त्ति । विषयो मृत्पाषाणादिः । इति ॥ प्रथते । प्रथ विस्तारे । प्रथेः षिवन् सम्प्रसारणञ्च । ङीष् ॥ प्राणप्रदानात् स पृथुर्यस्माद्भूमेरभूत् पिता । ततस्तु पृथिवीसंज्ञामवापाखिलधारिणी ॥ गन्धो घ्राणेन्द्रियं चापि काठिन्यं गौरवं तथा । वसुन्धरागुणा एते गदिता गुणवेदिभिः ॥ रविचन्द्रमसोर्यावन्मयूखैरवभासते । ससमुद्रसरिच्छैला तावती पृथिवी स्मृता ॥

पृथिवीक्षित् । पुं० राजनि ॥ पृथिव्यां क्षयति निवसति । क्षि० । क्विप् । तुक् ॥

पृथिवीगीता । स्त्री० विष्णुपुराणोक्त पृथिवीकथायाम् ॥

पृथिवीतीर्थम् । न० तीर्थविशेषे ॥

पृथिवीपतिः । पुं० भूपाले ॥ पृथिव्याःपतिः ॥ नाऋषिः कुरुते काव्यं नारुद्रो रुद्रमर्चति । नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः ॥ ऋषभाख्यौषधे ॥ कृतान्ते ॥

पृथिवीपालः । पुं० राज्ञि ।

पृथिवीशक्रः । पुं० राजनि ॥

पृथुः । पुं० अग्नौ । त्रेतायुगे सूर्यवंशीयपञ्चमनृपे । वेननृपस्य दक्षिणकरमथनाज्जाते । प्रजारञ्जनाद्राजोपाधिं प्राप्ते ॥ पृथते । प्रथ ख्याते । प्रथिम्रदीति कुः सम्प्रसारणञ्च ॥ श्योनाकवि० ॥ स्त्री० त्वक्पत्र्याम् । हिङ्गुपत्र्याम् ॥ कृष्णजीरके अहिफेने० । त्रि० । महति । विस्तीर्णे ॥ स्थूले ॥ निपुणे ॥

पृथुकः । पुं० चिपिटे । चिड्डा० इ० भा० ॥ यथा । शालयः सतुषा आर्द्रा भृष्टाः स्फुटितास्ततः । कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुकाअपि ॥ पृथुका गुरवो वातनाशनाः श्लेष्मलाअपि । सक्षीरा बृंहणा वृष्या बल्याभिन्नमलाश्च ते ॥ पृथु

रैव। संज्ञायांकन् ॥ यद्वा प्रथते ॥ प्रथप्रख्याने। पर्थयति०पथ्यं तेवा। पृथुप्रक्षेपे। चु०। अर्भकपृथुकेति पृथेर्वाकुकन्०प्रथे:सम्प्रसारणञ्च॥ यद्वा। पृथुकायति। कैशब्दे। आतइतिक: ॥ त्रि० शिशौ। अर्भके॥

पृथुका। स्त्री० हिङ्गुपत्र्याम्॥ बालिकायाम्॥

पृथुकोल:। पुं० राजबदरे॥

पृथुच्छद:। पुं० हरिदर्भे॥ त्रि० बृहत्पत्रे॥

पृथुपत्र:। पुं० रक्तलशुने॥ हरिदर्भे॥

पृथुपलाशिका। स्त्री० शट्याम्॥

पृथुरोमा। पुं० मत्स्ये॥ पृथूनि महान्तिरोमाण्यस्य। रोमशब्देनपक्षोच्यतेतिस्वामी। बल्कलमितिसर्वधर:॥ त्रि० बृहल्लोमयुक्ते॥

पृथुल:। त्रि० विशाले॥ पृथुप्रथुत्वमस्यास्ति। सि०लच्॥ पृथुपृथुत्वंलातिवा। क:॥

पृथुला। स्त्री० हिङ्गुपत्र्याम्॥ टाप्

पृथुशिम्ब:। पुं० श्योनाकप्रभेदे॥

पृथुशेखर:। पुं० पर्वते॥ पृथुर्महान्शेखरोऽस्य॥

पृथुसेन:। पुं० राज्ञि॥ पृथ्वीसेनायस्य॥

पृथुस्कन्ध:। पुं० शूकरे॥

पृथूदकम्। न० तीर्थविशेषे:प

पृथूदर:। पुं० मेषे॥ त्रि० बृहत्कुक्षौ॥

पृथ्वी। स्त्री० भूमौ। अचलायाम्। धरायाम्॥ स॥ त्वहत्याम्कपत्र्याम् हिङ्गु॥त्र्याम्॥ कृष्णजीरके॥ बृहत्ताईन्मातरि॥ बृहदेलायाम्॥ पुनर्नवायाम्॥ प्रथते प्रथविस्तारे० प्रख्यानेवा। प्रथिम्रदिभ्रस्जांसम्प्रसारणमितिकु:। वोतोगुणवचनादितिङीष्॥ वर्णवृत्तविशेषे। तल्लक्षणं यथा। जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति॥ अपिच। पयोधरपयुतास्फुरत्कनकयुग्मताटङ्किनीसुवर्णरुचिकङ्कणाललितभावबन्नूपुरा। सुवर्णरुचिरालसच्चवणरूपवत्कुण्डलाभुजङ्गपतिवर्णिताहरतिहन्तपृथ्वीमम॥ यथा। चताधरतटीघनस्वसितमङ्गरागव्ययोरशोरपिचशोचिमाभवतिकारणादन्यत:। इदंतवपरप्रियानिभृतसङ्गमव्यञ्जकंमुखेयदिदमञ्जनंरहसिचार्द्धचन्द्रं गले॥

पृथ्वीका। स्त्री०बृहदेलायाम्॥ कृष्णजीरके॥ कलाजाज्याम्॥ हिङ्गुपत्र्याम्॥ प्रथते। प्रथप्रख्याने। फर्फरीकादयश्चेतिसाधु:॥

पृथ्वीकुरबक:। पुं० श्वेतमन्दारे॥

पृथ्वीजम्। न० गडलवणे॥

पृदाकुः। पुं० वृश्चिके ॥ व्याघ्रे ॥ सर्पे ॥ चित्रके ॥ पर्दते । पर्द० । पर्देर्निर्ह्रस्व सारणमल्लोपश्च तिकाकुप्रत्ययः ॥
पृश्निः। स्त्री० रश्मौ ॥ त्रि० अल्पतनौ ॥ स्पृशति स्पृश्यते वा । स्पृश संस्पर्शे । घृणिपृश्नीति साधुः ॥ पृच्छति० पृच्छ्यते वा । पर्षति० पृष्यते वा । प्रच्छ ज्ञीप्सायाम् । पृषु सेचने वा । पूर्ववत्साधुः ॥
पृश्निका। स्त्री० कुम्भिकायाम् ॥
पृश्निगर्भः। पुं० गदाग्रजे । श्रीकृष्णे ॥
पृश्निपर्णी। स्त्री० पृथक्पर्ण्याम् । अङ्घ्रिवल्लिकायाम् । चक्रौत्० इ० पिठवनि० इ० च० भा० । चाकुलिया० इ० गौ० भा० ॥ पृश्निपर्णी त्रिदोषघ्नी वृष्योष्णामधुरासरा । हन्तिदाहज्वरश्वासरक्तातीसारतृड्वमीः ॥ पृश्निरल्पं पर्णमस्याः । पाककर्णेतिङीष् ॥
पृश्निभद्रः। पुं० श्रीकृष्णे ॥
पृश्निशृङ्गः। पुं० विष्णौ ॥ गणेशे ॥
पृश्नी। स्त्री० वारिपर्ण्याम् ॥
पृषत्। पुं० मृगे ॥ न० विन्दौ ॥ त्रि श्वेतविन्दुयुक्ते ॥ पर्षति । पृषु सेचने । वर्त्तमाने पृषद्बृहन्महदिति अतिप्रत्ययो गुणाभावश्च निपात्यते । शतृवदस्य कार्यम् ॥
पृषतः। पुं० पृषाकमृगे । चित्रमृगे ॥ यथा । पृषतश्चन्द्रविन्दुः स्याद्धरिणात्किञ्चिदल्पकः ॥ पृषतस्तु भवेत्स्वादुर्ग्राहकः शीतलो लघुः । दीपनो रोचनः श्वासज्वरदोषक्षयास्रजित् ॥ इति ॥ विन्दौ ॥ त्रि० श्वेतविन्दुयुक्ते ॥ पर्षति । पृषु० । पृषिरञ्जिभ्यां कित् इत्यतच् ॥ यद्वा । पृषताः विन्दवः सन्त्यस्य । अर्शआद्यच् ॥
पृषताम्पतिः। पुं० वायौ ॥
पृषताश्वः। पुं० वायौ । अनिले ॥ पृषतो मृगविशेषोऽश्वो वाहनमस्य ॥
पृषती। स्त्री० मृग्याम् ॥
पृषत्कः। पुं० वाणे । शरे ॥ पर्षति पृषु० । लटः शतृ । संज्ञापूर्वकत्वान्नगुणः ॥ यद्वा । वर्त्तमाने पृषन्महदिति साधुः स्वार्थेकन् ॥
पृषदश्वः। पुं० गन्धवहे । पवने । वायौ ॥ पृषन्मृगभेदोऽश्वो वाहनमस्य ॥ पृषतामश्वकणानामश्ववद्वेति वा ॥
पृषदाज्यम्। न० सदध्याज्ये । दधिमिश्रितघृते ॥ पृषच्च तदाज्यञ्च ॥ यद्वा । पृषद्भिः सहितमाज्यम् ॥
पृषद्बलः। पुं० वायुश्वे ॥
पृषन्तिः। पुं० विन्दौ ॥ यथा । पयः पृषन्तिभिः स्पृष्टा वान्ति वाताः शनैः शनैरिति जाम्बवतीविजयकाव्यम् ॥
पृषभाषा। स्त्री० इन्द्रपुर्याम् ॥

पृषाकरा । स्त्री० क्षुद्राश्मनि । वट खराइ० भा० ॥

पृषातकम् । न० सदध्याज्ये ॥

पृष्टम् । न० सामगानांमाध्यन्दिन सवनेगीयमानस्तोत्राणांनामधेये ॥ त्रि० कृतप्रश्ने । उपामन्त्रिते ॥ पृच्छ्:क्त:॥

पृष्टव्य : । त्रि० जिज्ञासिते ॥

पृष्ठम् । न० शरीरपश्चाद्भागे । पार्श्व स्थाने । पीठ०इ०भा० ॥ अस्यशुभाशुभलक्षणंयथा । सुस्निग्धंमांसलंपृष्ठमभग्नञ्चाप्यरोमशम् । सधमानांविपर्यस्तं निर्द्धनानांप्रकीर्त्तितमितिसमुद्र:॥ चरममात्रे ॥ पृष्यते : पृषु० । तिथपृष्ठगूथेति साधु ॥ स्तोत्रविशेषेपिपृष्ठम्० त्रि चाधिकरणे० पृष्ठै: स्तुवतइत्यादौ तथानिर्णयात् ॥

पृष्ठग्रन्थि : । पुं० गडौ । कूब० इ० भा० ॥

पृष्ठत : । अ० पश्चात् । पृष्ठदेशे ॥ पृष्ठे इति । आद्यादित्वात्तसि: ॥

पृष्ठदृष्टि : । पुं० भल्लूके ॥

पृष्ठमांसाद : । त्रि० परोक्षे दोषाभिधायिनि ॥ वाक्याभिधायिनि ॥ इ० त्रिकाण्डशेष : ॥

पृष्ठमांसादनम् । न० परोक्षे दोषकीर्त्तने । त्रि० तद्वति ॥

पृष्ठवंश : । पुं० रीढके । पृष्ठास्थि नि ॥ सतुगर्भेमासमात्रे सम्भवति ॥

पृष्ठवह : । पुं० पृष्ठ्याश्वे ॥

पृष्ठवास्तु । न० गृहस्योपरिगृहे ॥

पृष्ठवाट्०ड् । पुं० युगपार्श्वगवृषे । पष्ठवाहिनि ॥

पृष्ठवाह : । पुं० }
पृष्ठवाहक : । पुं० } वृषे ॥

पृष्ठवाह्य : । पुं० भारवाहकवृषे । स्यौरिणि । पृष्ठ्ये ॥

पृष्ठशृङ्ग : । पुं० वनच्छागे ॥

पृष्ठशृङ्गी ०प शभीरो । सैरिभे ॥ षंढे । भीमसेने । वृकोदरे ॥

पृष्ठहायन : । पुं० धान्यविशेषे । मतङ्गजे ॥

पृष्ठी । पुं० मत्स्यविशेषे ॥

पृष्ठोदय : । पुं० राशिविशेषे ॥ मेषोवृष:कर्कटश्चधनुर्मकरएवच । पृष्ठोदया : षडेवैतेमीनश्चापितथैवच ॥

पृष्ठ्य : । पुं० स्यौरिणि । पृष्ठेनभारवहनशीलेघोटके । न० पृष्ठवृन्दे ॥ यज्ञविषयेऽद : स्मरन्ति ॥ पृष्ठानांसमूह : । पृष्ठायन् ॥ प्रशस्तमतिशयितंपृष्ठमस्य । अन्येष्वपीतियद्वा

पृष्णि : । पुं० सूर्ये ॥

पृष्णिका } स्त्री० } कत्तृणे । कुम्भ्याम् ॥
पृष्णी । }

पेचक : । पुं० उलूके । वायसाराती । कौशिके ॥ यूके ॥ गजलाङ्गूलमूले । तद्भूदाच्छादकमांसपिण्डवि

ग्रेषि ॥ पचति॰पच्यतेवा॰दुःक्खे न । लुपधम॰ ॥ पचिमच्योरिच्चो- पधायाइतिवुन् । अतइत्त्वम् । पु गन्ते तिगुणः पर्यङ्के ॰ मेघि॰ । यूके ॥
पेचकी । पुं॰ हस्तिनि ॥
पेचिलः । पुं॰ गजे । हस्तिनि ॥
पेचु । न॰ पेचुल्याम् ॥
पेचुकम् । न॰ नाडीचशाके । पेचुल्या म् ॥ त्रिकाण्डशेषेकेचुकमितिपाठः
पेचुली । स्त्री॰ पेचुनि । नाडीचशाके
पेटः । पुं॰ प्रहस्ते । पेटति । पिट॰ । प॰ अच् ॥
पेटकः । पुं॰ न॰ पिटके । पुस्तका दीनांमञ्जूषायाम् । पिटार॰ इ॰ भा॰ ॥ चि॰ कदम्बके । समूहे ॥ पेटति । पिटशब्दसंघातयोः । एवुल् ॥
पेटाकः । पुं॰ पेडायाम् । पेटके ॥
पेटिका । स्त्री॰ वृक्षविशेषे॰ । कुवेरा च्याम् । कृष्णहन्तिकायाम् ॥
पेटी । चि॰ पेटके ॥
पेडा । स्त्री॰ पेटके । मञ्जूषायाम् । हहत्पेटाके ॥ पिण्डते । पिडिसं- घाते । प॰ अच् । अनित्यत्वान्नन् स् ॥
पेत्वम् । न॰ अमृते । घृते । पीयते । पा॰ । अन्येभ्योपिदृश्यतइति॰ इत्वन् ॥
पेपीयमानः । चि॰ अत्यासक्त्यापीय- माने ॥
पेयम् । न॰ पयसि । जले ॥ दुग्धे ॥ मद्ये ॥ अष्टविधान्नान्तर्गतान्नवि॰। यथा।भोज्यंपेयंतथाचूष्यंलेह्यंखाद्यंच चर्वणम् । निष्यंपञ्च्वभक्ष्यंस्याद- न्नमष्टविधंस्मृतम् ॥ इ॰ वा॰ नि॰ ॥ चि॰ पानयोग्यद्रव्ये । पातव्ये ॥ पातुंयोग्यम् । पा॰ । यत् । ईद्यति । गुण ः ॥
पेया । स्त्री॰ आाणायाम् ॥ अच्छमण्डे ॥ सिक्थसमन्वितपेयद्रव्ये ॥ पेया विधिर्यथा । चतुर्दशगुणेनीरेरक्त शाल्यादिभिः कृता । द्रवाधिका- स्वल्पसिक्थापेयाप्रोक्ताभिषग्वरैः ॥ सातिलघ्वीग्राहिणीचधातुपुष्टिविधा यिनी ॥ स्वेदाग्निजननीक्लेयावात- वर्चोनुलोमिनी । शुण्ठीसैंधवसंयु क्तादीपनीपाचनीचसा ॥ आमशूल हरीरुच्याव्याधिबन्धविनाशिनी ॥ पातुंयोग्या । पा॰ । यत् । ईद्गुणौ । टाप् ॥
पेयूषः । पुं॰ न॰ अमृते ॥ नव्यदु- ग्धे । सप्तदिवसावधिक्षीरे ॥ आस न्नराचप्रभवंक्षीरंपेयूषउच्यते ॥ पीय ते॰पीयतेऽनेनवा । पीयइतिसौ त्रोधातुः प्रीतौ । पीयेरूषन् । बहु लवचनात्पक्षेगुणः ॥ अग्निसंयो- गात्कठिनतांगतेनवप्रसूतायाःगोः क्षीरे ॥ क्षीरंतत्कालसूतायाघनं-

पीयूषमुच्यते ॥ नव्यघृते ॥

पेरु : । पुं० सूर्य्ये ॥ वह्नौ ॥ समुद्रे ॥ पीयते । पीङ् पाने । निपीभ्यां रु : ॥

पेरोजम् । न० उपरत्नवि० । पेरजी । पिरोजा० इ० भा० ॥ तद्द्विविधम् । भस्माङ्गं हरितञ्च । तस्यगुणा : । पेरोजंसुकषायंस्यान्मधुरंदीपनंपरम् । स्थावरंजंगमञ्चैवसंयोगाच्चयद्विषम् ॥ तत्सर्वंनाशयेच्छीघ्रंशूलंभूतादिदोषजम् । पाठान्तरम् यथा ॥ पेरोजंसुकषायंस्यान्मधुरंदीपनंहयो: । स्थावरादिविषघ्नं स्याद्धरितञ्चापरं शृणु ॥ शीताङ्गंनाशयेच्छीघ्रंशूलंतिमिरभूतजम् ॥ इ० रा० नि० ॥

पेलम् । न० ग्रण्डकोषे ॥

पेलवम् । त्रि० विरले ॥ अत्रसावकाशत्वंप्रकार : ॥ पेलनम् । पिलक्षेपणे । घञ् । पेलोस्यास्ति । अन्येष्योपीतिव : ॥ कोमले कृशे ॥

पेवलि : । स्त्री० नृत्यविशेषे ॥ यथा । ताण्डवञ्चतथालास्यं द्विविधंनृत्यमुच्यते । पेवलिर्बहुरूपाचताण्डवंद्विविधंमतम् ॥ अङ्गविक्षेपबाहुल्यं तथाभिनयशून्यता । यत्रसापेवलिस्तस्या : संज्ञादेशीतिलोकत : ॥ छेदनंभेदनंयत्रबहुरूपासुखावली ॥ ताण्डवंबहुरूपन्तद्दारुणागलमुद्धतमिति ॥

पेशलम् । न० सौकुमार्य्ये ॥ त्रि० रुचिरे । रम्ये । चारौ । सुन्दरे ॥ दक्षे । कुशले । चतुरे ॥ कोमले ॥ पिशअवयवे । भावेघञ् । पेशंलाति । ला० । क : ॥ वा० पिशेरलच्वा ॥ पेशोस्यास्ति । सिध्मादित्वालच्वा ॥ धूर्त्ते ॥ कर्म्मणामकसावाचावपुषाचशोभनत्वात् । पेशलोविष्णुर्वासुदेव : ॥ तथाविधोन्योपि ॥

पेश : । न० रूपे ॥

पेशस्कृत् । पुं० हस्ते ॥ कीटवि० । किमिरके० इ० गौ० भा० ॥

पेशि : । पुं० शतकोटौ । वज्रे ॥ स्त्री० अण्डे ॥ पिंशिअवयवे । हपिशिरुहिवृतीत्यादिना० इन् ॥ मांसविदले ॥

पेशी । स्त्री० सुपक्वकलिके ॥ मांसाम् ॥ अण्डभेदे ॥ कृदिकारादक्तिन इतिङीष् । गौरादिर्वा ॥ पिशाच्याम् ॥ राक्षसीभेदे ॥ नदीविशेषे ॥

पेशीकोष : । पुं० पक्षिडिम्बे । अण्डे ॥ पेशीनांमांसखण्डानां कोषोभाण्डागारइतिस्वामी ॥

पेषणम् । न० चूर्णने । पिष्लृसंचूर्णने भावेल्युट् ॥ खले ॥ स्नुहीद्रुमे ॥

पेषणि : । स्त्री० ⎫ पेषणशिलायाम् ।
पेषणी : । ⎭ दृशदुपलात्मि-

कायाम् । पट्टे । ग्रहकच्छपे । सि
ल० द्व० भा० ॥
पैत्रल : । त्रि० पैशले ॥
पैषाक : । पुं० पैषस्थाम् ॥
पैङ्गुष : । पुं० कर्षे ॥
पैठर : । त्रि० उद्ध्ये । स्थालीपक्वमां
सादौ ॥ पिठरेसंस्कृतम् । संस्कृतंभक्षा
इत्यण् ॥
पैठीनसि : । पुं० स्मृतिकारकेमुनि
विशेषे ॥
पैण्डिन्यम् । न० भैक्षजीविकायाम् ॥
पैतामहम् । त्रि० पित्र्ये । पितामह
सम्बन्धिधनादौ । पितामहस्येदम्
। तस्येदमित्यण् । स्त्रियांपैतामही
पैतृकम् । त्रि० पितृसम्बन्धिनिधनादौ
। सुखिनस्योयतैयचसदेश : खलुपै
तृक : ॥ पितुरागतम् । पितुर्यच्चे
तिचकाराट्ठञ् ॥ ङीपि०पैतृकीवि
द्या ॥
पैतृकभूमि : स्त्री० । पितृसम्बन्धिस्थाने ॥
पैतृष्वसेय : । त्रि० पितुर्भगिनीसन्त
तौ ॥ पितृष्वसुरपत्यम् । ढकिलोपः
। अतएवज्ञापकाड्ढक् । स्त्रियांपैतृ
ष्वसेयी ॥
पैतृष्वस्रीय : । त्रि० पितुर्भागिनेये ।
पैतृष्वसेये ॥ पितृष्वसुरपत्यम् ।
पितृष्वसुश्छण् ॥
पैत्त : । त्रि० पैत्तिके ॥
पैत्तिकम् । त्रि० पित्तजव्याधौ । त्रि-

त्तसम्भवे । पित्तस्यशमनंकोपनंवा
वातपित्तश्लेष्मभ्य : शमनकोपनयो
रितिठञ् ॥
पैत्रम् । न० पितृतीर्थे । तर्जन्यंगुष्ठयो
र्मध्ये ॥ पितॄणामिदम् । तस्येद
मित्यण् ॥ त्रि० पितृसम्बन्धिनि ॥
पैत्राहोरात्र : । पुं० पितृलोकस्यदि
वारात्रौ । दर्शमासे । कृष्णपक्ष :
पितॄणांदिनम्०शुक्लपक्षोरात्रि : ।
पितॄणामयम्०पैत्र : । पैत्रश्चासा
वहोरात्रश्च ॥
पैत्र्य : । पुं० दैवसर्गप्रभेदे ॥
पैप्पलम् । त्रि० पिप्पलकाष्ठे ॥ पि-
प्पलभस्मनि ॥ पिप्पलस्यावयवोवि
कारोवा । अवयवेचेत्यण् ॥
पैल : । पुं० ऋषिविशेषे । ऋग्वेदधा
रकेव्यासशिष्ये ॥ पीलायाअपत्यम्
। पीलायावेत्यण् ॥
पैलेय : । पुं० पैले ॥ पीलायाअपत्य
म् । अणभावे० द्व्यच इति० ढक् ॥
पैशाच : । पुं० अष्टप्रकारविवाहान्त
र्गताष्टमविवाहे ॥ पैशाच : कन्य-
कांछलात् । छलमाहमनु : । सुप्तां
मत्तांप्रमत्तांवारहोयत्रोपगच्छति ।
सपापिष्ठोविवाहानांपैशाचश्चाष्टमो
धम : ॥ पिशाचस्यायम् । अण् ॥
पिशाचएववा । स्वार्थिक : प्रज्ञाद्य
ण् ॥ दैवसर्गविशेषे ॥ त्रि० पिशाच
सम्बन्धिनि ॥

पैशाचिक: । त्रि० पिशाचसम्बन्धिनि ॥

पैशुनम् । न० परस्मै परोक्षपरदोषप्रकाशने ॥ पिशुनस्य कर्मभावोवा । यु० । अण्० ॥

पैशुन्यम् । न० अविज्ञातदोषाविष्करणे । पिशुनतायाम् । खलतायाम् ॥ पिशुनस्य दुर्जनस्य कर्मभावोवा । ब्रा० ष्यञ् ॥ परोक्षेपरदूषणकथने ॥ गुरुनृपतिबन्धुभ्रातृमित्रसकाशेऽर्थोपघातार्थं दोषोपाख्यानं पैशुन्यमितिवदन्ति ॥

पैष्ट: । त्रि० पिष्टसम्बन्धिनि ॥

पैष्टिकम् । न० मद्यविशेषे ॥ पिष्टानां समूहे ॥

पैष्टी । स्त्री० विविधधान्यविकारजायांमदिरायाम् । वारुण्याम् ॥ पैष्टीकटूष्णतीक्ष्णास्वादोषध्नीडीसमापरा । वातहृत्कफकृच्छोषतृत्पित्तकृन्मोहनीचसा ॥ पिष्टस्येयम् । तस्येदमित्यण् । ङीप्

पोगण्ड: । पुं० बालके ॥ बालआषोडषाद्वर्षात्पोगण्डश्चापिशब्दित: इतिनारद: ॥ दशवर्षीयबालके । त्रि० विकलाङ्गे ॥ पवते०पुनाति वा । विच् । पोर्गण्डएकदेशोस्य ॥

पोट: । पुं० वेश्मभूमौ । वास्तौ ॥

पोटगल: । पुं०नले । नरकट०नरसल० इ० भा० ॥ काशे । इक्षुगन्धायाम् । कांस० इ० भा० ॥ मत्स्यविशेषे ॥ पोटेनसंश्लेषेणगलति । गलअदने०स्रवणेच । अच् ॥

पोटा । स्त्री० स्त्रीपुंसलक्षणायाम् । स्त्रीपुंसयो: स्तनश्मश्रुादि चिह्नयुक्तायाम्योषिति ॥ पोटयति । पुट भाषार्थश्चुरादि: । पचाद्यच् ॥ दास्यां ॥

पोट्टली । स्त्री० पोट्टलिकायाम् । पोटली० इ० भा० ॥ यथा । शुद्ध्यर्थं त्रिफलाक्काथेगुडूच्या: क्काथएववा । दोलायन्त्रे पुर: पाच्य: पोट्टल्यावस्त्रबद्धया ॥

पोडु: । पुं० कपालास्थितले ॥

पोत: । पुं शिशौ ॥ वस्त्रे । समुद्रतरणार्थेनौकाविशेषे । समुद्रयाने । वार्वटे । जहाँजा० जहाज० इ० आधुनिकभाषा ॥ यथा । समुद्रयानेरत्नानिमहामौल्यानिसाधुभि: । रत्नपारीक्षकै: सार्द्धमानयिष्ये बहूनि च ॥ शुकेनसहसंप्राप्तोमहान्तं लवणार्णवम् । पोतारूढास्तत: सर्वे पोतवाहैरुपासिता: ॥ अपरेदुस्तरेऽगाधेयांतिवेगेननिस्त्वरा: । इ० वाराहेगोकर्णमाहात्म्याध्याय: ॥ पोतोदुस्तरवारिराशितरणेदीपोन्धकारागमे इत्यादि ॥ गृहस्थाने । पोता०इ० गौ० भा० ॥ वाससि ॥ दशवर्षीयगजे ॥ पुनाति०पूयते

वा । पूञ् । इसिसृञिधिस्त्रितन् ॥ यद्वा । पवति । पूङ् । पूर्ववत्तन् ॥

पोतकी । स्त्री० श्यामायाम् । सौनचिडी० इ० भा० ॥ पूतिकायाम् उपोदिकायाम् । मालवे० अमृतवल्लरीतिप्रसिद्धा । पोईशाक इ०भा० ॥ पोतकीशीतलास्निग्धाश्लेष्मलावातपित्तनुत् । अकंठ्यापिच्छलानिद्राशुक्रदारक्तपित्तजित् ॥ बलदारुचिकृत् पथ्या बृंहणी तृप्तिकारिणी ॥

पोतज : । पुं० कुञ्जरादौ ॥

पोतवणिक् । पुं० सांयात्रिके । नावा नानावाणिज्यकरे ॥ पोतेनोपलक्षितोवणिक् ॥

पोतवणिक्प्रिय : । पुं० बुद्धप्रभेदे ॥ पोतवणिज : प्रियायस्य : ॥

पोतरक्तक : । पुं० केलिपाके । पतवार० इ० भा० ॥ हालि० इ० गौ० भा० ॥

पोतवाह : । पुं० नियामके । गुणवृक्षोपरिस्थितेनाविकवि० ॥ वहित्रवाहके । दाँडी० इ० गौ० भा० ॥ पोतंवहति । वह० । कर्म्मण्यण् ॥

पोताच्छादनम् । न० वस्त्रकुट्टिमे ॥

पोताधानम् । न० क्षुद्राण्डमत्स्यसंघाते । पोना० इ० गौ० भा० ॥ पोतैवहित्रैआधीयन्ते । धाञ: कर्मणिल्युट् ॥ यद्वा । पोतोऽर्भक: आधीयतेऽत्र ॥ अधिकरणेल्युट् ॥

पोतास : । पुं० कर्पूरविशेषे ॥

पोतिका । स्त्री० शतपुष्पायाम् ॥ पूतिकायाम् ॥ मूलपोत्याम् ॥

पोती । स्त्री० पक्षिणांस्त्र्यपत्ये ॥ पोतस्थक्षुद्रनौकायाम् ॥ पोतात्वयसिप्रथम इतिङीप् ॥

पोता । पुं० ऋत्विजि ॥ पुनाति । पूञ् । तृन्विधावृत्विक्षुचानुपसर्गस्येतितृन् ॥ नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृदुहितृ इति साधु : ॥ विष्णौ ॥

पोत्रम् । न० वस्त्रे ॥ शूकरमुखाग्रे ॥ हलस्याग्रे । लाङ्गलाग्रे ॥ पूयतेऽनेन । पूञ् । हलसूकरयो: पुवइतिष्ट्रन् ॥ वहित्रे ॥

पोत्रायुध : । पुं० शूकरे ॥

पोत्री । पुं० कोले । सूकरे ॥ पोत्रंमुखाग्रमस्त्यस्य । अतइनि : ॥

पोत्रिरथा । स्त्री० जिनशक्तिवि० । त्रिमुखायाम् । वज्रकालिकायाम् । मायादेव्याम् ॥

पोलिका । स्त्री० पिष्टकविशेषे ॥ यथा । कुर्यात्समितयातीवतन्वींपर्पटिकांतत : । स्वेदयेत्तप्तकेतान्तुपोलिकांजगदुर्बुधा : ॥ तांखादेत्सर्पिषाकायुक्तांतस्यामण्डकवद्गुणा : ॥

पोलिन्द : । नौकावयवविशेषे । पादा

रक्षी ॥

पोली । स्त्री० दिष्टकवि० । पूपाख्या म् । चर्पट्याम् ॥

पोष : । पुं० पोषणे ॥

पोषक : । त्रि० पालनकर्त्तरि ॥

पोषणम् । न० पुष्टौ । पुषपुष्टौ ॥ ल्युट् ॥ भृतौ ॥

पोषयित्नु : । पुं० कोकिले ॥ भर्त्तरि ॥ त्रिषु ॥ त्रि० पोषके । पोषणक र्त्तरि ॥ पोषयति । पुष० । स्तनि हृषिपुषीत्यादिना० इत्नुच् ॥

पोष्टा । पुं० पूतीके । काँटाकरञ्ज० इ० गौ० भा० ॥ त्रि० पोषणकर्त रि ॥ पुष्णाति । पुष० । तृच् ॥

पोष्टृवर : । त्रि० पोषकश्रेष्ठे ॥

पोष्य : । त्रि० प्रतिपाल्ये । पोषणी ये । अवश्यसम्वर्धनीये पोष्यवर्गे ॥

पोष्यपुत्र : । पुं० । पुत्रप्रतिनिधौपाल नात्सुतत्वंप्राप्ते ॥

पोष्यवर्ग : । पुं० परिजने । प्रतिपाल नीयगणे ॥ यथा मातापितागुरु : पत्नीत्वपत्यानिसमाश्रिता : । अभ्या गतोऽतिथिश्चाग्नि : पोष्यवर्गाउ- दीमत ॥

अपिच । मातापितागुरुर्भ्राताप्रजा: दीना : समाश्रिता : । अभ्यागतो तिथिश्चाग्नि : पोष्यवर्गउदाहृत : ॥ भरणंपोष्यवर्गस्य प्रशस्तं स्वर्गसाधन म् । नरकंपीडनेचास्यतस्माद्यत्नेन तंभरेत् ॥ पोष्याणांवर्ग : ॥

पौंसवनम् । न० पुंसवनसंस्कारे ॥

पौंस्नम् । न० पुंस्त्वे ॥ पुंसइदम् । स्त्रीपुंसाभ्यांनञ्स्नञौ भवनादिति स्नञ् ॥ त्रि० पुंसुभवे ॥ स्त्रियांपौं स्नी ॥

पौगण्डम् । न० पञ्चाब्दानन्तरंदशाब्द पर्यन्तायामवस्थायाम् ॥ यथा । कौमारंपञ्चमाब्दान्तंपौगण्डंदशमा वधि । कैशोरमापञ्चदशात्यौवन न्तुतत : परमिति ॥ आचार्यप्रमुखा नांहिपौन : पौन्येनिर्मितौ । यतो गण्डावस्थातेनपौगण्ड : सस्मृतोबु धैरित्युक्तेस्तदवस्थावति । त्रि० ॥

पौण्डरीकम् । न० प्रपौण्डरीके ॥ पु- ण्डरीकमिव । शर्करादिभ्योऽण् ॥

पौण्डर्यम् । न० ओषधीभेदे । स्थलप- द्मे । प्रपौण्डरीके ॥ पौण्डर्यंमधुरं तिक्तंकषायंशुक्रलंहिमम् । चक्षुष्यं मधुरंपाकेवर्ण्यंपित्तकफास्रनुत् ॥

पौण्ड्र : । पुं० चंदेली० इ० प्र० देशे ॥ भीमसेनस्यसङ्ख्ये ॥ पौंडा० इ० प्र० इक्षुविशेषे ॥ पुण्डाति । पुडिखण्डने । स्फायीतिरक् । प्र- ज्ञाद्यण् ॥

पौण्ड्रक : । पुं० श्वेतपौंडा० इ०प्र० इक्षौ ॥ वातपित्तप्रशमनोमधुरोर- सपाकयो : । सुशीतोबृंहणोबल्य : पौण्ड्रकोभीरुकस्तथा ॥ पौण्ड्रदेशो

इवैचाद्दौत्तचिये पश्चाद्विहितक्रिया लोपादिनाशूद्रत्वमापन्नेदस्युपदवा च्ये जात्यन्तरे ॥ शौण्डिकायाम्वै-श्याज्जातिजातिवि० । पुंडो० इ० गौ० भा० ॥ पुण्ड्रएव । स्वा० कन् ॥

पौण्ड्रवर्द्धन : । पुं० देशवि० । विहा र० इ० भा० ॥

पौण्ड्रक : । पुं० पुण्ड्रेचौ । सेव्ये । अतिरसे ॥

पौतिमाष्य : । पुं० वेदप्रसिद्धेऋषिवि शेषे ॥ पूतिमाषस्यगोत्रापत्यम् । गर्गादिभ्योयञ् ॥

पौत्तिकम् । न० घृतवर्णेमधुनि ॥ या कृष्णामशकोपमालघुतरा : प्रायो-महापिण्डिकावध्नानास्तरुकोटरा-न्तर्गता : पुष्पासवंकुर्वते । तास्तज् ज्ञैरिहपुत्तिकानिगदितस्ताभि:कृतं सर्पिषातुल्यंयन्मधुतद्वनेचरजनै : संकीर्तितंपौत्तिकम् ॥ पौत्तिकंमधु रूक्षोष्णंपित्तदाहास्रवातकृत् । वि दाहिमेहकृच्छ्रघ्नंग्रन्थ्यादिक्षतशो-षिषु ॥ पुत्तिकाभि: कृतम् । संज्ञा यामित्यण् ॥

पौत्र : । पुं० पुत्रस्यपुत्रे । नप्तरि । पोता० इ० नाती इ० भा० ॥ पु-त्रस्य०पुत्र्याश्चापत्यम् । अनृष्यानन्त र्येविदादिभ्योऽञ् ॥ न० पोतुर्भाव कर्मणो : ॥ उद्ग० अञ् ॥

पौत्रिकेय : । त्रि० पुत्रिकातनये ॥

पौत्री । स्त्री० पुत्रसुतायाम् । नप्त्र्या म् ॥ पुत्रस्यपुत्र्याश्चस्त्र्यपत्यम् । अञन्तत्वान्ङीप् ॥

पौन : । पुनिक : त्रि० पुन : पुनर्भ वे ॥ कालाट्ठञ् ॥

पौन : पुन्यम् । न० आभीक्ष्ण्ये । पु-न : पुनरित्यस्मिन्नर्थे ॥ पुन:पुनरि त्यस्यभाव : । ष्यञ् । अव्ययानांभ मात्रेटिलोपस्य०प्रातिपदिकार्थ उपसंख्यानमितिटिलोप : ॥

पौनरुक्तिक : । पुं० पुनरुक्तमधीयाने ॥ उ० ठक् ॥

पौनर्नवम् । न० पुनर्नवाशाके ॥

पौनर्भव : । पुं० द्वादशविधपुत्रान्तर्ग-तपुत्रवि० । पुनर्भूपुत्रे ॥ अपत्येर्थे ऽण् ॥ यापत्यावापरित्यक्ताविधवावा स्वयेच्छया । उत्पादयेत्पुनर्भूत्वास-पौनर्भवउच्यते ॥

पौरम् । न० कतृणे । रौहिषतृणे । रा मकर्पूर० इ० ख्याते ॥ त्रि० नागरे । पुरोद्भूते ॥ पुरेभवम् । तत्रभवइ त्यण् ॥

पौरक : । पुं० गृहवाह्योपवने ॥ नि-ष्कुटस्तुगृहारामोवाह्यारामस्तुपौर क : ॥ इतिहेमचन्द्र : ॥

पौरन्दर : । पुं० पुरन्दरापत्ये ॥ त्रि० पुरन्दरसम्बन्धिनि ॥ अण् ॥

पौरन्दरी । स्त्री०पुरन्दराधिष्ठितदिशि

पौरव : । पुं० दुष्यन्तनृपतौ ॥ पुरोरप

त्यम् । पूरोरण् ॥ पुरुवंशे ॥ य० । द्रुह्योस्तुतनयाभोजा अनोस्तुम्लेच्छजातय : । पुरोस्तुपौरवोवंशोयत्र जातोसिपार्थिवेतिमात्स्ये ३४ऽध्याय : ॥

पौरस्त्य : । त्रि० प्रथमे ॥ पुरोभव : । दक्षिणापश्चात्पुरसस्त्यक् ॥

पौराणिक : । पुं० पुराणज्ञे ॥ पुराणमधीतेवेदवा । आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेतिठक् ॥ लोकविदि ॥ पौराणिकोनिरुष्टिर्वालयो: वास्थितिर्वातत्त्वमित्याह । तत्कल्पनामात्रम् । सतोऽसतश्चोत्पत्त्यायभावस्यगौडपादैर्निर्णीतत्वात् ॥

पौराणिकी । स्त्री० पुराणोक्तायाम् ॥

पौरुषम् । न० पुरुषस्यभावे ॥ पुरुषस्यकर्मणि ॥ पुरुषस्यतेजसि ॥ आत्मसामर्थ्ये । यत्ने । उद्योगे । केनाप्युपायेनावश्यमिदंसम्पादयामि.त्येवंविधोत्साहरूपेनिर्वन्धे ॥ उच्छास्त्रंशास्त्रितञ्चेतिपौरुषंद्विविधंस्मृतम् । तत्रोच्छास्त्रमनर्थायपरमार्थायशास्त्रितम् ॥ उच्छास्त्रंपरस्त्रीगमनपरद्रव्यापहारादि । शास्त्रितंनित्यनैमित्तिकानुष्ठानादि । अनर्थोनरक : । अर्थेषुस्वर्गादिषुपरमोर्थोमोक्ष : ॥ पुरुषस्यकर्मभावोवा । प्राणभृज्जातीत्यञ् । युवादित्वादण्वा ॥ क्लीवाहिदैवमेवेवंप्रशंसन्ति-नपौरुषम् । दैवंपुरुषकारेणघ्नन्तिशूरा : सदोद्यमा : इत्यग्निपुराणम् ॥ त्रि० ऊर्द्ध्वविस्तृतदो:पाणिनृमाने । पुरुषपरिमाणे । पुरुषा० इ० भा० ॥ दोषौचपाणीचलत् ० ऊर्द्ध्वविस्तृतदो : पाणियेनस : तादृशोयेनस : तादृशोना० तस्ययन्मानंपरिमाणम् ॥ तेनवापुंसायन्मीयतेतत्र ॥ पुरुषप्रमाणमस्यपुरुषहस्तिभ्यामण्चेत्यण् ॥ पौरुषोनर:० पौरुषीनदी० पौरुषंसर : ॥

पौरुषेय : । पुं० पुरुषसङ्घे ॥ पुरुषस्यबधे ॥ पुरुषस्यपदान्तरे । पुरुषस्यस्थाने ॥ त्रि० आधुनिके । पुरुषेणकृते ॥ पुरुषस्यविकारे ॥ पुरुषस्यहिते ॥ पुरुषाद्वधविकारसमूहतेनकृतेष्वर्थेषु० सर्वपुरुषाभ्यांणढञाविति ठञ् ॥

पौरोगव: । त्रि० पाकशालाध्यक्षे । पुरोगा०इ०भा० ॥ पुर : पूजितोगौभूमि : पुरोगवी । गोरतद्धितलुकीतिटच् । तस्याध्यक्षम् । तस्येदमित्यण् ॥ यद्वा । पुर : प्रथमंयाच्यवस्तुषुगौर्नेत्रमस्य०पुरोगु: । गोस्त्रियोरितिह्रस्व : । तत: प्रज्ञाद्यण् ॥

पौरोडाश : । पुं० पुरोडाशे । पिष्टपिण्डे ॥ पुरोडाशएव । स्वार्थेऽण् ॥

पौरोडाशिक : । पुं० पुरोडाशिके ॥ पुरोडाशसहचरितोमन्त्र :-

पुरोडाश : । सएवपौरोडाश : । तस्यव्याख्यानस्तत्रभवोवा । पौरोडाशपुरोडाशात्ष्ठन् ॥
पौरोभाग्यम् । न० पुरोभागिन : कर्म्मणि ॥ ष्यञ् ॥
पौरोहित्यम् । न० पुरोहितस्यकर्म्म- भावयो : । पत्यन्तपुरोहितादिभ्यो यक् ॥
पौर्णमास: । पुं० पौर्णमास्यांक्रियमाणे यागविशेषे ॥ पौर्णमास्यांभव:। सन्धिवेलाद्यृतुनक्षत्रेभ्योण् ॥
पौर्णमासी । स्त्री० पूर्णिमायाम् ॥ पूर्णोमासोयस्याम्। बहुव्रीहौकृते० स्वार्थेण् । सास्मिन्पौर्णमासीति- निर्द्देशात् ॥ यद्वा । पूर्णमासोऽस्यांवर्त्तते०इति । पूर्णमासादण्- वक्तव्य : । इत्यण् । ङीप् ॥
पौर्वदेहिकम् । त्रि० पूर्वदेहभवे ॥
पौर्वपदिक : । त्रि० पूर्वपदग्राहिणि। पूर्वपदंगृह्णाति । पदोत्तरपदंगृह्णातीतिठक् ॥
पौर्वापर्यम् न०कार्यकारणभावे ॥ साध्यसाधनभावे ॥
पौर्वाह्णिकम् त्रि० पूर्वाह्णे भव:। विभाषापूर्वाह्णापराह्णाभ्यामिति पक्षेठञ् ॥
पौलस्त्य: । पुं० कुवेरे ॥ रावणे ॥ विभीषणे ॥ पुलस्तेर्गोत्रापत्यम् । गर्गादिभ्योयञ् ॥ बहुत्वे पुलस्तय: ॥ राक्षसे ॥
पौलि: । पुं० आपक्वे । भर्जितेहरितयवादौ ॥ पोलति । पुलमहत्त्वे । ज्वलादित्वाण: । पौलेननिर्वृत्त : । सुतङ्गमादित्वादिञ् ॥
पौलुषि: । पुं० सत्ययज्ञे ॥ पुलुषस्यापत्यम् । इञ् ॥
पौलोमी । स्त्री० इन्द्राण्याम् ॥ पुलोम्नोमुनेरपत्यंस्त्री । तस्यापत्यमित्यण् । गोत्रत्वेनजातित्वान्ङीष्॥
पौष : । पुं० तैषे । सहस्ये । हैमने ॥ तत्रजातफलम् । निगूढमन्त्र : सुकषाङ्गयष्टि : परोपकारीपितृविहीन : । कष्टान्वितार्थ व्ययकृद्विधिज्ञ : पौष : प्रसूत : पुरुष : सुधीर : ॥ पौषीपौर्णमास्यस्मिन् । सास्मिन्पौर्णमासीत्यण् ॥ न० महे ॥ युद्धे पुष्ययुक्तेन्हि ॥
पौषी । स्त्री० पुष्ययुक्त पौर्णमास्याम् ॥ पुष्येणयुक्तापौर्णमासी । नक्षत्रेणयुक्त : कालइत्यण् तिष्यपुष्ययोर्नक्षत्राणियलोप : । ङीप् ॥ पुष्येणयुक्तायांरात्रौ ॥
पौष्करम् । न० पुष्करमूले ॥ पौष्करंकटुकंतिक्तमुष्णंवातकफज्वरान् । हन्तिशोथ‚रुचिश्वासान्विशेषात् पार्श्वशूलनुत् ॥
पौष्करिणी । स्त्री० पुष्करिण्याम् ॥
पौष्टिकम् । न० पुष्ट्यु‚त्पादककर्मणि

॥ चौरसमयेगात्राच्छादनवस्त्रवि
शेषे। कावाङ्० ङ्० गौ० भा० ॥
पौष्ण : । पुं० सूर्यपुत्रे ॥ न० रेवती
नक्षत्रे ॥
पौष्पम्। वि० पुष्पनिर्मिते ॥
पौष्पकम्। न० धातुप्रभेदे। रीति
पुष्पे ॥ पुष्पस्यप्रतिकृति : । इवे
प्रतिकृताविति कन्। ततः स्वार्थे०
अण् ॥
पौष्पी। स्त्री० पुष्पपुरे। पटना० ङ्०
भा० ॥
प्याट्। अ० हे। भोः। सम्बोधने ॥
प्यायते। प्यैङ्वृद्धौ टप्रत्यय :
प्र। अ० प्रकर्षे ॥ गतादार्थे ॥ प्रथमादि
कर्मदीर्घेशभृशसम्भवदृप्तिषु। वियो
गशुद्धिशक्तीच्छाशान्तिपूजायदर्शने
॥ यथा आदिकर्मणिक्त:० प्रयात:
। दीर्घे० प्रबलामूषका : । ईशे०
प्रभुर्देशस्य। भृशार्थेप्रवदन्तिदाया
दा : । सम्भवे० हिमवतोगङ्गाप्रभ
वति। दृप्तौ० प्रभुक्तमन्नम्। वि
योगे० प्रोषित : शुद्धौप्रसन्नमुदक
म्। शक्तौ० प्रशक्तोविप्राय। इ
च्छायाम्० प्रार्थयते कन्याम्।
शान्तौ० प्रशान्तोग्नि : । पूजाया
म्० प्राञ्जलि : स्थित : अग्ये० प्र
बालम्। दर्शने प्रलोकयति।
इत्यर्थ : ॥
प्रकट : । त्रि० व्यक्ते। नि : सन्दिग्ध

भातीतिव्यवहारगोचरे। स्पष्टे ॥
उद्भूते ॥ सम्प्रोदश्चेतिप्रशब्दात्
स्वार्थेकटच् प्रत्यय : ॥
प्रकटित : । वि० प्रकाशिते ।
प्रकटोदितम्। न० विस्पष्टवाक्ये ॥
प्रकण्व : । पुं० देशविशेषे ॥
प्रकथनम्। न० प्रकर्षेणप्रतिपादने ॥
यथागाथा : प्रकुरुते। प्रकथयती
त्यर्थ : । गन्धनावक्षेपणेतिप्रकथने
आत्मनेपदम् ॥
प्रकम्पन : । पुं० वायौ ॥ नरकविशे
षे ॥ न० कम्पातिशये ॥
प्रकर : । पुं० संहतौ। सङ्घे ॥
विकीर्णकुसुमादिषु। न० जोङ्ग
के ॥ प्रकीर्यते कृविक्षेपे। ऋदो
रप् ॥
प्रकरणम्। न० प्रस्तावे ॥ यथा।
भोजनप्रकरणे सैन्धवमानयेतिलव
णे प्रतीतिगमनप्रकरणे तत्वश्चे
प्रतीतिर्भवतीति ॥ रूपकभेदे।
अभिनेयप्रकारे ॥ विश्रामे ॥ ग्रन्थ
सन्धौ। ग्रन्थस्यविच्छेदे ॥ तल्लक्षणं
यथा। शास्त्रैकदेशसम्बद्धंशास्त्र
कार्यान्तरेस्थितम्। आहु : प्रकर
णंनामग्रन्थभेदंविपश्चित : ॥ अत्र
मीमांसका : ॥ विनियोगविधे :
सहकारिभूतेषुषट्सुप्रमाणेषुचतु
र्थप्रमाणे ॥ उभयाकांक्षाप्रकरणम्।
यथा। प्रयाजादिषुसमिधोयजती

त्त्यादिवाक्येफलविशेषस्यानिर्देशात्
समिधायागेनभावयेदितिवोधानन्त-
रंकिमित्त्यस्त्युपकार्याकाङ्क्षा॰द-
र्शपूर्णमासवाक्येपिदर्शपूर्णमासा
भ्यांस्वर्गंभावयेदितिवोधानन्तरंकथ
मित्यस्त्युपकारकाकाङ्क्षा। इत्थं
चोभयाकाङ्क्षयाप्रयाजादीनांदर्श
पूर्णमासाङ्गत्त्वम्। तच्चप्रकरणं-
द्विविधम्॰महाप्रकरणमवान्तरप्रक
रणञ्चेति। तत्रमुख्यभावनासम्बन्धि
प्रकरणंमहाप्रकरणम्॰तेनचप्रयाजा-
दीनांदर्शपूर्णमासाङ्गत्त्वम्। एत-
च्चप्रकृतावेवोभयाकाङ्क्षायाः स-
म्भवात्। नतुविकृतौ॰तत्रप्रकृति-
वद्विकृतिःकर्त्तव्येत्यतिदेशेनक
थम्भावाकाङ्क्षायाउपशयेनापूर्वाङ्गा
नामप्युभयाकाङ्क्षयाविनियोगा-
सम्भवात्। तस्मादपूर्वाङ्गानांस्था-
नादेवविकृत्यर्थत्वमिति। अङ्गभा-
वनासम्बन्धिप्रकरणमवान्तरप्रकरण
म्। तेनचाभिक्रमणादीनांप्रयाजा-
द्यङ्गत्वम्। तच्चसन्दंशेनैवज्ञायते॰
तदभावेचाविशेषात्सर्वेषांफलभा
वनाकथम्भावेनग्रहणप्रसङ्गेनप्रधाना
ङ्गत्वापत्तेः। एकाङ्गानुवादेनविधी
यमानयोरप्यङ्गयोरन्तरालेविहित-
त्वंसन्दंशः। यथा॰अभिक्रमणं॰
तद्धिसमानयतउपभृतस्तेजोवाद्वित्या
दिनाप्रयाजानुवादेन॰किञ्चिदङ्गं-



विधायविधीयते॰तदनन्तरमपिप्र-
याजानुवादेनप्रयाजत्वम्॰यस्यैवंवि
दुषः प्रयाजाइज्यन्ते॰प्रैभ्योलोके-
भ्योभ्रातृव्यान्नुदते॰अभिक्रामंजुहो
त्यभिजित्यै इतितदनन्तरमपिप्र
याजानुवादेनयोवैप्रजानांमिथुनंवे-
देत्यादिनाकिञ्चिदङ्गंविधीयते। अ
तःप्रयाजाङ्गमध्येऽभिहितमभिक्रम
णंतदङ्गंप्रयाजैरपूर्वंकृत्वायागोप-
कारंभावयेदितिज्ञाते॰कथमेभिरपू
र्वंकर्त्तव्यमिति॰कथम्भावाकाङ्क्षा
याःसत्वात्। साचसन्दंशपतितै
रभिःक्रमणादिभिःशाम्यति।
नचाङ्गभावनायांकथम्भावाकाङ्क्षा
भावः। भावनासाम्येनतत्रापितत्
सम्भवात्। यदिदंप्रकरणंतत्क्रिया
याएवसाक्षाद्विनियोजकंद्रव्यगुणयो
स्तुतद्द्वारा। तथाहि॰यजेतस्वर्गका
मइत्यत्रफलभवनायांकथम्भावाका
ङ्क्षायाःसन्निधपठितमश्रूयमाणफ
लकंक्रिया- जातमुपकार्याकाङ्क्ष
येतिकर्त्तव्यतात्वेनाऽन्वेति॰ (*)
क्रियायाएवलोकेकथम्भावाकाङ्क्षा
यामन्वयदर्शनात्। नहिकुठारेणछि
न्द्यादित्यत्रकथम्भावाकाङ्क्षायाम-
नुच्चार्यमाणोपिहस्तोऽन्वेति॰किन्तु
हस्तेनोद्यम्यनिपात्येत्युद्यमननि
पातनेनएव॰हस्तस्तद्द्वारैवान्वेती
तिसार्वजनीनमेतत्। इदंचस्थाना

द्भ्यौबलवत् । अतएवाचेर्द्वौव्यति राजन्यमितिविदेवनादयोधर्माअभिधेचनीयसन्निधौपठितामपिस्थाना न्नतदङ्गम्०किन्तुप्रकरणाद्राजसूयाङ्गमितिमीमांसका : ॥

प्रकरणसमः । पुं० नैयायिकानांपदार्थावान्तरविशेषे ॥ तंलक्षयति । यस्मात्प्रकरणचिन्तासनिर्णयार्थमपदिष्ट : प्रकरणसम : ॥ ४७ ॥ सहेतुः स्वसाध्यस्यपरसाध्याभावस्यवा०निर्णयार्थमपदिष्ट : प्रयुक्त : प्रकरणसमउच्यते । सक्तः तुल्याकाङ्क्षया माह । यस्मात्प्रकरण पक्षप्रतिपक्षावितिभाष्यम् । साध्यतदभाववन्ताविविततदर्थः । तथाचनिर्णयार्थम् प्रयुक्तोहेतुर्यंचनिर्णयंजनयितुमशक्तस्तुल्यबलेनपरेणप्रतिबन्धात्०किन्तु धर्मिणःसाध्यवत्वंतदभाववत्वम्वेति चिन्तांजिज्ञासांप्रवर्त्तयतिसप्रकरणसम : । यद्वा प्रकृष्टंकरणंलिङ्गंपरामर्शो वा०कोहेतुरनयो : साधक: ० एतयो : क : परामर्श : प्रमेतिशायत्रजिज्ञासाभवतीत्यर्थ : । यस्मादित्यादितुवस्तुस्थितिमात्रम् । लक्षणन्तुतुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वंस्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शीवा । विरोधिपरामर्शस्यचहेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन । अन्यथाहेतोर्दुष्टत्वंनस्यात् । अयञ्चदशाविशेषेदोषइत्युक्त : सद्धेतोरपि विरोधिपरामर्शकालेदुष्टत्वमिष्टमेवेत्यवधेयम् ॥ ४७ ॥

प्रकरी । स्त्री० नाट्याङ्गे ॥ चत्वरभूमौ ॥

प्रकर्षः । पुं० विशेषे । अधिके ॥ उत्कर्षे ॥ यथा । गुणप्रकर्षेणजनोनुरज्यतेजनानुरागप्रभवाहिसम्पदः ॥ प्रकर्षणम् । कृष० । घञ् ॥

प्रकाण्डः पुं० न० विटपे ॥ तरोर्मूलशाखान्तरे । मूलादारभ्यशाखावधिदचे । स्कन्धे ॥ चि० प्रशस्ते ॥ प्रगत :काण्डोऽधमोयस्मात् । प्रशस्तोगौ : गोप्रकाण्ड । प्रकाण्डस्य रूढिशब्दत्वात्प्रशंसावचनैश्चेतिस समास : ॥ प्रकाण्डयति । कण्डिभेदने । चु० । एरच् । पृ० ॥ प्रकाम्यते । कमु०णिङ् । वरण्डादयश्चेतिडोरा॥

प्रकाण्डर : । पुं० द्रुमे ॥

प्रकामम् । अ० अतिशये ॥

प्रकामम् । चि० निकामे । यथेप्सिते ॥ प्रकमनम् । कमु० । घञ् ॥

प्रकार : । पुं० भेदे ॥ सामान्यस्यभेदकेविशेषे ॥ सादृश्ये ॥ प्रकरणम् । कृञोघञ् ॥

प्रकाश : । पुं० द्योते । आतपे ॥ स्फुटे । प्रकटे । उत्वणे । व्यक्ते ॥ प्रहासे ॥ बुद्धिपरिणामविशेषेविषयाकारे०दीपवत् । स्वविषयावरण

॥ नापूर्वंफलदंतस्मिन्मानाभावात्फलंपुनः ! ईशादप्युपपन्नत्वान्नैवापूर्वस्य कल्पकम् ॥ सेव्यादाज्ञः फलप्राप्तिर्दृश्यतेनत्त्वपूर्व्वतः । दानादिक्रिययासेव्यादीशात्तद्वत्फलंभवेत् ॥

फलप्रिया । स्त्री० प्रियङ्गौ ॥

फलभूमि : । स्त्री० कर्मफलभोगस्थाने ॥ यथा । भरतान्यैरावतानिविदेहाश्चकुरुन्विताः । वर्षाणिकर्म्मभूम्यः स्युः शेषाणिफलभूमयइति हेमचन्द्रः ॥

फलमुख्या । स्त्री० पिण्डखर्जूरे ॥ अजमोदायाम् ।

फलमुद्गरिका । स्त्री० पिण्डखर्जूरे ॥

फललक्षणा । स्त्री० प्रयोजनवत्यांलक्षणायाम् ॥ यथा व्यङ्ग्यस्यगूढागूढत्वाद्द्विधास्युः फललक्षणाः इति साहित्यदर्पणः ॥

फलवान् । त्रि० फलिनि । फलसहित वृक्षे ॥ फलिने ॥ फलवत् सन्निधावफलंतदङ्गम् ॥ फलान्यस्यसन्ति । मतुप् ॥

फल वर्त्तुलम् । न० कालिङ्गे ॥

फलविषय : । त्रि० फलव्याप्ये ॥ घनात्मनि ॥

फलवृन्तक : । पुं० पनसे ॥

फलव्याप्यत्वम् । न० वाह्येन्द्रियसन्निकृष्टार्थाकारवाद्यधीपरिणामावच्छिन्नचिदंशव्यक्तौ० प्राकट्याश्रयत्वे ॥ फलवृत्तिप्रतिविम्बितचिदाभासव्यापत्वमित्यर्थः ॥

फलशाकम् । न० षड्विधशाकान्तर्गतफलरूपशाके ॥

फलश्रेष्ठ : । पुं० आम्रे ॥ फलेषुश्रेष्ठः ॥ तद्वृक्षे ॥

फलषाडव : । पुं० दाडिमे ॥

फलशैशिर : । पुं० वदरवृक्षे ॥

फलश्रुति : । स्त्री० कर्म्मप्रवृत्तिनिमित्तप्रलोभजनकवाक्ये ; कर्मफलश्रवणे ॥ यथा । फलश्रुतिरियंनृणांनश्रेयोरोचनंपरम् । श्रेयोविवक्षयाप्रोक्तंयथाभैषज्यरोचनम्॥ अपिच ! वेदोक्तमेवकुर्वाणोनिःसङ्गोर्पितमीश्वरे । नैष्कर्म्यांलभतेसिद्धिंरोचनार्थाफलश्रुतिः ॥

फलस्नेह : । पुं० अक्षोटवृक्षे ॥

फलहारी । स्त्री० काल्याम् ॥

फला । स्त्री ० क्षिप्रिमारिष्टाक्षुपे ॥

फलाढ्या । स्त्री० काष्ठकदल्याम् ॥

फलाध्यक्ष : । पु० राजादने । क्षीरिकायाम् । खिरणी० इ० भा० ॥ फलानामध्यक्षः ॥

फलादन : । पुं० शुके । कीरे । सूआ० इ० प्र०पक्षिणि । त्रि०फणफलानिवाअदनंयस्य तस्मिन् ॥

फलान्त : । पुं० वंशे ॥ फलेनफलैर्वाअन्तोयस्य ॥

फलाम्ल : । पुं० अम्लवेतसे ॥ न० वृ
क्षाम्ले ॥
फलाशन : । पुं० शुकपक्षिणि ॥ त्रि०
फलभक्षके ॥
फलासव : । पुं० फलरसविकृतीसुरा
प्रभेदे ॥
फलि : । पुं० फलुइ इ० प्र० मत्स्ये ॥
फलिका । स्त्री० निष्पाव्याम् ॥
फलित : । पुं० वृक्षे ॥ न० शैलेये ।
शिलापुष्पे ॥ त्रि० सफले । सञ्जात
फले ॥ फलानिसञ्जातान्यस्य । ता
रकादित्वादितच् ॥
फलितार्थः । त्रि० निष्कृष्टार्थे ॥ फलि
तश्चासावर्थश्च ॥
फली । त्रि० फलवति ॥ फलान्यस्यस-
न्ति । अतइनि : ॥
फलिन : । त्रि० फलवति ॥ विद्यमा
नफले । फलान्यस्यसन्ति । फलब-
र्हाभ्यामिनच् ॥ पुं० पनसे फलवति
वृक्षेच ॥ इतिराजनिर्घण्ट : ॥
फलिनी । स्त्री० प्रियङ्गुवृक्षे । अग्नि
शिखावृक्षे ॥ नान्तलक्षणोङीप् ॥
फली । स्त्री० प्रियङ्गुवृक्षे ॥ गौरा-
दित्वान्ङीष् । फलिमत्स्ये ॥
फलीकरणम् । न० तुषे ॥
फलीश : । पुं० पारिशे ॥
फलूष : । पुं० लताप्रभेदे ॥
फलेग्रहि : । पुं० यथाकालफलधरे ।
अवन्ध्यवृक्षे । त्रि०फलग्रहणकर्त्त
रि ॥ फलानिगृह्णाति । ग्रह० ।
फलेग्रहिरात्मम्भरिश्चेति उपपदस्य
एदन्तत्वं ग्रहेरिन्प्रत्ययश्चनिपात्य
ते ॥
फलेन्द्र: । पुं० राजजम्बाम् । फरेंदा०
इ०भा० ॥
फलेपुष्पा । स्त्री० द्रोणपुष्प्याम् ॥
फलेप्सु : । त्रि० सकामेजने ॥ फलंप्रा
प्तुमिच्छतीतितथा ॥
फलेरुहा । स्त्री० पाटलायाम् । पाट
लिवृक्षे ॥ फलेरोहति । इगुपधे-
तिकः : क : । तत्पुरुषेकृतीत्यलु
क् ॥
फलोत्तमा । स्त्री० काकलीद्राक्षाया म
। निर्बीजायाम् । किस्मिस ०इ०
भा० ॥
फलोत्पत्ति: । पुं० आम्रवृक्षे ॥
फलोदय : । पुं० लाभे ॥ त्रिदिवे आ
लये । फलस्यउदय : अस्मिन्वा ॥
फल्क : पुं० विसारिताङ्गे ॥
फल्गु : । स्त्री० गयास्थनद्याम् मल
य्वाम् । काकोदुम्बरिकावृक्षे । गुला
ल०फाग०इ०प्र०रेणुप्रभेदे ॥ मि-
थ्यावाक्ये ॥ त्रि०तुच्छे । असारे ॥
यथा । क्षणमात्रगति त्वजगदेतद
तिफलगु । धनलोभमपहायनमप-
ह्ननयनाय ॥ फलतिअफलाविशर
णे ०फलनिष्पत्तौवा । फलिपाटीति
साधु : ॥

फलगुतीर्थम् । न० गयानद्याम् ॥ सार्द्धक्रोशद्वयंमानं गयायांपरिकीर्त्तितम् । पंचक्रोशंगयाचेत्रं क्रोशमेकंगयाशिर : ॥ तत्रपिण्डप्रदानेन तृप्तिर्भवतिशाश्वती ॥ नागाज्जनार्दनाच्च वकूपाच्चोत्तरमानसात् ॥ एतद्गयाशिर : प्रोक्तं फलगुतीर्थं-तदुच्यते । तत्रपिण्डप्रदानेनपितॄणांपरमागति : ॥ पृथिव्यांयानितीर्थानियेसमुद्रा : सरांसिच । फलगुतीर्थंगमिष्यंतिवारमेकंदिने दिने ॥

फल्गुदा । स्त्री० गयानद्याम् ॥

फलगुन : । पुं० अर्जुनपाण्डवे ॥ अर्जुनपादपे॥ फलतिनिष्पादयतिफल० फलेर्गुक्चेत्युनन्०गुगागमश्च ॥ चि० फल्गुन्यांजाते ॥ अविष्ठाफलगुनीत्यणोलुक् । लुकतद्धितलुकि ॥

फल्गुनी । स्त्री० नचत्रविशेषे । पूर्वफल्गुन्यो : ॥ काकोदुम्बरिकायाम् ॥ फल्गुन्यांजातायाम् ॥ अविष्ठाफलगुनीत्यणोलुकि०लुकतद्धितलुकीतिस्त्रीप्रत्ययस्यचलुकि० फल्गुन्यषाढामितिट : ॥ टित्वान् ङीप् ॥

फल्गुवाटिका । स्त्री० काकोदुम्बरिकायाम् ॥

फल्गुवृन्तक : । पुं० श्योनाकप्रभेदे ॥

फल्गूत्सव : । पुं० दोलयात्रायाम् ॥

फल्यम् । न० कुसुमे ॥

फल्यकी । स्त्री० फलिमत्स्ये ॥

फल्लफल : । पुं० सूर्पजवाते ॥

फा: । पुं० वृद्धौ ॥ वर्द्धके । सन्तापे ॥ निष्फलभाषणे ॥

फाटकी । स्त्री०स्फटिकायाम् । फ...रौ इ० भा० ॥

फाणि: । स्त्री० गुडे ॥ करंभे ॥

फाणितम् । न० मत्स्यण्डयाम् । राव० इ० भा० यथा । इक्षोरसस्तुय : पक्व : किञ्चिद्गाढोबहुद्रव : । सएवेचुविकारेषुख्यात : फाणितसंज्ञया ॥ फाणितंगुर्वभिष्यन्दिबृंहणंकफशुक्रकृत् । वातपित्तश्रमान्हन्तिमूत्रवस्तिविशोधनम् ॥ फण्यते । फाणागतौ । ण्यन्त:क्त :॥

फाण्ट : । त्रि० अनायासकृते ॥ पुं० न० कषायविशेषे ॥ चुण्णमौषधजातमुष्णोदकेप्रचिप्य सद्योभिपुत्यपूत्वायत्पीयतेतत्फाण्टमित्याहु : ॥ यथा । चिप्त्वोष्णतोयेमृदित : फाण्टइत्यभिधीयते ॥ अपिच । चुण्णद्रव्यपलसम्यक्जलमुष्णं विनि:चिपेत् पात्रेचतुष्पलमितेततस्तुस्रावयेज्जलम् ॥ सोयंचूर्णद्रव : फाण्टोभिषग्भिरैभिधीयते ॥ इति वै० प० ॥ फण्यतेस्म । फण० । क्त : । क्षुब्धस्वान्तेतिसाधु : ॥ नवनीतभावात्प्रागवस्थापन्ने द्रव्ये ॥

फालः । पुं० महादेवे ॥ बलदेवे ॥ उत्प्लुतौ ॥ पुं० न० कृषिके । सीरोपकरणे ॥ नवविधदिव्यान्तर्गताष्टमदिव्ये ॥ यथा । आयसंद्वादशपलघटितंफालमुच्यते । अष्टाङ्गुलंभवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥ अग्निवर्णंततश्चौरोजिह्वयालेहयेत्सकृत् । नदग्धश्चेच्छुद्धिमियादन्यथातुसहीयते ॥ चौरोऽत्रगोचौरः । गोचौरस्यप्रदातव्यंतप्तफालावलेहनमितिस्मृतिः ॥ त्रि० कर्पासवाससि ॥ फालयति । ञिफला० । ण्यन्तात् पचाद्यच् ॥ फलस्यविकारः । तस्यविकारइत्यण् ॥

फालवहः । पुं० हलि ॥

फाल्गुनः । पुं० गुडाकेशे । पार्थे । अर्जुने ॥ नदीजवृक्षे ॥ अर्जुनभूरुहे ॥ तपस्ये० मासि । फागन० इ० भा० ॥ तत्रजातस्यफलम् । प्रियंवदःसज्जनवल्लभश्चपरोपकारीविमलाशयश्च । दातानितान्तंप्रमदाभिलाषीस्यात्फाल्गुनेयस्यजनस्यजन्म ॥ अनन्तपुरे ॥ फलतिनिष्पादयति । फल० । फलेर्गुक्चेतिउनन्० गुगागमश्च । ततःप्रज्ञाद्यण् ॥ यद्वा । फाल्गुनीपौर्णिमास्यस्मिन् विभाषाफाल्गुनीतिपक्षे०अण् ॥

फाल्गुनानुजः । पुं० सुरभौ । वसन्तकाले ॥ अर्जुनस्यकनिष्ठभ्रातरि ॥

फाल्गुनिकः । पुं० तपस्यमासे । फाल्गुने ॥ फाल्गुनीपौर्णमास्यस्मिन् । विभाषाफाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः इतिठक् । ठस्येकः ॥

फाल्गुनी । स्त्री० तपस्यस्यपूर्णिमायाम् । अत्रगौड़देशीयादोलायात्रांकुर्वन्ति । नरोदोलागतंदृष्ट्वागोविन्दंपुरुषोत्तमम् । फाल्गुन्यांसंयतोभूत्वा गोविन्दस्यपुरंव्रजेत् ॥ अपिच । फाल्गुन्यांक्रीडनंकुर्याद्दोलायांममभूपते इति ॥ पूर्वफल्गुन्याम् ॥ उत्तरफल्गुन्याम् ॥ फल्गुनीभियुक्तापौर्णमासी ॥ नक्षत्रेणेत्यण् । ततोङीप् ॥

फिः । पुं० पापे । निष्फलवाक्ये ॥ कोपे ॥

फिङ्गकः । पुं० कलिङ्गे । भृङ्गे । भूम्याटविहगे । फिङ्गा० इ०गौ० भा० प्र० खगे ॥

फिरङ्गः । पुं० रोगान्तरे ॥ द्वीपान्तरे द्वीपविशेषे ॥ तत्रत्यजने ॥ यथा । पूर्वाम्नायेनवशतंषडशीतिःप्रकीर्त्तिताः । फिरङ्गभाषयामन्त्रास्तेषांसंसाधनात्कलौ ॥ अधिपामण्डलानाञ्चसङ्ग्रामेष्वपराजिताः । इङ्रेजानवषट्पञ्चलण्ड्रजाश्चापिभाविनः । इतिमेरुतन्त्रे २३ प्रकाशः ॥

फुः । पुं० मन्त्रके ॥ तुच्छवाक्ये ॥

फुक्कः । पुं० पक्षिणि ॥
फुटः । वि० सर्पफणायाम ॥
फुत् । अ० अनुकरणशब्दे ॥
फुत्करः । पुं० अग्नौ ॥
फुत्कारः पुं० फुत्करणे । फूंक० इ० भा० ॥
फुत्कृतिः । स्त्री० फूत्कारे ॥
फुप्फुसः । पुं० पुप्फुसे । कोष्ठविशेषे ॥ सचहृदयनाडिकासंलग्नाशयविशेषः । फोंपडा० भस्० इ० भा० ॥ यथा । स्थानान्यामाग्निपक्वानांमूत्रस्यरुधिरस्यच । हृदुण्डकः फुप्फुसश्चकोष्ठइत्यभिधीयते ॥ अस्यार्थः । आमस्यस्थानमामाशयोनाभेरूर्द्धम् । अग्नेः स्थानंपच्यमानाशयोनाभिमध्यम् । पक्वस्यस्थानं पक्वाशयोनाभेरधः । मूत्रस्यस्थानं वस्तिः । रुधिरस्यस्थानंयकृत्प्लीहानौ । हृत्हृदयं । इचुरसपाकमलवद्यः शोणितमलस्तज्ज उण्डुकः सचान्त्रदेशेव्यवस्थितः पुरीषाधानम् । फुप्फुसः हृदयस्यवामपार्श्वे फुप्फुण्ड इतिख्यातइतिविजयरचितः ॥
फुल्तिः । स्त्री० फलने ॥
फुल्लः । त्रि० विकसिते ॥ पुष्पे ॥ यथा । श्रीपञ्चम्यांश्रियंदेवींफुल्लैः सम्पूजयेत्सदा ॥ फलति । त्रिफला । ञीतः क्तः । आदितश्चेतीडभावः । तिचेत्युत्वम् । अनुपसर्गात् फुल्लक्षीबेति० तस्यलः ॥
फुल्लदाम । न० छन्दोभेदे ॥ यथा । मोगौनौतौगौ० शरहयतुरगैः फुल्लदामप्रसिद्धम् ॥ यथोदाहरणम् । शश्वल्लोकानांप्रकटितकदमनंध्वस्तमालोक्यकंसंहृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम् । मुग्धामोदेनस्थगितदशदिशाभोगमाहूतभृङ्गंमौलौदैत्यारेर्न्यपतदनुपमंस्रस्तरोः फुल्लदाम ॥ पुष्पमालायाम् ॥
फुल्लदृक् । त्रि० विकसितनयने ॥
फुल्लफालः । पुं० शूर्पवाते ॥ इ० त्रिशेषः ॥
फुल्ललोचनः । त्रि० विकसितनेत्रवति ॥
फुल्लीकः । पुं० देशे ॥ सर्पे ॥
फूत्कारः । पुं० श्वासनिर्गमे । श्वसिते ॥ फूत्कारणम् । कृञ्० । घञ् ॥
फेत्कारिणी । स्त्री० तन्त्रविशेषे ॥
फेनः । पुं० डिण्डीरे । अब्धिकफे । समुद्रफेने ॥ तरलद्रव्योपर्युत्थितवुद्बुदाकारवस्तुनि । झाग० इ० भा० ॥ स्फायते । स्फायी० फेनमीनावितिनिपातनात्साधुः ॥
फेनकः । पुं० फेने ॥ पिष्टविशेषे ॥
फेनका । स्त्री० जलपक्वतण्डुलचूर्णे ।
फेनदुग्धा । स्त्री० दुग्धफेनीक्षुपे ॥
फेनलः । त्रि० फेनवति । फेनिले ॥

फेनोस्यास्मिन्नस्ति । फेनादिल-
च्चेतिचकाराल्लच् ।
फेनवान् । त्रि० फेनले ॥ फेनोस्यास्मि
न्नास्ति । फेनादिलच्चेत्यचान्यतर
स्यामित्यनुवृत्तेः पक्षेमतुप् ॥
फेना । स्त्री० क्षुपविशेषे । सातलाया
म् ॥
फेनाग्रम् । न० बुद्बुदे ॥
फेनायमानः । त्रि० फेनमुद्वमति ॥
फेनाच्चेतिवक्तव्यमितिक्यञ् ॥
फेनवाही । पुं० वस्त्रे ॥
फेनाशनिः । पुं० इन्द्रे ॥
फेनिका । स्त्री० पक्वान्नविशेषे । फेनी
इ० भा० ॥ यथा समितायाघृता
ढ्यायावर्त्तीर्दीर्घाः समाचरेत् । ता
स्तुसन्निहितादीर्घाःपीठस्योपरिधार
येत् ॥ वेल्लयेद्दल्लनेनैतायथैकापर्प्प-
टीभवेत् । ततश्छुरिकयातान्तुसंल
ग्नामेवकर्तयेत् ॥ ततस्तुवेल्लयेद्भूयः
शङ्केनचलेपयेत् ततः संवृततां
लोप्त्रींविदधीतपृथक्पृथक् ॥ पुन-
स्तांवेल्लयेल्लोप्त्रींयथास्यान्मण्डलाकृ-
तिः । ततस्तांसुपचेदाज्ये भवेयुश्च
पुटाः स्फुटाः ॥ सुगन्धयाशर्करया
तदुद्धूलनमाचरेत् । सिद्धैषाफेनि
कानाम्नीमठकेनसमागुणैः ॥ ततः
किञ्चिल्लघुरियम्विशेषोयमुदाहृतः ॥
फेनिलः । अरिष्टभूरुहे । रीठा० इ०
भा० ॥ वदरवृक्षे ॥ न० मदनफले
॥ वदरफले ॥ त्रि० सफेने ॥ फे
नोऽस्यास्ति । फेनादिलच्चेतिइ
लच् ॥
फेरः । पुं० शृगाले ॥
फेरण्डः । पुं० शृगाले ॥
फेरवः । पुं० शृगाले ॥ असुरे । रा-
क्षसे ॥ फे० इति० अव्यक्तोरवोऽस्य
॥ त्रि० धूर्त्ते ॥ हिंस्रे ॥
फेरुः । पुं० जम्बुके । शृगाले । फे०
इत्यव्यक्तंरौति रुशब्दे । मितद्वा
दित्वात्० डुः ॥
फेलम् । न० भुक्तसमुज्झि
फेलकः पुं० ते । उच्छि
ष्टे ॥
फेला । स्त्री० भुक्तोज्झिते ॥ फेल्यते ।
फेल्लगतौ । गुरोश्चल्यः ।
फेलिः । भुक्तोज्झिते ।
फेलिका । स्त्री० उच्छिष्टे । अं
फेली । ट० । इ० भा०

—‡०(—)०‡—

बवयोरैक्यमभेददर्शनात् ॥
बः । पुं० पवर्गस्यतृतीयाक्षरे ॥ वरु
णे ॥ सिन्धौ ॥ भगे ॥ तोये ॥
वपने ॥
वंहिमा । पुं० वहुलतायाम् ॥ बहुल
स्यभावः । पृथ्वादित्वादिमनिच् ।
प्रियस्थिरेतिवहुलस्यवंहिआदेशः ।
वंहिष्ठः । त्रि० अत्यन्तवहुले ॥ अयमे
षामतिशयेनवहुलः । अतिशायने

तमविष्ठनावितीष्ठन् । प्रियस्थिरेति वंहिआदेश : ॥
वंहीयान् त्रि० बहुलतरे ॥ अयम नयोरतिशयेनबहुल : । द्विवचन विभज्योपपदेतरवीयसुनावितीयसु निप्रियस्थिरेतिवंह्यादेश : ॥
बक : पुं० कह्वे । बगला० ह० प्र० पचिणि ॥ अस्यमांसगुणास्तु । शरा रिवककाकाश्च दाल्यूहा : पवना- पहा : ॥ इ० ॥ बकपुष्पे । शिव मल्ल्याम् । अगस्तिद्रुमे । यथा । सितपीतनीललोहितकुसुमभेदाञ्च तुर्विधोऽगस्ति : । मधुरशिशिरदो षश्रमकासविनाशनश्चभूतघ्न : ॥ तथाचराजनिर्घण्ट : । अगस्तिशि- शिरंगौल्यं त्रिदोषघ्नंश्रमापहम् । वलासकासवैवर्ण्यभूतघ्नञ्चवलावह मिति ॥ श्रीदे । कुवेरे ॥ रक्षोविशे षे । योभीमेनहत: ॥ असुरविशेषे ॥ सचश्रीकृष्णेनहत : ॥ वङ्कते । व- क्रिकौटिल्येगतौच । अच् । आग मशास्त्रस्यानित्यत्वान्ननुम् । ववयो रैक्यम् ॥ यद्वा वाति । वायतिवा । वागतिगन्धनयो: । ओवैशोषणेवा क्कुन् । आतोलोप : ॥ वेति० वा- यतिवा । मूलविभुजादित्वात्क: । वक्तिवा । वचेरच् । न्यङ्क्वादि : ॥
बकचिञ्चिका । स्त्री० मत्स्यविशेषे० । बकाच्याम् ॥

बकजित् । पुं० भीमसेने ॥ श्रीकृष्णे ॥
बकनिसूदन : । पुं० श्रीकृष्णे ॥ भीमसेने ॥
बकपुष्प : । पुं० बकवृक्षे ॥ न० अग स्तिकुसुमे ॥
बकवृत्ति : । पुं० बकसमानवृत्तिनवि शिष्टे यथा । पाषण्डिनोविकर्म- स्थान्वैडालव्रतिकान्शठान् । हैतु कान्बकवृत्तींश्चवाङ्मात्रेणापिना- र्चयेत् ॥
बकवरी । पुं० श्रीकृष्णे ॥ भीमसेने ॥
बकव्रतचर : । पुं० बकव्रतिनि ॥ बक व्रतंचरतीति० तथा । चरेष्ट : । बकोहिप्रायेणमीनहननरुचितयामि थ्याविनीत : सन्नेवंशीलोभवतीति गौणोबकव्रतशब्द : । तल्लक्षणन्तु । अधोदृष्टिर्नैकृतिक : स्वार्थसाधनत त्पर : । शठोमिथ्याविनीतश्चबकव्र तचरोद्विज : ॥ इ० ॥
बकव्रती । पुं० बकव्रतचरे । बकव्रत वति ॥
बकाची । स्त्री० बकचिञ्चिकायाम् ॥
बकारि : । पुं० श्रीकृष्णे ॥
बकुल : । पुं० शीधुगन्धे । सिंहकेशरे । मौलसरीति० प्र० वृक्षे ॥ वङ्कते बक्रिगत्यर्थे । वा० उलच् । आगम शास्त्रस्यानित्यत्वान्ननुम् ॥ बकुलस्तु वरोऽनुष्णा : कटुपाकरसोगुरु : । कफपित्तविषश्वित्रकृमिदन्तगदाप-

ह : ॥ पथ्यवम् ॥
वकुला । स्त्री० कटुकायाम् ॥
वकुली । स्त्री० काकोल्याम् ॥
वकूल : । पुं० वकुले ॥
वकेरुका । स्त्री० बलाकाभिदि ॥ वातावज्जितशाखायाम् ॥
वकोट : । पुं० शुक्लवायसे । वके ॥
वठर : । पुं० अम्बष्ठे शठे ॥
वणिग्बन्धु : । पुं० नीलीवृक्षे ॥
वणिग्भाव : । पुं० सत्यानृते । वाणिज्ये ॥ वणिजोभाव : । ष्यञ् ॥
वणिग्वह : । पुं० उष्ट्रे ॥
वणिक्‌०ग् । पुं० वाणिजके । वाणिज्यकर्त्तरि । क्रयविक्रयकर्त्तरि । वैदेहके । सार्थवाहे । नैगमे । क्रयविक्रयके । वाणिज्ये ॥ करणान्तरे ॥ पणते पण० । पणिरिज्यादिश्चव: ॥ दैर्घ्ये ॥
वणिक् । स्त्री० वणिज्यायाम् ॥
वणिज : । पुं० ववाद्येकादशकरणान्तर्गतषष्ठकरणे । तज्जातफलंयथा । प्राज्ञ: कृतज्ञोगुणवान्गुणाढ्योवणिग्जनप्राप्तमनोरथ : स्यात् । यस्यप्रसूतौवणिजाभिधानंभाण्डप्रधानंद्रविणंहितस्येति ॥ वणिजि ॥
वणिज्यम् । न० वाणिज्ये । वृत्त्यन्तरे ॥ वणिजांकर्मभावोवा । दूतवणिग्भ्याञ्चेति० य : इतिकाशिका । भाष्ये तु० दूतवणिग्भ्याञ्चेतिनास्त्येव ॥
वणिज्या । स्त्री० वाणिज्ये ॥ वृत्त्यन्तरे वणिजांभाव: । दूतवणिग्भ्याञ्चेति य: वणिज्याशब्द : स्वभावात्स्त्रीलिङ्ग : ० भावएवाचप्रत्ययोनतुकर्मणीतिमाधव: । भाष्ये तुवार्तिकमेवनास्ति ॥ वणिक्कर्मणि ॥
वण्ठ : । पुं० असहायगमने ॥ अकृतोद्वाहे ॥ खर्वे ॥ कुन्तायुधे ॥ भृत्ये । वांठ० इ० भा० ॥ वण्ठते । वठि । अच् ॥
वण्ड : । त्रि० विकृतलाङ्गूले ॥ बाँडा इ० भा० ॥
वदर : । पुं० कोलिपादपे ॥ वदरस्य पत्रलेपोज्वरदाहविनाशन : । त्वचा विस्फोटशमनीवीजंनेत्रामयापहम् ॥ वदतिस्थिरीभवति० छिन्नस्यापिपुन : प्ररोहणात् । वदस्थैर्ये । वा० अर : ॥ देवसर्षपवृक्षे ॥ कार्पासस्थास्थ्नि । विनौला० कपासिया० वाडवा० इ० भा० ॥ न० कोलिफले ॥ कार्पासीफले ॥ वदर्या : फलम् । फलेलुगितिविकारावयवप्रत्ययस्यलुक् ॥ लुक्तद्धितलुकीति० स्त्रीप्रत्ययस्यलुक् ॥ सेबिफले ॥ क्षुद्रबदरे । भाडीबेर इ० भाडबेरी० इ० भा० ॥ गोपघोण्टायाम् ॥ वदरमात्रे । कर्कन्धौ । वदर्याम् ॥
वदरफली । स्त्री० भूवदर्याम् ॥

बदरवल्ली । स्त्री० ) भूबदर्याम् ॥

बदरा । स्त्री० गृष्टौ । वराहकान्तायामोषधौ ॥ कार्पास्याम् ॥ एलापर्ण्याम् ॥ विष्णुक्रान्तायाम् ॥ टाप् ॥

बदरामलकम् । न० प्राचीनामलके ॥

बदरि : । स्त्री० कोलिवृक्षे ॥

बदरिकम् । न० तीर्थविशेषे ॥

बदरिकाश्रम : । पुं० न० तीर्थविशेषे । नारायणाश्रमे । व्यासाश्रमे ॥

बदरी । स्त्री० कोलवृक्षे ॥ कपिकच्छ्वाम् ॥ कार्पास्याम् ॥ गौरादित्वान्ङीष् ॥ बदरीफले ॥ बदर्या : फलम् हरीतक्यादिभ्यश्चेति० विकारार्थस्य लुप् ॥

बदरीखण्ड : । पुं० बदरीणांसमूहे ॥ वृक्षादिभ्य : खण्ड : ॥

बदरीच्छदा स्त्री० शङ्खनख्याम् ॥ हस्तिकोलिवृक्षे ॥

बदरीपत्रकम् । न० नखीनामगन्धद्रव्ये ॥

बदरीपाचनम् । न० तीर्थविशेषे ॥ तत्रवशिष्ठाश्रम : ॥

बदरीफला । स्त्री० नीलशेफालिकायाम् ॥

बदरीशैल : । पुं० अलकनन्दाया : पश्चिमतीरेहिमाचलैकदेशे ॥

बदरीषण्ड : पुं० बदरीखण्डे ॥ बदरीणांषण्ड : समूह : ॥

बदर्याश्रम : । पुं० नारायणाश्रमे ॥

बद्ध : । त्रि० कीलिते । संयते । कारागारादौनिगडिते ॥ बध्यते स्म । बधबन्धने । क्त : ॥ मोहाद्यावृते० सुखदु:खादिधर्मवति० पाशाष्टकेनयंत्रितेसंसारिजीवेपशौ॥

बद्धगुदम् । न० उदरामयविशेषे । तन्निदानंयथा । यस्यान्त्रमन्नैरुपलेपिभिर्वावालाश्मभिर्वापिहितंयथावत् । सञ्चीयतेतस्यमल : सदोषात्शनै: शनै : शङ्करवच्चनाडाम् ॥ निरुध्यतेतस्यगुदेपुरीषंनिरेतिकृच्छ्रादपिचाल्पमल्पम् । हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरंबद्धगुदंवदन्ति ॥

बद्धफल : । पुं० करञ्जवृक्षे ॥

बद्धमुष्टि : । त्रि० कृपणे ॥

बद्धमूल : । त्रि० दृढमूले । उत्पाटनानर्हमूले । बद्धोमूलोयस्यस : ॥

बद्धमौन : । त्रि० नि : शब्दे ॥

बद्धरसाल : । पुं० त्रिविधराजाम्रान्तर्गताच्युत्तमाम्रे । मध्वाम्रे । मन्मथानन्दे ॥

बद्धशिख : त्रि० शिशौ । बाले ॥ संयतचूडेनरे ॥ यथा । सदोपवीतिनाभाव्यं सदाबद्धशिखेनतु । विशिखोव्युपवीतश्चयत्करोतिन तत्कृतमिति ॥ बद्धाशिखायस्य ॥

बद्धशिखा । स्त्री० उच्चटौषधौ ॥

बधः । पुं० प्राणवियोगफलकव्यापारे । प्रमापणे । मारणे ॥ हननम् । हन० । हनश्चवधश्चेत्यप् ॥ पुण्यप्रद वधस्तुयथा । एकस्मिन्यत्रनिधनेप्रापिते दुष्टकारिणाम् । बहूनांभवति क्षेमं तस्यपुण्यप्रदोवधः ॥ एकाऽस्ते योसुरापश्चब्रह्महागुरुतल्पगः । आत्मानंघातयेद्यस्तु तस्यपुण्यप्रदो वधः ॥ इति ॥ अपिच, नैकस्यार्थे बहून्हन्यादितिशास्त्रेषु निश्चयः एकंहन्याद्बहूनांहितनपापीतेन जायते ॥ इति वामनपुराणे ५५ अध्यायः । पारिभाषिकवधस्तु । वपनंद्रविणादानं स्थानान्निर्यापणं तथा । एषहिब्रह्मबन्धूनांबधोनान्यो स्तिदैहिकः ॥ इ० ॥ करचरणादिच्छेदनादिरूपे ताडने ॥ सप्तमतारायाम् ॥

बधकः पुं० व्याधे । मृत्यौ ॥ बधकर्त्तरि । बद्धक० इ० भा० ॥ त्रि० हिंस्रे ॥ हन्ति । हन० । ण्वुल् । बहुलं तणीतिण्वुलिवधा देशः ॥ वधहिंसायांवा । तदा० जनिवध्योश्चेतिवृद्धिनिषेधः ॥

बधत्रम् । न० आयुधे ॥ वध्यतेऽनेन । वध० । अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥

बधस्थली । स्त्री० बधस्थाने ॥

बधस्थानम् । न० आघातने । सूनायाम् ॥ वधस्यस्थानम् ॥

बधाङ्गकम् । न० कारावेश्मनि ॥

बधार्हः । त्रि० हननयोग्ये ॥ बध्ये ॥

बधी । त्रि० बधकर्त्तरि ॥

बधिरः । त्रि० एडे । श्रवणशक्तिहीने बहरा० इ० भा० ॥ बाधिर्यनिदानन्तु । यदाशब्दवहंवायुः स्रोतआवृत्यतिष्ठति । शुद्धश्लेष्मान्वितोवापिबाधिर्यंतेनजायते ॥ औषधं यथा० । कर्णशूलेकर्णनादेबाधिर्ये क्ष्वेडएवच । चतुर्ष्वपिचरोगेषुसामान्यंभेषजंस्मृतम् ॥ शृङ्गवेरञ्च मधुचसैन्धवंतैलमेवच। कटूष्णं कर्णयोर्धार्यमेतत्स्याद्वेदनापहम् ॥ इ० ॥ बाधिर्यंबालवृद्धोत्थं चिरोत्थञ्चविवर्ज्जयेत् ॥ बध्नाति कर्णम० । बध्यतेवा बन्धबन्धने । इषिमदिमुदीतिकिरच् ॥ भिक्षुकलक्षणे ॥ हितंमितंमनोरम्यं वचः शोकापहञ्चयत् । श्रुत्वायो नशृणोतीत्रबधिरः सप्रकीर्त्तितः ।

बधोद्यतः । त्रि० परवधायोद्युक्ते । सन्नद्धे । आततायिनि ॥

बध्यः । त्रि० बधार्हे । शीर्षच्छेद्ये ॥ किन्त्वयानश्रुतंलोकेऽवध्याः भ्रनुयोषितः । हीनवर्णोपभुक्तायात्याज्या

बध्यापिवाभवेत् ॥ अवध्याययथा । गोब्राह्मणंब्रह्मथापिसुप्तं बालंस्वबन्धुंललनांसुदुष्टाम् । कृतापराधानपिनैवबध्याचार्यमुख्यादागुरवस्तथैवेति ॥

बध्यपाल : । पुं० कारागृहरचके ॥

बध्रम् । न० नागे । सीसके सीसा० इ०भा० ॥ बध्यतेऽनेन । सर्वधातुभ्य ष्ट्रन् ॥

बध्री । स्त्री० वध्रीम् । वरत्रायाम् । चर्मरज्जौ । वरत० लाव० इ० भा० ॥ बध्यतेऽनया । ष्ट्रनःषित्वान्ङीष्

बन्ध : । पुं० आदौ ॥ बन्धने ॥ अन्त : करणाशुद्धिरूपेज्ञानप्रतिबन्धे । कर्तृत्वाद्यभिमाने ॥ विपर्ययादिष्यते बन्ध : । विपर्ययात्०अतत्त्वज्ञानात् सच०प्राकृतिकवैकारिकदाक्षिणिकभेदात्त्रिविधउक्तस्तक्व्याख्यानतोऽवगन्तव्य: ॥ पुनर्बन्धोद्विविध: । तीव्रोमृदुश्चेति । तत्रसुरसम्पत्०साक्षादेवक्लेशहेतुत्वात्तीव्रोबन्ध : । द्वैतमात्रप्रतीतिस्तुस्वयमक्लेशरूपत्वात्मृदुबन्धइति ॥ बध्यतेऽनेनवा । बन्ध० । हलश्चेतिघञ् ॥ गृहादिवेष्टने ॥ शरीरे ॥ निगडादिबन्धने ॥ अनेकान्तवादिसतेतु० नानानिरयसंसरणकारणं मोहादिरष्टविधोगण: स्वातन्त्र्यविघातहेतुत्वाद्बन्ध: । उक्तञ्च । मोहादिकोगणश्चेवबन्धो

जीवस्यकल्पित : । लोहपञ्जरसम्बद्धंयथाक्षिप्तंजलाशये । अलाबुकमधोयातितद्वज्जीव: सबंधनइति ॥ जालंधरोड्डीयनमूलबंधामृजल्पन्तिकण्ठोदरपायुमूले । बंधत्रयेस्मिन् परिचीनमानेबंध : कुतोदारुणकालपाशै : ॥ इतियोगविद : ॥ षोडशप्रकारेरतिबंधे ॥ तेयथा । पद्मासनोनागपदोलतावेष्टोऽर्द्धसंपुट: । कुलिशंसुन्दरश्चैवतथाकेशरएवचहिल्लोलोनरसिंहो पिविपरीतस्तथापर : । चुम्बोवैधेनुकश्चैवसमुत्कण्ठस्तत : परम् ॥ सिंहासनोरतिनागोविद्याधरस्तुषोडश इतिरतिमञ्जरी । एतेषांलक्षणानितत्तच्छब्दे द्रष्टव्यानि ॥ संज्ञाप्रभेदेनान्येऽपिबंधा: सन्ति । यथा कामप्रदोविपरीतोनागरोरतिपाशक: । केयूर: प्रियतोषश्चतत : समरदस्तथा । ततश्चैकपदोज्ञेय : सम्पुटश्चोर्ध्वसम्पुट : । ततस्तनभवश्चैवततोनुरतिसुन्दर : ॥ ऊरुपीडस्मरचक्रौततश्चोरुक्रम : स्मृत : । वेष्टकोहंसकीलस्तुततोलीलासनस्तथा ॥ अष्टादशक्रमाद्बंधा:स्त्रीणांबहुसुखप्रदा:॥ पुंसांकराश्चैवकथितास्तुक्रमास्तत: ॥

बंधक: । पुं० विनिमये ॥ आधौ ॥ रतहिण्डके ॥ सत्यङ्कारे ॥ न० आधौ । यदुत्तमर्णायभूम्याद्याधीयतेतत्र ॥

ऋणग्रहणायस्थापितेवस्तुनि ॥ बध्ना
ति । बंध० । ण्वुल् ॥
बंधकी । स्त्री० पुंश्चल्याम् ॥ हस्तिन्या
म् बध्नातिमनोयत्र । बंधबंधने ॥
ण्वुल् । गौ० ङीष् ॥ पञ्चपुरुषगा
मिन्याम् ॥
बंधनम् । न० बधे ।। बंधनक्रियायाम् ।
। उद्दाने । बंधे । बांधना० इ० भा०
॥ निमित्ते ॥ यथा । नप्रकाशेह
मित्युक्तिर्यत्प्रकाशैकबंधना । स्वप्र
काशंतमात्मानमप्रकाशः कथंस्पृ
शेत् ॥ अहंनप्रकाशे० नभामीत्यु
क्तिर्वचनं० यत्प्रकाशैकबंधना० य
स्यप्रकाशस्वरूप प्रकाशएकएवबंधनं
निमित्तंयस्याः सातथोक्ता ॥ नप्र
काशइतिव्यवहारश्चप्रकाशानुभव
निमित्तत्वादित्यर्थः । तंप्रकाशंस्वय
मेवभासमानमात्मानमप्रकाशोऽज्ञा
नंकथंस्पृशेत् आवृणुयात्नकथंचि
दित्यर्थः ॥ चि० प्रसित्याम् । बंध
मसाधनेरज्जुनिगडादौ ॥ यथा ।
बंधनानिकिलसन्तिबहूनिप्रेमरज्जु
कृतबंधनमन्यत् । दारुभेदनिपु
णोपिषडङ्घ्रिर्निष्क्रियोभवतिपङ्कज
बद्धइति ॥ बध्यतेऽनेनास्मिन्वा ।
बंध० । ल्युट् ॥
बंधनवेश्म । न० कारागारे ॥
बंधनालयः । पुं० कारायाम् । बंध
नागारे ॥ बंधनस्यआलयः ॥

बंधस्तम्भः । पुं० आलाने । हस्तिबं
धनस्तम्भे ॥ बंधस्यबंधनस्यस्तम्भः ॥
बंधित्रम् । न० कामदेवे ॥ चर्मव्य
जने ॥
बंधुः । पुं० बंधूके । बंधुजीवके ॥
मित्रे । सल्यागासहने । भ्रातरि ॥
सगोत्रे । बांधवे । ज्ञातौ ॥ हित
कारिणि ॥ संसारबंधनान्मोचन
हेतुरात्मैवबन्धुर्नान्यः ॥ सम्बन्धे
नोपकर्त्तरि ॥ बध्नातिस्नेहेनम
नोयः बध्यतेऽस्मिन्ज्ञातिरितिवा ।
बंध० । शृस्वृस्निहीत्यु ः ॥ लग्ना
च्चतुर्थभवने वर्णवृत्तान्तरे ॥ भ
चयशोभितसङ्गतकर्णः शुद्धसुसङ्ग
तपङ्क्तिकवर्णः । पन्नगराजनिवे
दितबंधू राजतिभूपतिससदिबं
धुः ॥ यथा । भचितवासरनायक
चन्द्रः कामिसमूहसमाहिततन्द्रः ।
दर्शितलोलतडित्करवालः सोय
मुपैतिघनाघनकालः ॥
बंधुजीव : । पुं० बंधूकवृक्षे । माध्या
ह्निके । दुपहरिया० फूल० इ० भा०
॥ बंधुरिवजीवंजलमस्य ॥
बंधुजीवकः । पुं० बंधूके ॥ स्वा०कः
बंधुता । स्त्री० बंधुसङ्घे ॥ बंधूनांसमू
हः । ग्रामजनबंधुभ्यस्तल् ॥
बंधुरः । पुं० स्त्रीचिह्ने ॥ तैलकल्के ॥
बंधूके ॥ बधिरे ॥ हंसे ॥ बिडङ्गे ॥
ऋषभौषधौ ॥ न० मुकुटे ॥ बंधने ॥

॥ त्रि० उन्नतानते ॥ रम्ये ॥ नम्रे ॥ वध्नाति । बंध० । मद्गुरादयश्चे तिसाधु : ॥

वंधुरा : । पुं० भूम्नि०सक्तुषु ॥

वंधुरा । स्त्री० पण्ययोषायाम् ॥

वंधुल : । पुं० असतीपुत्रे ॥ वंधून्लाति । आतश्चेतिक : ॥ त्रि० नम्रे ॥ सुन्दरे ॥

वंधूक : । पुं० पीतसालके । सर्जके । प्रियके । विजयसार०इ०भा० ॥ पेयासाल०इ०गौ०भा० ॥ न० पुष्पवृक्षवि० । रक्तके । बंधुजीवके । दोपहरिया०मक्षनिया० इ० भा० ॥ बाँदुली० इ० गौ० भा० ॥ वंधूक : कफकृद्ग्राहीवातपित्तहरो लघु : ॥ वध्नातिचित्तम् । बंध० । उलूकादयश्चेत्यूक : ॥ खधूपे । बन्धूक०इ०भा० ॥ यथा । बंधूकोबंधुजीवेस्यात्खधूपेस्यान्नपुंसकमितिहट्टचन्द्र : ॥

वन्धूकपुष्प : । पुं० पीतसाले । जीवकतरौ । विजयसार० इ० भा० ॥ वन्धूकस्येवपुष्पाण्यस्य ॥ वीजके ॥

वंधूर : । पुं० विवरे ॥ त्रि० शोभने ॥ नम्रे ॥ बध्नाति । बंध० । खर्जूरादित्वादूर : ॥ उन्नतानते ॥ वंधूरवंधुरौरम्येनम्रेहंसेतुवंधुरइतिरभस : ॥

वन्ध्य : । त्रि० अफले । अवकेशिनि । निष्फले । ऋतुप्राप्तावपिफलरहिते वृक्षादौ ॥ बंधेसाधु : । तत्रसाधुरितियत् ॥ बंधनीये ॥

वन्ध्या । स्त्री० अप्रजस्त्रियाम् । बांझइ० भा० ॥ अपत्यशून्यायांगवि । वशायाम् ॥ वृषलीविशेषे ॥ यथा । वन्ध्याचवृषलीज्ञेयावृषलीचमृतप्रजा । अपरावृषलीज्ञेयाकुमारीयारजस्वला ॥ वलाख्यगंधद्रव्ये । बान्ध्यालके ॥ वध्नाति । बंध० । यत् । अघ्न्यादित्वाद्यग्वा ॥ योनिरोगविशेषे ॥

वन्ध्याकन्द : । पुं० वन्ध्याकर्कोटक्याम् । बांझखखसा० इ० भा० ॥

वन्ध्याकर्कोटकी । स्त्री० विषकण्टकिन्यामोषधौ । ककोडी०खखसा० इ० भा० ॥ वन्ध्याकर्कोटकीलघ्वी कफनुद्व्रणशोधनी । सर्पसर्पहरीतीक्ष्णाविसर्पविषहारिणी ॥

बभस : । त्रि० भक्षणशीले ॥

बभ्रु : । पुं० वैश्वानरे । अग्नौ ॥ शूलपाणौ । शिवे ॥ गरुडध्वजे ॥ विष्णौ ॥ विशाले ॥ नकुले । स्थूलपुष्कोरक्तनेत्रोबभ्रुर्भेद : सनाकुल : ॥ मुनिभेदे ॥ देशभेदे ॥ यादवविशेषे ॥ सितावरशाके ॥ त्रि० पिङ्गले । पिङ्गलवर्णवति ॥ बिभर्ति० भरतिवा । डुभृञ्० भृञ्०वा । कुर्भ्रश्चेति०कुर्द्वित्वश्च ॥ खलतौ ॥

बभ्रुज : । पुं० ब्राह्मणे ॥

बभ्रुधातु : । पुं० सुवर्णगैरिके ॥
वर : । पुं० जामातरि ॥ वृतौ ॥ देवतादेरभीप्सिते ॥ षिड्गे ॥ न० कुङ्कुमे ॥ त्वचे ॥ बालके ॥ आर्द्रके ॥ ईषदिष्टे ॥ मनागिष्टे वरं क्लीवे केचिदाहुस्तदव्ययम् ॥ त्रि० । श्रेष्ठे ॥
वरा । स्त्री० फलत्रिके ॥ गुडूच्याम् ॥ मेदायाम् ॥ ब्राह्म्याम् ॥ विडङ्गे ॥ पाठायाम् ॥ हरिद्रायाम् ॥
वरी । स्त्री० शतावर्याम् ॥
वहापक : । पुं० पांशुचामरे ॥
बर्बट : । पुं० राजमाषे ॥
बर्बटी । स्त्री० पण्ययोषायाम् ॥ व्रीहिभेदे ॥
वर्वणा । स्त्री० वृहन्मक्षिकायाम् । नीलायाम् ॥ पश्यान्तस्यादिवर्वणाम् ॥
वर्ह : । पुं० न० मयूरपिच्छे ॥ दले । पत्रे ॥ परिवारे ॥ वर्हति । वृहवृद्धौ ॥ पचाद्यच् ॥ वर्हतेवा । वर्हहिंसायाम् । घञ् ॥
वल : । पुं० हलायुधे । वलदेवे ॥ दैत्यप्रभेदे ॥ मयपुत्रे ॥ अस्यस्थानमतलं । यथा । प्रथमेविवरेविप्रास्तलाख्ये मनोरमे । मयपुत्रोवलोनामवर्ततेऽखर्वगर्वकृत् । षण्णवत्योये असृष्टामायासर्वार्थसाधिकाः । मायाविनोयास्तसद्योधारयंतिचकाश्चमेति० दे० भा० ॥ वायसे ॥ वरुण द्रुमे ॥ न० गंधरसे ॥ रूपे ॥ शौर्ये । स्थामनि । शुष्मे । शक्तौ । पराक्रमे ॥ वाहुवलमनोवलोपायवलवंधुवलेषुचतुर्षु ॥ सामादिषु ॥ स्थौल्ये ॥ सैन्ये ॥ तत्षड्विधम् । मौलंभृत्यंसुहृत्श्रेणीद्विषदाटविकं वलमितिभेदात् । तच० मित्राटवीवलंचैवमौलंभृत्यवलंतथा । सर्वमेतद्वलंग्राह्यं वर्ज्यं यित्वाद्विषद्वलम् ॥ इतिनीतिः । देहसामर्थ्ये ॥ परपरिभव निमित्ते शरीरगतसामर्थ्यं विशेषे ॥ अवश्यमिदंसाधयिष्यामीत्याग्रहे । खोचितेकार्येश्रमाभावप्रयोजकेदार्ढ्ये । कर्मेन्द्रियपाटवे ॥ स्वधर्मानुष्ठानायदेहेन्द्रियादिधारणसामर्थ्ये ॥ रसादिशुक्रपर्यन्तपुष्टधातुनिमित्तकम् । चेष्टासुपाटवंयत्तु वलंतदभिधीयते ॥ शुक्रे ॥ त्रि० वलयुक्ते ॥ वलमस्यास्ति । अर्श आद्यच् । वलते० वलतिवा० वल्यतेवा० अनेन । वलसम्वरणे० वलप्राणनेवा । पचाद्यच्० कर्मणिघञ्वा । संज्ञापूर्वकत्वाद्वृद्धभाव : । पुंसीति० घोवा ॥ वलतेऽनेन । खनोघचेतिघो वा ॥ पारिभाविकवलानियथा । विद्याभिजनमित्राणिवृद्धिसत्त्वधनानि च । तपः सहायवीर्याणिदैवञ्चदशमंवलम् ॥ अपिच । अवलस्यवलंरा

आबालस्यरुदितंबलम् । बलंमूर्खस्य मौनन्तुतस्करस्याऽनृतंबलम् । अ-पिच० ब्र० । क्षत्रियाणांबलंयुद्धंव्या पारस्थबलंविश्राम् । भिक्षावलंभिक्षु काणांशुद्राणांविप्रसेवनम् ॥ हरौ भक्तिर्हरेर्दास्यं वैष्णवानांबलंहरि : । हिंसाबलंखलानाञ्च तपस्याचतप स्विनाम् ॥ बलंवेशस्त्ववेश्यानांयोषि तांयौवनंबलम् । बलंप्रतापोभूपानां बालानांरुदितंबलम् ॥ सतांसत्यंब लंमिथ्याबलमेवासतांसदा । अनु गानामनुगम : स्वल्पस्थानाञ्चसञ्च य : ॥ विद्याबलंपण्डितानांवाणि ज्यंवणिजांबलम् । शश्वत्सुकर्म्म शीलानांगाम्भीर्य्यसाहसंबलम् ॥ धनं बलञ्चधनिनांशुचीनाञ्चविशेषत : । बलंविवेक: शान्तानांगुणिनांबलमे कता ॥ गुणोबलञ्चगुणिनांचौराणां चौर्य्यमेवच । विप्रवाक्यञ्चकापथ्यम धर्म्मगृणिनांबलम् ॥ हिंसाचहिंस्र जन्तूनांसतीनांपतिसेवनम् । वर-शापौसुराणाञ्चशिष्याणांगुरुसेवनम् ॥ बलंधर्म्मोगृहस्थानांभृत्यानांराजसे वनम् । बलंस्तव:स्तावकानांब्रह्मच ब्रह्मचारिणाम् ॥ यतीनाञ्चसदाचा रोन्यास : सन्यासिनांबलम् । पापं बलंपातकिनांसुभक्तानांहरिर्बलम् ॥ पुण्यं बलंपुण्यवतांप्रजानांनृपतिर्बल म् । फलंबलञ्चवृक्षाणांजलधीनांज-लंबलम् ॥ जलंबलञ्चमत्स्यानांमत्स्या नांचजलंबलम् । शान्तिर्बलञ्चभूपा नांविप्राणाञ्चविशेषत : ॥ इ० ॥

बलक्ष : । पुं० शुक्लवर्णे ॥ त्रि०तद्वति ॥

बलक्षगु : । पुं० चन्द्रे ॥

बलजम् । न० गोपुरे ॥ क्षेत्रे ॥ सस्ये । सङ्गरे ॥ धान्यराशौ ॥ बलिजातम् । जनौ० । ल : ॥ त्रि० भद्राकृतौ । सदाकारे ॥ बलजन्ये ॥

बलजा : । स्त्री० बल्का,दर्शनायाम् । वरयोषायाम् ॥ यूथ्याम् ॥ पृथिव्या म् ॥

बलद : । पुं० जीवके ॥ पौष्टिककर्म्म ण्यग्नौ ॥ त्रि० बलदातरि ॥

बलदा । स्त्री० अश्वगन्धायाम् ॥

बलदीनता । स्त्री० ग्लानौ ॥

बलदेव : । पुं० बलभद्रे । प्रलम्बघ्ने । अच्युताग्रजे ॥ अस्यध्यानंयथा । बलदेवंक्षिवाकुन्दशङ्खकुन्देन्दुसन्नि-भम् । वामेहलायुधधरंदक्षिणेमुस-लंकरे ॥ हालालोलंनीलवस्त्रंहेला वन्तंस्मरेत्परमिति ॥ वाते । वायौ ॥ बलेनदीव्यति । दिवु० । अच् ॥

बलदेवा । स्त्री० त्रायमाणायामोषधौ ॥

बलप्रसू : । स्त्री० रोहिण्याम् । बलरा ममातरि ॥ बलसूप्रसू : ॥

बलभद्र : । पुं० सौरिणि । हलायुधे ॥ बलशालिनि ॥ लोध्रे ॥ गवये ॥ ब लंभद्रंश्रेष्ठमस्य । बलेनभद्रइतिवा ।

॥ भगणे ॥
बलभद्रा । स्त्री० चायमाणौषधौ ॥ कुमार्याम् ॥ बलेनभद्रा ॥
बलभद्रिका । स्त्री० चायमाणौषधौ ॥ बलेनभद्रा । स्वार्थेकन् ॥ मायरोटिकायाम् ॥ यमस्तैरचितारोटी कथ्यतेबलभद्रिका । कृचोष्मावालला वल्यादीप्ताग्नीनांप्रपूजिता ॥
बलभित् । पुं० इन्द्रे ॥ बलंदैत्यविशेषंभिनत्ति । भिदिर्० । क्विप् ॥
बलभी । स्त्री० वडभ्याम् ॥ कूटागारे॥
बलराम : । पुं० बलदेवे ॥
बलल : । पुं० बलदेवे ॥ बलंलाति । ला० । क : ॥
बलवत् । च० अतिशये । निर्भरे ॥ बलमस्यास्ति । मतुप् ॥
बलवान् । त्रि० मांसले । अंसले । बलयुक्ते । बलमस्यास्ति । मतुप् ॥ प्रबले ॥
बलवर्द्धिनी । स्त्री० जीवकौषधौ ॥
बलवल्लभा । स्त्री० वारुण्याम् ॥
बलविन्यास : । पुं० व्यूहे ॥ बलस्यसेनायायुद्धार्थं देशविशेषे०विन्यासो दुर्लङ्घ्यत्वनिमित्तं विभज्यस्थापनम् ॥
बलसूदन : । पुं० इन्द्रे ॥ बलनामानमसुरंसूदितवान्० सूदयति । सूदक्षरणे । नन्द्यादित्वाल्ल्यु : ॥
बलस्थिति : । स्त्री० शिविरे ॥ बलस्य स्थिति : । बलस्यस्थितिर्यस्मिन्वा ॥
बलहा । पुं० श्लेष्मणि । कफे ॥
बला । स्त्री० वाट्यालके । बाडियाला० इ० गौ० भा० ॥ बलाचतुष्टयस्यनामादियथा । बलावाट्यालिकावाट्याचैववाट्यालकोपिच । महाबलापीतपुष्पासहदेवीचसास्मृता ॥ ततोन्यातिबलाऋष्यप्रोक्ताकङ्कतिकासहा । गाङ्गेरुकीनागबलाभषाह्रस्वागवेधुका ॥ बलाचतुष्टयंशीतंमधुरंबलकान्तिकृत् । स्निग्धंग्राहिसमीरास्रपित्तास्रक्षतनाशनम् ॥ बलामूलत्वचश्चूर्णं पीतंसक्षीरशर्करम् । मूत्रातिसारंहरतिदृष्टमेतन्नसंशय : ॥ हरेन्महाबलाकृच्छ्रं भवेद्वातानुलोमिनी । हन्यादतिबलामोहंपयसासितयासह ॥ अपिच । वाट्यालकोवाट्यपुष्पीसंमांसाविललावला । श्वेतवाडियाला० इ० गौ० भा० ऋष्यप्रोक्तात्वतिबला पीतपुष्पीमहाबला । पीतवाडियाला० इ०गौ०। भा० ॥ स्निग्धायुष्याबलावृष्याग्राहिणीवातपित्तजित् ॥ बलति । बलसंवरणे । पचाद्यच् । बलमस्यस्या : अर्शआद्यच् ॥ रामायविश्वामित्रेणदत्तायांविद्यायाम् ॥ यथा । क्षुत्पिपासेनतेरामभविष्येते तेनरोत्तम । बलामतिबलाञ्चैवपठत : पथिराघवेत्यार्षरामायणम् ॥ शारीरं

बलाधिक्यञ्चबलाया : फलम् ।
अतिबलायास्तुफलंमन : सङ्कल्प
मात्रेणालौकिकार्थसाधनमित्यन
योर्विशेष : ।।
बलाका । स्त्री० बकजातिविशेषे ।
बिसकण्ठिकायाम् । बगुली० इ०
भा० । जातिवाच्यायांस्त्रियामेव
सर्वदानियत: ।। बलते । बलसंव
रणेसंचरणेच । बलाकादयश्चेतिसा
धु : ।। बलेनअकतिवा । अककु
टिलायांगतौ । अच् । बला
काश्कादङ्कौस्याद्बलाकाशक्लकोषु
च । सारसहंसबलाकाचक्राङ्गा
दयोजलेप्लवनात् । प्लवसंज्ञा :
कथितास्तेतन्मांसंगुरुष्णंचबलदा
यि ।। अन्येबकबलाकाद्यागुरव :
प्राणिभक्षणात् ।।
बलाकी । त्रि० बलाकावति ।। बलाका
अस्तिअस्यअस्मिन्वा । व्री०इनि: ।।
बलांचिता । स्त्री० रामवीणायाम् ।।
बलाट : । पुं० मुद्गे ।।
बलात् । अ० हठादर्थे । यथा । बला
त्सन्दूषयेद्यस्तुपरभार्यांनर : क्व
चित् । वधदण्डोभवेत्तस्यनापराधो
भवेत्स्त्रिया : ।।
बलात्कार : । पुं० प्रसभे । हठे ।।
बलादितिनिपातोहठे० इ० स्वामी
।। बलात्करणम् । भावेघञ् ।।
बद्ध्वास्वगृहमानीयताडनाद्यैरुप
क्रमै : । ऋणिकोदाप्यतेयच्चबला
त्कार : प्रकीर्तित : ।।
बलात्मिका । स्त्री० हस्तिशुण्डायाम् ।।
बलाद्या । स्त्री० बलायाम् ।।
बलाध्यक्ष : । पुं० सेनापतिदशकस्ये
कस्मिन्सेनानायके ।।
बलानुज : । पुं० श्रीकृष्णे ।।
बलामोटा । स्त्री० नागदमन्याम् । वि
षापहायाम् ।। बलामोटाकटुस्ति
क्तालघुपित्तकफापहा । मूत्रकृच्छ्र
व्रणान्रक्षोनाशयेज्जालगर्दभान् ।।
सर्वग्रहप्रशमनीनि : शेषविषनाशि
नी । जयंसर्वत्रकुरुतेधनदासुमति
प्रदा ।।
बलाय : । पुं० वरुणद्रुमे ।।
बलाराति : । पुं० शचीपतौ । इन्द्रे
।। बलस्यासुरस्यअराति : शत्रु : ।।
बलालक : । पुं० पानीयामलके ।।
बलाश : । पुं० ) श्लेष्मणि ।।
बलाशक: । पुं० ) इतिहेमचन्द्र : ।।
बलास : । पुं० कफे ।।
बलाहक : । पुं० मेघे । अम्बुदे ।।
वारिवाहकोबलाहक : । पृषोदरा
दित्वात्पूर्वपदस्याव : उत्तरपदादे
श्चलत्वम् ।। बलाकाभिर्हीयतेगम्य
ते । ओहाङ् गतौ० पृ० ।। बले
नहीयतेवा । क्तुन् ।। गिरौ ।। दैत्य
विशेषे ।। नागविशेषे ।। मुस्तके ।।
श्रीकृष्णस्यन्दनाश्वे ।। रमागर्भोद्भव

कल्किदेवपुत्रे ॥
बलाह्वकन्द: । पुं० गुलञ्चकन्दे ॥
वलि: पुं० दैत्यप्रभेदे । विरोचनात्मजे ॥ करे । राजग्राह्यभागे ॥ चामरदण्डे ॥ उपहारे । उपायने । भेंट० इ० भा० ॥ पूजासामग्र्याम् ॥ नियोज्योपजीव्ये ॥ पञ्चमहायज्ञान्तर्गतभूतयज्ञे ॥ तिर्यग्भिक्षुकादिदाने ॥ ययातिवंशोद्भवसुतपोराजपुत्रे ॥ वलिवैश्वनामकपंचयज्ञान्तर्गतयज्ञविशेषे ॥ बलते० बल्यते वा । बलप्राणने० बलसंवरणे संचरणे च । सर्वधातुभ्यइन् ॥ वलनम् । बलदाने । वलते वा । खनिकषीति० इर्वा ॥ यद्वा । वर्णि : सौच : । अस्य० वर्णो वलिश्चाहिरण्ये० इतिवलिरादेश : ॥
वलि : । स्त्री० जरयाश्लथचर्मणि ॥ चर्म्मतरङ्गे ॥ गृहदारुप्रभेदे ॥ जठरावयवे ॥ यथा । एकवलि : शस्त्रमृत्यु : स्त्रीभोगीद्विवलि: स्मृत : । त्रिभिराचार्य इत्याहुश्चतुर्भि:स्याद्बहुप्रज : ॥ अवलिस्तुनृप: प्रोक्तोयज्वादानैक तत्पर: । विषमावलयोयेषुते चागम्याभिगामिन: ॥ ऋजव्यस्तुवलयोयेषुते नरा: सुखभागिन : ॥ इति ॥ गन्धर्के ॥ गुदाङ्कुरे ॥

वलिकम् । न० पटलप्रान्ते ॥
वलिकर : । त्रि० वलिकर्त्तरि ॥ वलिंकरोति । दिवाविभेतिट : ॥
वलिका । स्त्री० अतिवलायाम् ॥
वलिक्रिया । स्त्री० इष्टदेवतापूजाविधौ ॥
वलित : । त्रि० वेष्टिते ॥
वलिदानम् । न० देवोद्देशेनयथाविधिपूजोपहारत्यागे ॥ देवतोद्देशेन सङ्कल्पपूर्व्वकच्छागादिपशुघातने ॥ वलिदानेनसततंजयेच्छत्रून्नृपान्नृप ॥
बलिध्वंसी । पुं० विष्णौ ॥ वलिमसुरविशेषंध्वंसितुंशीलमस्य । ताच्छील्येणिनि : ॥ बलिनापूजादिना०अविद्यांध्वंसितुंशीलमस्येतिवा ॥
बली । पुं० बलदेवे ॥ माषे ॥ वृषभे ॥ महिषे ॥ उष्ट्रे ॥ शूकरे ॥ कफे ॥ कंदवृक्षे ॥ त्रि०बलवति । उपचिते । मांसले ॥ बलमस्यास्ति । बलादिभ्योमतुबन्यतरस्यामितिपक्षे इनि : ॥
वलिन : । त्रि० वलिभे । श्लथचर्म्मवति ॥ वलिश्चर्मसङ्कोचोस्यास्ति । पामादित्वान्न : ॥
बलिनन्दन : । पुं० बाणासुरे ॥
बलिनी । स्त्री० बलायाम् । वाट्यालके ॥ बलमस्त्यस्याम् । बलादिभ्योम

तुवन्यतरस्यामितिपचेद्दनि : ॥
बलिपुष्ट : । पुं० काके ॥ बलिनापुष्ट : ॥
वलिपोदकी । स्त्री० उपोदक्याम् ॥
वलिप्रिय : । पुं० लोध्रवृक्षे ॥
वलिभ : । त्रि० वलिने । जरयाश्लथचर्मणि ॥ वलिश्चर्मसङ्कोचोस्यास्ति । तुन्दिवलिवटेर्भ : ॥
बलिभुक् । पुं० वायसे ॥ बलिंभुङ्क्ते । भुजपालनाभ्यवहारयो : । क्विप् ॥
वलिमन्दिरम् । न० पाताले ॥ बलेर्मंदिरमत्र ॥
बलिमुख : । पुं० वलिमुखे ॥
वलिशम् । न० बडिशे । मत्स्यवेधने ॥ वलिनोमत्स्यान् श्यति । शोतनूकरणे । आतोनुपेतिक : ॥
बलिष्ठ: । त्रि० बलवत्तमे ॥ अतिशयेनबलवान् । बलशब्दान्मतुबन्तादिष्ठन्प्रत्यय : । विन्मतोर्लुगितिमतुपोलुक् ॥ प्रायश्चित्तं विनापूतात्त्वमेवशुद्धमानसा । अकामायावलिष्ठेननस्त्रीजारेणदुष्यति ॥
बलिष्णु : । त्रि० अपमानिते ॥
बलिसद्म । न० रसातले । पाताले । बले : सद्म ॥
वलिहा । पुं० विष्णौ ॥
वली । स्त्री० वलौ । त्वगूर्मौ । चर्मतरङ्गे ॥
वलीकम् । न० नीध्रे । पटलप्रान्ते । छांचीं० ह्र० गटे० भा० ॥ परावली० ह्र० भा० ॥ वलति । आवृणोतिभित्त्यादि । जलसंवरणे । अलीकादयश्चेतिकीकन् ॥
वलीमुख : । पुं० वानरे ॥ वलीयुक्तंमुखमस्य ॥
वलीयान् । त्रि० अतिशयेनबलयुक्ते ॥
बलीवर्द : । पुं० वृषे । बैल० बरध० बर्धा० ह्र० भा ॥ बरणम् । वरईप्सायाम् । सम्पदादित्वात्क्विप् । ईश्वरश्च० ईवरी । तौददाति । आतद्वतिक : । अतिशयितंबलमस्य । अतद्दनि: । बलीचासौ० ईवर्दश्च ॥ तीर्थयात्रायांतदारूढस्यदोषोयथा-मात्स्ये । बलीवर्दसमारूढः शृणु तस्यापियत्फलम् । नरकेवसतेघोरेगवांक्रोधेहिदारुणे ॥ सलिलञ्च-नगृह्णन्तिपितरस्तस्यदेहिन इति ॥
वलु : । स्त्री० हस्तिदंतालिकायाम् ॥
वलूक : । पुं० पद्ममूले । पक्षिविशेषे ॥ वलते । वल० । वलेरूक : ॥
वलूल: त्रि० बलवति ॥ बलंनसहते । बलाटूल : ॥
वल्मिक : । पुं० न० वल्मीके ॥
वल्मीकि : । पुं० न० वल्मीके ॥
वल्मीक : । पुं० न० वामलूरे । नाकौ । पिपीलिकादिकीटविशेषकृतेमृत्स्तूपे । बावी० ह्र० भा० ॥ न० रोग

विशिषे । अश्वलक्षणं । यथा । ग्रीवांसकक्षाकरपाददेशेसन्धौगलेवाचिभिरेवदोषै : । ग्रन्थि : सवल्मीकवदक्रियाणांजात : क्रमेणैवगतप्रवृद्धि : ॥ मुखैरनेकै : स्रुतितोदवह्निर्विसर्पवत्सर्पतिचोन्नताग्रै : । वल्मीकमाहुर्भिषजोविकारंनिष्प्रत्यनीकंचिरजंविशेषात् ॥ वाल्मीकिमुनौ ॥ वलन्तिप्राणिनोऽत्र । अलीकादयश्चेति कीकन्नन्तोनिपातित : ॥

वल्मीकशीर्षम् । न० स्रोतोञ्जने ॥

वल्मीकि : । पुं० वल्मीके ॥

वल्मीकूटम् । न० वल्मीके ॥

वल्य : । पुं० वुद्धभिक्षुके । श्रमणे ॥ न० प्रधानधातौ । रेतसि ॥ त्रि० वलकरे ॥

वल्या । स्त्री० अतिबलायाम् ॥ अश्वगन्धायाम् ॥ शिमृडीक्षुपे ॥ प्रसारिण्याम् ॥

वल्ल : । पुं० गुञ्जात्रयपरिमाणे । द्विगुञ्जे परिमाणे ॥ सार्द्धगुञ्जायाम् ॥ वल्लते । वल्लसंवरणे सञ्चरणे च । प० अच् ॥

वल्लक : । पुं० निष्पावे । राजशिम्ब्याम् ॥

वल्लकी । स्त्री० वीणायाम् । विपञ्च्याम् ॥ वल्लते । वल्ल० क्वुन् । गौरादित्वान्ङीष् ॥ सल्लकीवृक्षे ॥

वल्लभ : । त्रि० दयिते । प्रिये ॥ अध्यक्षे ॥ न० कुलीनाश्वे । सल्लक्षणतुरङ्गमे ॥ अध्यक्षोऽश्वगवाध्यक्ष दूतिस्वामी ॥ वल्लते० वल्ल्यतेवा । वल्ल० । रासिवल्लिभ्यांचेत्यभच् ॥

वल्लभपाल : । वल्लभपालक: | पुं० | उत्तमाश्वपाले ॥ अश्वरक्षके ॥

वल्लभा । स्त्री० प्रियायाम् । प्रेयस्याम् ॥

वल्लरम् । न० वल्लुरे ॥

वल्लरि : । स्त्री० मञ्जर्याम् ॥

वष्कय : । पुं० तरुणवत्से । वछेडा० दू० भा० ॥ वष्कते । वष्कगतौ । वा० अयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् ॥

वष्कयिणी । स्त्री० तरुणवत्सायाङ्गवि० । बोखडी० दू० भा० ॥ वष्कयस्तरुणवत्स : ० सोस्त्यस्या : । अतइनिठनावितीनि : । अट्कुप्वाङिति णत्वम् । ङीप् ॥

वह्नि : । अ० वाह्ये ॥ वहति । वह० डुस् ॥ ववयोरभेद : ॥

वहु । त्रि० त्र्यादिसङ्ख्यासु ॥ विपुले । भूयसि ॥ वंहते । वहिवृद्धौ ॥ लङ्घिवंह्योर्नलोपश्चेत्यु : ॥ स्त्रियां० वह्वादित्वात्०पाक्षिकोङीषभाव: । ङीष्पक्षे० वह्वी ॥

वंहुक : । पुं० कर्कटे ॥ अर्के ॥ दात्यू

हे । जलखातके ॥ त्रि० बहुभिःक्रीते ॥ सङ्ख्यायाअतिशदन्तायाः कन् ॥

बहुकण्टकः । पुं० क्षुद्रगोक्षुरे ॥ यवासे । हिन्ताले ॥

बहुकण्टका । स्त्री० अग्निदमन्याम् ॥

बहुकण्टा । स्त्री० कण्टकार्याम् ॥

बहुकन्दः । पुं० शूरणे ॥

बहुकन्दा । स्त्री० कर्कट्याम् ॥

बहुकरः । पुं० वक्रग्रीवे ॥ उष्ट्रे ॥ त्रि० खलपूि ॥ स्त्रियांबहुकरा ॥ बहुकार्यकर्तरि ॥ बहुकरोतिभुवंसमार्ष्टि । किंयत्तद्बहुषुकृञोज्विधानमित्यच् ॥

बहुकरी । स्त्री० बहुकरभार्यायाम् ॥ पुंयोगलक्षणोङीष् ॥ सम्मार्जन्याम् ॥

बहुकर्णिका । स्त्री० आखुकर्ण्याम् ॥

बहुकूर्चः । पुं० मधुनालिकेरके ॥

बहुक्षमः । पुं० बुद्धे ॥ बहुक्षमते । क्षमूष्० । ईचिक्षमिभ्यान्त्वितणः ॥

बहुगन्धम् । न० त्वचे ॥ पुं०कुन्दुरुके ॥

बहुगन्धदा । स्त्री० कस्तूर्याम् ॥

बहुगन्धा । स्त्री० चम्पककलिकायाम् ॥ यूथिकायाम् ॥ कृष्णजीरके ॥

बहुगर्ह्यवाक् । त्रि० कुत्सितबहुवादिनि ॥ जल्पाके ॥ बहुगर्ह्यावागस्य ॥

बहुग्रन्थिः । पुं० झावुके ॥ बहवोग्रन्थयोयस्मिन् ॥

बहुच् । पुं० प्रत्ययविशेषे ॥ सचप्रकृतेःपूर्वंभवति० प्रकृतेर्लिङ्गंचभजते । स्यादीषदसमाप्तौतुबहुच्प्रकृतिलिङ्गकः ॥

बहुच्छिन्ना । स्त्री० कन्दगुडूच्याम् ॥

बहुतन्त्रीः । त्रि० बहुतन्त्रीविशिष्टे ॥ यथा । बहुतन्त्रीःकायः । बहुतन्त्रीर्ग्रीवा । बहुतन्त्रिशरीरम् । बह्व्यस्तन्त्र्योयस्मिन् । नाडीतन्त्र्योःस्वाङ्गे०इ०नकप् ॥

बहुतन्त्रीकः । पुं० बहुतन्त्रविशिष्टे । यथा । बहुतन्त्रीकःपटः । बहुतन्त्रीकावीणा । बहुतन्त्रीकंवासः । बह्व्यस्तन्त्र्योयस्मिन्कप् ॥

बहुतरकणिशः । पुं० रामीधान्ये ॥

बहुता । स्त्री० बहुत्वे ॥

बहुतिक्ता । स्त्री० काकमाच्याम् ॥

बहुतिथः । त्रि० बहुसङ्ख्याके ॥ बहूनांपूरणः । तस्यपूरणेडट् । बहुपूगगणसङ्घस्यतिथुक् ॥

बहुतृणम् । न० तृणकल्पे ॥ ईषदसमाप्तंतृणम् । विभाषासुपोबहुच्पुरस्तात् ॥

बहुत्वम् । न० बहुतायाम् ॥ बहोर्भावः । तस्यभावस्त्वतलौ ॥

बहुत्वक् : बहुत्वक् पुं० भूर्जद्रुमे ॥

बहुदुग्धः । पुं० गोधूमे ॥

बहुदुग्धा । स्त्री० वज्रुलायाम् । बहुक्षीरायांगवि ॥ बहुदुग्धंयस्याम् ॥

वहुदुग्धिका । स्त्री० स्नुहीवृक्षे ॥

वहुधा । अ० अनेकप्रकारे ॥ वहव : प्रकारा: । सङ्ख्यायाविधार्थेधावा ॥ यद्वा । वहुवारान् ० इति० क्रियाभ्यावृत्तिगणने० विभाषावहोर्धाऽविप्रकृष्टकालइतिधा । वहुधावहुकृत्वोवा दिवसस्यभुङ्क्ते ॥

वहुधान्य : । पुं० वत्सरविशेषे ॥ सुभिक्षंक्षेममारोग्यंप्रशान्ता : पार्थिवा : प्रिये । तस्करोपहृतंवित्तंवहुधान्येवरानने ॥ १२ ॥ अतिशय धान्यविशिष्टे ॥

वहुधारम् । न० वज्रे ॥

वहुनाडि : । त्रि० काये ॥ नाडीतन्त्र्यो : स्वाङ्गइतिनकप् ॥

वहुनाडीक : । त्रि० स्तम्भे ॥ दिवसे ॥ वह्व्योनाड्योयस्मिन् । कप् ॥

वहुनाद : । पुं० शङ्खे ॥

वहुनामा । पुं० असङ्ख्यातनामनि परमेश्वरे ॥ वहूनिनामानियस्य ॥ सर्वाख्येतानिनामानिपरस्यब्रह्मणो हरेरितिपुराणोक्ते : ॥

वहुपट : । त्रि० ईषदूनेपटौ ॥ वहुपु ष्कर्मसुदक्षे ॥

वहुपत्त्र : । पुं० पलाण्डौ न० अभ्रके ॥ त्रि० अनेकपत्त्रयुक्ते ॥

वहुपत्त्रा । स्त्री० तरुणीपुष्पे ॥

वहुपत्त्रिका । स्त्री० भूम्यामलक्याम् ॥ मेथिकायाम् ॥ महाशतावर्याम् ॥

वहुपत्त्री । स्त्री० खिङ्गिन्याम् ॥ गृहकन्यायाम् ॥ तुलस्याम् ॥ अतुकाकायाम् ॥ हड्ल्याम् ॥ गोरक्षदुग्धायाम् ॥

वहुपर्ण : । पुं० सप्तच्छदवृक्षे ॥ त्रि० अनेकपत्त्रयुक्ते ॥

वहुपर्णिका । स्त्री० आखुकर्ण्याम् ॥

वहुपर्णी । स्त्री० मेथिकायाम् ॥

वहुपात् । पुं० वटवृक्षे ॥ ॥ वहव : पादाअस्य । सङ्ख्यासुपूर्वस्य ॥

वहुपाद : । पुं० वटवृक्षे ॥

वहुपुत्त्र : । त्रि० अनेकसुतविशिष्टे ॥

वहुपुत्त्रा । स्त्री० भूम्यामलक्याम् ॥

वहुपुत्त्री । स्त्री० शतमूल्याम् ॥

वहुपुष्प : । पुं० पारिभद्रवृक्षे ॥

वहुपुष्पिका । वहुपुष्पी । स्त्री० धातक्याम् ॥

वहुप्रज : । पुं० मुञ्जतृणे ॥ शूकरे ॥ त्रि० अनेकसन्तानयुक्ते ॥

वहुप्रतिज्ञ : । पुं० अनेकपदसङ्कीर्णपूर्वपक्षविशिष्टव्यवहारे ॥ त्रि० अनेकप्रतिज्ञायुक्ते ॥

वहुप्रद : । त्रि० अतिदातरि । वदान्ये । दानशौण्डे ॥ वहुप्रददाति । प्रेदाज्ञइतिक : ॥

वहुप्रसू : । स्त्री० क्रमिलायाम् । वहुसन्तानप्रसवकारिण्याम् ॥

वहुफल : । पुं० कदम्बे । नीपे ॥ वि

कहते ॥ तेज : फले ॥

बहुफला । स्त्री॰ भूम्यामलक्याम् ॥ क्षविकायाम् ॥ माषपर्ण्याम् ॥ काकमाच्याम् ॥ त्रपुष्याम् ॥

बहुफलिका । स्त्री॰ भूवदर्याम् ॥

बहुफली । स्त्री॰ आमलक्याम् ॥ मृगेर्वारौ ॥

बहुफेना । स्त्री॰ सातलायाम् ॥

बहुवल : । पुं॰ सिंहे ॥ त्रि॰ अतिशय बलयुक्ते ॥

बहुमञ्जरी । स्त्री॰ तुलस्याम् ॥

बहुमत : । त्रि॰ बहूनांसम्मते॥ नात्यन्तंसंस्कृतेनैवनात्यन्तंदेशभाषया । कथांगोष्ठीषुकथयँल्लोकेवहुमतोभवेत् ॥

बहुमल : । पुं॰ सीसके ॥ त्रि॰ अनेकमलयुक्ते ॥

बहुमार्ग : । पुं॰ न॰ चत्वरे ॥ बहूनां मार्ग : समाहारोवा । त्रि॰ अनेक पथयुक्ते ॥

बहुमूर्ति : । स्त्री॰ वनकार्पासे ॥ त्रि॰ नानाकारे ॥

बहुमूर्द्धा । पुं॰ विष्णौ ॥

बहुमूल : । पुं॰ इक्कटे ॥ शिग्रौ ॥ स्थूलशरे ॥ त्रि॰ अनेकमूलयुक्ते ॥

बहुमूलक : । पुं॰ इक्कटे ॥ न॰ उशीरे ॥

बहुमूला । स्त्री॰ शतावर्याम् ॥

बहुमूली । स्त्री॰ माकन्द्याम् ॥

बहुमूल्य : । त्रि॰ महाधने । महार्घवस्तुनि ॥

बहुयाज्य : । पुं॰ अनेकयजमाने ॥ वहवोभूयांसोयाज्यायाजनीयायस्य ॥

बहुरन्ध्रिका । स्त्री॰ मेदायाम् ॥

बहुरसा । स्त्री॰ महाज्योतिष्मत्याम् ॥

बहुरुहा । स्त्री॰ कन्दगुडूच्याम् ॥

बहुरूप : । पुं॰ शिवे ॥ विष्णौ ॥ धूनके । सर्जरसे ॥ सरटे ॥ स्मरे । कामदेवे ॥ ब्रह्मणि ॥ कुन्तले । केशे ॥ वुद्धप्रभेदे ॥ वालयुवादिरूपे देवनरादिरूपेजीवे ॥ बहुरूपइवा भातिमाययावहुरूपया । रममाणो गुणेष्वस्याममाहमितिमन्यते ॥ नानाकृतिगत्स्वत्वात्॰ बहूनिरूपाण्यस्य ॥ त्रि॰ नानारूपयुक्ते ॥

बहुरूपक : । पुं॰ जाहकजन्तौ ॥

बहुरूपा । स्त्री॰ दुर्गायाम् ॥

बहुरेखा। स्त्री॰ प्रचुरदीर्घचिह्नायाम्॥ बहुरेखायुक्तायाःस्त्रियादोषोयथा । रेखाभिर्बहुभि : क्लेशंस्वल्पाभिर्धनहीनताम् । रक्ताभि : सुखमाप्नोतिकृष्णाभिःप्रेष्यतांव्रजेत् ॥

बहुरेता : । पुं॰ ब्रह्मणि ॥

बहुरोमा । पुं॰ मेषे ॥ त्रि॰ लोमशे ॥

बहुल : । पुं॰ अग्नौ ॥ कृष्णपक्षे ॥ न॰ विहायसि । आकाशे ॥ सित मरिचे ॥ त्रि॰ प्राज्ये ॥ कृष्णवर्णे ॥ बहून्अर्थान्लाति । ला॰ । आतो

नुपेतिक : ॥ बहूनिबीजानिलाति वा ॥
बहुलगन्धा । पुं० एलायाम् ॥
बहुलच्छद : । पुं० रक्तशिग्रौ ॥
बहुलवणम् । न० औषरके ॥
बहुलवल्कल : । पुं० भूर्ज्जे ॥ चारे पियाले ॥
बहुला । स्त्री० नीलिकायाम् ॥ एलायाम् ॥ गवि । धेनौ ॥ देवीविशेषे ॥ टाप् ॥
बहुला : । स्त्री० भूम्नि० कृत्तिकासु ॥
बहुलिमा । पुं० । बहुलत्वे ॥ बहुलस्वभाव : । इमनिच् ॥
बहुलीकृतम् चि० अपनीततुच्छधान्ये धान्यादौ । पूते ॥ अबहुलंबहुलमकारि । अभूततद्भावेच्वि : । अस्यच्वौ ॥
बहुवचनम् । न० येनबहवोर्थाउच्यन्ते तस्मिन् ॥ बहूनामर्थानांवचनम् । वचे : करणेल्युट् । कर्मणिषष्ठ्या समास : ॥
बहुवल्क : । पुं० प्रियाले ॥
बहुवल्ली । स्त्री० डोडिक्षुपे ॥
बहुवार : । पुं० उद्दाले । शेलौ । श्लेष्मांतके । लसोडा० इ० भा० ॥ बहुवारोविषस्फोटव्रणवीसर्पकुष्ठनुत् । मधुरस्तुवरस्तिक्त: केश्यश्चकफपित्तहृत् ॥ फलमामन्तुविष्टम्भिरूक्षंपित्तकफास्रजित् । तत्पक्कं मधुरंस्निग्धंश्लेष्मलंशीतलंगुरु ॥
बहुवारक : । पुं० श्लेष्मांतके । बहुवारे ॥ बहून्वारयति । वृञ् । णिजन्त : । क्वुन्शिल्पिसंज्ञयोरपूर्वस्यापि ॥
बहुविध : । चि० विविधे । नानारूपे । पृथग्विधे ॥ बहवोविधायस्य ॥
बहुविस्तीर्णा । स्त्री० कुंचिताकाम् ॥
बहुबीजम् । न० गण्डगात्रे । चात्र्ये ॥
बहुवीर्य : । पुं० बिभीतके ॥ तण्डुलीयशाके ॥ शाल्मलिवृक्षे ॥ मरुवे ॥
बहुवीर्या । स्त्री० भूम्यामलक्याम् ॥
बहुव्रीहि : । पुं० प्रायोन्यपदार्थप्रधानेसमासविशेषे ॥ सचसप्तधा । द्विपद: । बहुपद: संख्योत्तर: संख्योभयपद: दिगन्तराललक्षण: व्यतिहारलक्षण : सहपूर्वपदश्चेतिभेदात् ॥ चि० प्रचुरधान्ययुक्ते ॥
बहुशत्रु : । पुं० चटके ॥
बहुशल्य : । पुं० रक्तखदिरे ॥ चि० अनेकशल्ययुक्ते ॥
बहुश : । अ० भूरिशब्दार्थे ॥ बहूनि । बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥
बहुशाख : । चि० अनेकभेदे ॥
बहुशाल : । पुं० स्नुह्याम् ॥
बहुशिखा । स्त्री० जलपिप्पल्याम् ॥
बहुश्रवा । स्त्री० शल्लकीतरौ ॥
बहुसन्तति : । पुं० त्वक्सारप्रभेदे ।

वेदुवांस० द्रु० गौ० भा० ॥ त्रि० अनेकसन्तानवति ॥

बहुसम्पुटः। पुं० विष्णुकन्दे ॥

बहुसारः। पुं० खदिरे ॥

बहुसुता। स्त्री० शतमूल्याम् ॥

बहुसूः। स्त्री० शूकर्याम् ॥ बहुप्रसवायाम् ॥

बहुसूतिः स्त्री० परेष्टुकायाम्। बह्व पत्यायांगवि ॥ बह्वीसूतिर्यस्याः ॥ बहुसन्तानप्रसवायाम् ॥

बहुस्रवा। स्त्री० शल्लकीवृक्षे ॥ नाना क्षरणशीलायाम् ॥

बहुस्वनः। पुं० पेचके ॥ त्रि० अनेक शब्दयुक्ते ॥

बह्वपत्यः। पुं० शूकरे ॥ मूषके ॥ त्रि० बहुसन्तानयुक्ते ॥

बह्वाशी। त्रि० बहुभोजनशीले ॥ बह्वा शाविशिष्टे ॥

बह्वी। स्त्री० बहुर्थे। बह्वादित्वान् ङीष् ॥

बह्वृक्। स्त्री० ऋग्वेदे ॥ न० सूक्त विशेषे ॥

बह्वृचः। पुं० ऋग्वेदिब्राह्मणे ॥ बह्व्यऋचोऽध्येतव्यायेन। ऋक् पूरित्यः ॥

बह्वृची। स्त्री० अध्वर्य्याम्। अध्व र्युशाखाध्येत्र्याम् ॥ बह्व्यऋचो-ध्येतव्याययासेतिविग्रहः। अनृच बह्वृचावध्येतर्य्येवेतिवचनात् ० ऋक्पूरित्यप्रत्ययः समासान्तः। यद्यपि० स्त्रीणांस्वाध्यायाध्ययनं प्रतिषिद्धम् ० तथापिपुराकल्पे ह्येतदासीत्। यथा। पुराकल्पे षु नारीणांमौञ्जीबन्धनमिष्यते। अध्यापनञ्च वेदानां सावित्रीवच नं तथेतियमवचनात् ॥ गोत्रञ्च चरणैः सहेतिजातित्वान् ङी ष् ॥

वा। स्त्री० गते ॥ गन्धने ॥ तन्तुसं ताने ॥

वाढम्। न० दृढे ॥ प्रतिज्ञायाम् ॥ भृशे। अतिशये ॥ वाहते। वाहृ प्रयत्ने। ओष्ठादिः। गत्यर्थेति क्तप्रत्यये० क्षुब्धस्वान्तेतिनिपातित म् ॥ त्रि० अतिशायिनि ॥ क्रिया विशेषणेऽस्यक्लीबत्वम्। द्रव्यविशे षणत्वे तुवाच्यलिङ्गत्वम् ॥

वाणः। पुं० पश्वयवर्गे ॥

वाणिः। स्त्री० वस्त्रादीनांवपनक्रिया याम्। व्यूतौ ॥

वाणिजः। पुं० वणिजि ॥ वाडवाऽ ग्नौ ॥ पणते। पण० । पणेरिज्या देश्वः। स्वार्थे प्रज्ञाद्यण् ॥

वाणिजकः। पुं० वणिजि। वाडवा ग्नौ। धूर्त्ते ॥

वाणिज्यम्। न० सत्यानृताख्यवैश्य वृत्तौ। वणिज्यायाम्। क्रयविक्रया दिलक्षणे वणिजकर्म्मणि ॥ वणि जांकर्म्मभावोवा। ब्राह्मणादित्वा

त्प्यञ् ॥
वाणिनी । स्त्री० नर्त्तक्याम् ॥ छेकायाम् । मत्तयोषायाम् ॥ विदग्धवनितायाम् । अवश्यं वणति । वणशब्दे । आवश्यकेति० ग्रह्यादित्वाद्दाणिनिः । बवयोरैक्यं ॥
वाणी । स्त्री० वाण्याम् ॥
वाध : । पुं० प्रतिबन्धके । व्याघाते ॥ अन्वयानुपपत्तौ ॥ अतिदिष्टपदार्थनिवृत्तौ ॥ ज्ञानान्तरेणविषयासत्त्वप्रतीतौ ॥ न्यायमते साध्याभाववत्पक्षे ॥ य० । ह्रदोवह्निमान् ॥
वाधक : । पुं० प्रतिबंधके ॥ आधिक्यं वाधकत्वे हेतु : । वाधते । वाधृ० । ण्वुल् ॥ स्त्रीणांरोगविशेषे ॥ यथा । रक्तमाद्रीतथाषष्ठीचाङ्कुरो जलकुमारक : । चतुर्विधोवाधक: स्यात् स्त्रीणांमुनिविभाषित : ॥ तेषांस्वभावंवक्ष्यामियथाशास्त्रंविधानत : । एतेषांपूजनंकार्यंजनै : सन्तानकाङ्क्षिभि : ॥ नि:सारणंस्थापनञ्चवलिदानंजपस्तथा कर्त्तव्यो गुरुवाक्येन यथाशास्त्रं विचक्षणै : ॥ चतुर्विधोवाधकस्तुजायते ऋतुकालत : ॥ तस्य लक्षणंयथा । व्यथाकट्यांतथानाभेरध : पार्श्वे स्तनेऽपिच । रक्तमाद्री प्रदोषेणजायतेफलहीनता ॥ मासमेकंद्वयंवापिऋतुयोगोभवेद्यदि । रक्तमाद्रीप्रदोषेणफलहीनातदाभवेत् ॥ इतिरक्तमाद्र्या:नेत्रेहस्ते भवेज्ज्वालायोनौचैवविशेषत : । लालासंयुतरक्तञ्चषष्ठीवाधकयोगत : ॥ मासैकेनभवेद्यस्याऋतुस्नानंद्वयंतथा । मलिना रक्तयोनि:स्यात् षष्ठीवाधकयोगत : ॥ इतिषष्ठ्या : ॥ उद्वेगोगुरुतादेहेरक्तस्रावोभवेद्बहु । नाभेरधोभवेच्छूलंचाङ्कुर : सतुवाधक: ॥ ऋतुहीनाचतुर्मासंत्रिमासंवाभवेद्यदि । कृशाङ्गीकरपादेचज्वालाचाङ्कुरयोगत : ॥ इतिचाङ्कुर : ॥ सशूलाचसगर्भाचशुद्धदेहाल्परक्तिका । जलकुमारस्यदोषेणजायते बलहीनता ॥ याकृशाङ्गीभवेत्स्थूलाबहुकालऋतुस्तथा । गुरुस्तनीस्वल्परक्ता जलकुमारस्यदूषणात् ॥ इतिजलकुमारस्य ॥ इतिवैद्यकम् ॥ त्रि० वाधाजनके ॥
वाधनम् । न० पीडायाम् ॥ प्रतिबंधके ॥
वाधा । स्त्री० दु:खे । पीडायाम् ॥ निषेधे ॥ वाधृलोडने । गुरोश्चेत्य : ॥
वाधित: । पुं० हेत्वाभासविशेषे ॥ यस्य साध्याभाव : प्रमाणेननिश्चित : स वाधित : । यथा । वह्निरनुष्णोद्रव्यत्वादिति । अत्रानुष्णत्वंसाध्याभाव: । उष्णत्वंस्पर्शेनप्रत्यक्षेणगृह्यते० इ-

तिबाधितत्वम् ॥ त्रि० बाधायुक्ते ॥ पीडिते ॥ तारकादित्वादितच् । निवृत्ते ।

बाधिर्य्यम् । न० बधिरत्वे ॥ बधिरस्य भाव : । ष्यञ् ॥ कर्णरोगविशेषे । तस्यनिदानम् बधिरेऽवलोकनीयम् । औषधन्तु । शुष्कमूलकशुण्ठीनां चारोहिङ्गुलनागरम् । शुक्तं चतुर्गुणंदद्यात्तैलमेतैर्विपाचयेत् ॥ बाधिर्यंकर्णशूलञ्चपूयस्रावश्चकर्णयो : । क्रमयश्चविनश्यन्ति तैलस्यास्यप्रपूरणात् ॥

बाध्य : । त्रि० निराकरणयोग्ये । बाधितव्ये । बाधनीये ॥ न्यूनत्वंबाध्यत्वे हेतु : ॥

बांधकिनेय : । पुं० बंधुले । असतीसुते ॥ कौलटेये ॥ वंधक्याअपत्यम् । स्त्रीभ्योढकिकल्याण्यादित्वादिनङादेशश्च ॥

बांधव : । पुं० मित्रे । सुहृदि ॥ सगोत्रे । बंधौ । ज्ञातौ । स्वजने ॥ बांधवास्त्रिविधा: । आत्मबांधवा:० पितृबांधवा:० मातृबांधवाश्चेति । यथोक्तम् । आत्मपितृष्वसु : पुत्राआत्ममातृष्वसु : सुता : । आत्ममातुलपुत्राश्चविज्ञेयाआत्मबांधवा : ॥ पितु : पितृष्वसु : पुत्रा : पितुर्मातृष्वसु : सुता : । पितुर्मातुलपुत्राश्चविज्ञेया : पितृबांधवा : ॥ मातु : पितृष्वसु : पुत्रामातुर्मातृष्वसु : सुता : । मातुर्मातुलपुत्राश्चविज्ञेया मातृबांधवा: ॥ इति ॥ बंधुरेव । प्रज्ञाद्यण् ॥

बाभ्रवी । स्त्री० दुर्गायाम् ॥ पश्यबाभ्रवीम् ॥

बारक : । पुं० अश्वगतौ ॥ त्रि०निषेधके ॥

बारकी । पुं० शत्रौ ॥ चित्राश्वे ॥ पर्णाजीविनि ॥ पयोधौ ॥

बारकीर : । पुं० द्वारग्राहिणि ॥ बाडवे ॥ यूकायाम् ॥ वेणिवेधिन्याम् ॥ नीराजितहये ॥

बारण : । पुं० मतङ्गजे ॥ न० प्रतिषेधे ॥

बारबाण : । पुं० कञ्चुके ॥

बार्बटीर : । पुं० रङ्गे । त्रपुणि ॥ आमास्थ्नि ॥ अङ्कुरे ॥ गणिकासुते ॥

बाल: । पुं० कुन्तले । चिकुरे । कचे ॥ ॥ अश्वस्यबालके । किशोरे ॥ अश्वस्य बालधौ ॥ इभपुच्छे ॥ नारिकेले ॥ पञ्चवर्षीयहस्तिनि ॥ य० । पञ्चवर्षो गजोबाल: स्यात्पोतोदशवर्षक: । इति ॥ पुच्छे ॥ मत्स्यविशेषे ॥ पुं० न० ह्रीवेरे । वर्हिष्ठे । उदीच्ये । बाला० इ० प्र० गन्धद्रव्ये । सुगन्धिबाला० इ० च० भा० ॥ त्रि० मूर्खे ॥ अविवेकिनि । शास्त्रार्थविवेकज्ञानशून्ये । अल्पप्रज्ञे ॥ अर्भ

के । माणवके ॥ अप्राप्तव्यवहारे । पञ्चदशवर्षादनधिकवयस्के इतिकश्चित् । षोडशवर्षपर्यन्तप्रथमवयस्के ॥ यथा । आषोडशाद्भवेद्बालो- यावत्क्षीरनिवर्त्तक: । इ० ॥ अत्र सुश्रुत: । ऊनषोडशवर्षस्तुनरोबा- लोनिगद्यते त्रिविध:सोपिदुग्धाशी दुग्धान्नाशीतथान्नभुक् । दुग्धाशीवर्ष पर्यन्तंदुग्धान्नाशीशरद्द्वयम् । तदुत्तरं स्यादन्नाशीएवंबालस्त्रिधामतइति ॥ अन्यत्राप्युक्तम् । आषोडशाद्भवेद्बा- लस्तरुणस्ततउच्यते वृद्ध: स्यात् सप्ततेरूर्द्ध्वंवर्षीयान्नवते: परम् ॥ इ० ॥ अनाथबालवृद्धानांरक्षिका:सर्वदेवता: ॥ अथबालपरिचर्याविधि: । बालमङ्कसुखंदद्यान्नचैनंतर्ज्जयेत्क्कचित् । सहसाबोधयेन्नैवनायोग्यमुपवेशयेत् ॥ अयोग्यमुपवेशनासमर्थम् । नाक्षाप्यस्थापयेत्क्रोडेनक्षिप्रं- शयनेक्षिपेत् । रोदयेन्नक्कचित्कार्ये विधिमावश्यकंविना ॥ आवश्यकोविधिर्भेषजदानतैलाभ्यङ्गोद्वर्त्तनादि: । तच्चित्तमनुवर्त्तेततंसदैवानुमोदयेत् । संसेवितस्तनाएवंनित्यमेवाभिवर्द्धयेत् ॥ बालातपतडिद्दृष्टिधूमानलजलादित: । निम्नोच्चस्थानतश्चापिरक्षेद्बालंप्रयत्नत: ॥ बालस्यस्वभावहितान्याह । अभ्यङ्गोद्वर्त्तनेस्नानंनेत्रयोरञ्जनंतथा । वस्त्रंमृदुयत्तच्चतथामृद्वनुलेपनम् ॥ जन्मप्रभृतिपथ्यानिबालस्यैतानि- सर्वथा ॥ बालस्यकवलादे: समय माह । कवल: पञ्चमाद्वर्षाद्विंशते- श्चैवमैथुनमिति ॥ वलति । बलप्राणने । ज्वलितीतिण: ॥ बाडते । बाडृआप्लाव्ये । पचाद्यज्वा ॥ यद्वा । बल्यते । बलसंवरणे । कर्मणिघञ् ॥ बालयति ण्यन्तात्पचाद्यच्वा ॥ ऊनैकादशवर्षस्यपञ्चवर्षाधिकस्यच । चरेद्गुरु: सुहृद्वापि प्रायश्चित्तंविशुद्धये ॥ ततोन्यूनतरस्यास्यनापराधोनपातकम् । नचास्यराजदण्डोपिप्रायश्चित्तंनविद्यत इत्यङ्गिरा: ॥

बालक: । पुं० शिशौ ॥ अश्वे ॥ हयबालधौ ॥ हस्तिपुच्छे ॥ अङ्गुरीयके ॥ ह्रीवेरे । सुगन्धिबाला० इ० प्र० ॥ बालकंशीतलंरूक्षंलघुदीपनपाचनम् । हृल्लासारुचिवीसर्पहृद्रोगस्त्वतिसारहृत् ॥ वलये । केशे ॥ निर्वले० ॥

बालकप्रिया । स्त्री० इन्द्रवारुण्याम् ॥ कदल्याम् ॥

बालकृमि: । पुं० केशकीटे ॥

बालक्रीडनम् । न० बालकखेलायाम् ॥

बालक्रीडनक: । पुं० कपर्द्दके ॥

बालखिल्य: । पुं० तपोविशेषलब्ध-

संयकेतापसान्तरे । नवान्नलब्धे पूर्वसञ्चितत्यागिनि ॥ मुनिविशेषेषु ॥ केशजातावालखिल्याः ॥ येके शास्ते वालखिल्या इतिश्रुतेः ॥

वालगर्भिणी । स्त्री० प्रथमगर्भेव-त्यां गवि । प्रष्ठौह्याम् ॥ वालापासौगर्भिणीच ॥

वालगोपालः । पुं० श्रीकृष्णमूर्त्तिविशेषे ॥

वालग्रहः । पुं० वालकहंतग्रहविशेषे ॥ यथा वालग्रहाचनाचारात्पीडयन्तिशिशुंयतः । तस्मात्तदुपसर्गेभ्योरक्षेद्वालंप्रयत्नतः ॥ अथतेषांनामानि । स्कन्दग्रहस्तुप्रथमः स्कन्दापस्मारएवच । शकुनीरेवतीचैवपूतनागन्धपूतना । पूतनाशीतपूर्वाचतथैवमुखमण्डिका । नवमोनैगमेयश्चप्रोक्तावालग्रहानमी ॥

वालचर्य्यः । पुं० सिद्धसेने ॥ कार्त्तिकेये ॥

वालजीवनम् । न० चौरे । दुग्धे ॥

वालतनयः । पुं० खदिरे ॥ वालाः तनयाः पत्राण्यस्य ॥ वालकापुत्रे ॥

वालतन्त्रम् । न० कुमारभृत्यायाम् । गर्भिण्यवेक्षणे । वालचिकित्सायाम् ॥

वालत्वम् । न० शैश्ये । नववयसे ॥ वालत्वम् ॥

वालधिः । पुं० केशसंयुतेलाङ्गूले ॥ वालाधीयन्तेऽच । करवाधिकरणे तिकिः ॥

वालपत्रः । पुं० खदिरे ॥ यवासे ॥ दुरालभायाम् ॥ न० नूतनपत्रे ॥

वालपत्रकः । पुं० खदिरवृक्षे ॥

वालपाश्या । स्त्री० पारितथ्यायाम् । सीमन्तस्थितायांस्वर्णादिपट्टिकायाम् ॥ वन्दी० वेणी० कृ० भा० । सिंति० कृ० गौ० भा० ॥ वालपाशे ॥ केशसमूहेसाधुः । तत्रसाधुरितियत् ॥ वालेषुपाश्यापाशसमूहोवा ॥

वालपुष्पिका । } स्त्री० यूथिकायाम् ॥
वालपुष्पी । }

वालभद्रः । ) पुं० विषभेदे । शाक्षवे ॥
वालभद्रकः ) 

वालभैषज्यम् । न० रसाञ्जने ॥ वालस्यौषधे ॥

वालभोज्यः । पुं० चणके ॥ त्रि० वालकभक्षणीये ॥

वालमुकुन्दः । पुं० श्रीविष्णोर्मूर्त्त्यन्तरे ॥ यथा । करारविन्देनपदारविन्दं मुखारविन्देविनिवेशयन्तम् । वटस्यपत्रस्यपुटेशयानंवालंमुकुन्दंमनसास्मरामि ॥

वालमूलकम् । न० लघुमूलके ॥ मूलकंवालकंरुच्यंसर्वोष्णपाचनंलघु । दोषत्रयज्वरश्वासनासाकण्ठाक्षिरोगनुत् ॥ महत्तदेवरूक्षोष्णंगुरुदोषत्रयप्रदम् । स्नेहसिद्धंतदेवस्याद्दोषत्रयविनाशनम् ॥

वक्तव्यमितिनिषेधोत्तरपठितेन ॰ अभ्रुकुंसादीनामितिवक्तव्यमिति वार्त्तिकेनतन्निषेधाद्भ्रस्वः ॥ एवं भ्रुकुटिशब्देपिबोध्यम् ॥

भ्रुकुटिः । स्त्री॰ भ्रूकुटी । भ्रूकुट्या म् । क्रोधादिनाललाटसङ्कोचने ॥ कुटेरिगुपधात्किदितीन् । भ्रुवोः कुटिः । भ्रुकुंसवत्प्रक्रिया ॥

भ्रुकुटी । स्त्री॰ भ्रुकुटी । भ्रुवोः कौटिल्ये ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवोः कुटी ॥ अभ्रुकुंसादीनामितिवा र्त्तिकाद्भ्रस्वः ॥

भ्रूः । स्त्री॰ नेत्रोपरिभागस्थरोमराज्यां चिल्लिकायाम् । भौं॰ इ॰ भा॰ ॥ भ्रमु॰ ।भ्रमेश्चडूः। टिलोपः॥ यद्वा। भ्रमति । भ्रमुचलने । भ्रमेश्चडूः ॥ यद्वा । भ्राम्यति । क्विप् । जङ्ग मादीनामिति॰ गमः क्वाविच्यच वार्त्तिकेन॰मलोपजङ्चादेशः॥

भ्रूकुंसः । पुं॰ भ्रूकुंसे । भ्रुकुंसे । नचनिआ॰ इ॰ भा॰॥ भाषणा र्थकंचुरादिण्यन्तात्कुसेरेरच् । भ्रुवाकुंसोभाषणमस्य । इकोऽह्रस्वो ऽङ्योगालवस्येतिसूत्रे॰इयङ्॰वङ् भाविनाम॰ थानान्नेतिवार्त्तिका द्भ्रस्व॰ निषेधः ॥

भ्रूकुटिः । स्त्री भ्रुकुट्याम् ॥ भ्रुवोः कुटिः इयङुवङ्भाविनामिति निषेधाद्ध्रस्वोनभवति ॥

भ्रूकुटी । स्त्री॰ भ्रकुट्याम् । भ्रुकुटी ॥ कुटेरिगुपधादितीन् । कृदिका रादितिङीष् । भ्रुवोः कुटी । इयङुवङ्भाविनामितिह्रस्व नि षेधः ॥

भ्रूणः । पुं॰ स्त्रीगर्भे । उदरस्थजन्तौ ॥ डिम्भे । अर्भके ॥ गर्भिण्याम् ॥ श्रोत्रियद्विजे ॥ भ्रूण्यते । भ्रूण आशाविशङ्कयोः । घञ् ॥

भ्रूणहत्या । स्त्री॰ गर्भस्थबालकहन ने॥ यथा । त्रिविवाहंकृतंयेननकरो तिचतुर्थकम् । कुलानिपातयेत्स प्तभ्रूणहत्याव्रतञ्चरेत् ॥

भ्रूणहा । त्रि॰ गर्भस्थबालकहन्तरि ॥ भ्रूणंहतवान् । हन॰ । ब्रह्म भ्रूणवृत्रेषुक्विप् ॥ ब्रह्महणि ॥ भ्रूणहा॰ वरिष्ठब्राह्मणहन्तोच्यत इतिव्याख्यानात् ॥

भ्रूभङ्गः । पुं॰ भ्रूविक्षेपे । भ्रुवः कौटिल्ये ॥ भ्रुवोभङ्गः ॥

भ्रेषः । पुं॰ अधःपाते । यथोचि तात्॰ भ्रंशे ॥ भ्रेषणम् । भ्रेषृच लने । घञ् ॥ चलने ॥

भ्रेषणम् । न॰ चलने ॥

भ्रौणहत्यम् । न॰ भ्रूणघ्नोभावे ॥ ष्यञ् । दाण्डिनायनेतिनिपातना त्तकारादेशः ॥

मः। पुं॰ मकारे ॥ यमे ॥ समये ॥ विषे ॥ मधुसूदने ॥ चन्द्रशेखरे । शम्भौ ॥ ब्रह्मणि ॥ चन्द्रमसि ॥ मन्त्रे ॥ मङ्गले ॥ त्रिगुरौ॰ऽऽऽ॰ ॥

मंहिष्ठः। त्रि॰ मंहनीये । पूजनीये ॥

मकरः। पुं॰ नक्रे । यादःप्रभेदे । मगर॰ इतिभाषाप्रसिद्धे ॰ भाषायांमध्ये भगवद्विभूतौ ॥ निधिप्रभेदे ॥ दशमराशौ । आकोकेरे ॥ कृपाति । कृहिंसायाम् । पचाद्यच् । मनुष्याणांकरः । पृषोदरादिः ॥ यद्वा । मङ्कते । मकिमण्डने । अच् । आगमशास्त्रस्यानित्यत्वान्ननुम् । मकंराति । रादाने । आतोनुपेतिकः ॥ दर्पणेऽप्युक्तः सारस्वतकोषे ॥ अर्द्धधूर्जे ॥

मकरकुण्डलम् । न॰ मकराकृतिकर्णाभरणे ॥

मकरकेतनः। पुं॰ कामदेवे ॥ मकरःकेतनंयस्यसः ॥

मकरध्वजः। पुं॰ कंदर्पे । अनङ्गे ॥ मकरोनक्रोध्वजोयस्यसः ॥ रससिन्दूरविशेषे । चन्द्रोदये ॥ तस्यकरणप्रकारोन्यत्ररसेन्द्रचिन्तामणौ ॥

मकरन्दः। पुं॰ पुष्परसे ॥ मकरमपि द्यति॰कामजनकत्वात् । दोअवखण्डने । आतोनुपेतिकः । पृषोदरादिः ॥ यद्वा । मकरमप्यन्दति । अदिवन्धने । कर्म्मण्यण् । शकन्ध्वादिः ॥ कुन्दपुष्पवृक्षे ॥ न॰ किञ्जल्के ॥

मकरमुखी । स्त्री॰ प्रणाल्याम् । पयसःपद्व्याम् ॥

मकरन्दवती । स्त्री॰ कृष्णवृन्तायाम् । पाटलापुष्पे ॥ मधुविशिष्टायाम् ॥

मकरव्यूहः। पुं॰ मकराकृतिवत्सैन्यविन्यासे ॥ वराहव्यूहविपर्यये णमकरव्यूहोभवति । तेनाऽग्रे पश्चाद्योभयचभयेसतिगच्छेत् ॥

मकराकरः। पुं॰ समुद्रे ॥ मकराणामाकरः ॥

मकराकारः। पुं॰ महाकरञ्जे । षड्ग्रन्थे ॥

मकराङ्कः। पुं॰ समुद्रे ॥ कामदेवे ॥

मकराधिपः। पुं॰ शनिग्रहे ॥ मकरस्यराशिविशेषस्यअधिपः ॥

मकरालयः। पुं॰ अब्धौ ॥ मकराणांमकरोपलक्षितानांजलजन्तूनामालयः ॥

मकरी । पुं॰ समुद्रे ॥ मकराःसन्त्यस्मिन् । अतइनिठनाविति॰इनिः ॥

मकुटम् । न॰ मुकुटे । किरीटे ॥ मङ्कतेऽनेनवा । मकि॰ । बाहुलकादुटः । आगमशास्त्रस्यानित्यात्वन्ननुम् ॥

मकुतिः । स्त्री० शूद्रशासने ॥

मकुर : । पुं० मुकुरे । दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मङ्कते । मकि० । मकुरदर्दुराविति साधु : ॥

मकुल : । पुं० न० मुकुले ॥ वकुलद्रुमे ॥

मकुष्ठः । पुं० वनमुद्गे । मौठ० इ० प्र० व्रीहिविशेषे ॥ मकुष्ठोवातलोग्राहीकफपित्तहरोलघु : । वांतिजिन्मधुर: पाकेक्रमिकृज्ज्वरनाशनः ॥ चि० मंथरे ॥

मकुष्ठक : । पुं० वनमुद्गे । मयुष्ठके । मकुष्ठे ॥ मङ्कते० मङ्क्यतेवा । मकि० । बाहुलकादुनमभावश्च । तिष्ठति । ष्ठा० । कुन् । मकुश्चासौस्थकश्च । पूर्वपदादितिष : ॥

मकूलक : । पुं० मुकूलके । लघुदन्त्यामोषधौ ॥ मङ्कते । मकि० । खर्जपिञ्जादिभ्यऊरोलचाविति०- पिञ्जादित्वादूलच् । स्वार्थेकन् ॥

मक्कल्ल : । पुं० शूलरोगविशेषे ॥ यथा । सूतायाहृच्छिरोवस्तिशूलमक्कल्लसंज्ञितम् । यवक्षारंपिवेत्तत्र मस्तुनोष्णोदकेनवा ॥

मक्का । स्त्री० खुराशानोभिधे देशे ॥

मक्कुलम् । न० शिलाजतुनि ॥

मक्केश : । पुं० ) खुराशानदेशस्थे
मक्केश्वर : । पुं० ) शिवे ॥

मक्कोल : । पुं० शिलाधातौ । सितोपले । मक्कोल० खडियामाटी० गोलू० इ० भा० ॥

मक्ष : । पुं० स्वदोषाच्छादने ॥

मक्षवीर्य्य : । पुं० पियालवृक्षे ॥

मक्षिका । स्त्री० कीटविशेषे । गन्धलोलुपायाम् । वमनीयायाम् । मक्खी० इ० भा० ॥ मशति । मशशब्दे रोषकृतेच । हनिमशिभ्यांसिकन् ॥ मक्षतिवा । मक्षरोषसङ्घाते । कुन्० ग्वुल्वा ॥

मक्षिकामलम् । न० सिक्थके ॥

मक्षीका । स्त्री० मक्षिकायाम् ॥

मख : । पुं० यज्ञे ॥ मखन्तिदेवाअत्र अनेनवा । मखङ्गतौ । हलश्चेति० घञ् । संज्ञापूर्वकत्वान्नवृद्धि : ॥ यद्वाक्वचिदपवादविषयेप्युत्सर्गोभिनिविशते० इतिघञ्विषयेपिपुंसीतिघ : ॥ यद्वा । मह्यते । मह० । नहेर्हलोपश्च० अनेनेतिखोहलोपश्च॥

मखत्राता । पुं० श्रीरामचन्द्रे ॥ मखानांत्राता ॥

मखवह्निः । पुं० प्रणीते । यज्ञाग्नौ॥

मखानल : । पुं० महावीरे । यज्ञाग्नौ ॥

मखान्नम् । न० पद्मबीजाभे । पानीयफले । मखाना० इ० भा० ॥ मखान्नं पद्मबीजस्यगुणैस्तुल्यंविनिर्दिशेत् ।

मखासुहृत् । पुं० शिवे । मखस्यदक्ष यज्ञस्यअसुहृत्० शत्रु: ॥

मगण: । पुं० त्रिगुरौ०ऽऽऽ: ॥

मगध: । पुं० बन्दिनि ॥ मागधे । वंशपरम्पराशंसके ॥ मगध्यति०याचते । मगधपरिवेष्टने । कण्ड्वादिर्यगन्त: । अच् । यस्यहलइतियलोप: ॥ मगधा: पुं०भूम्नि० कीकटदेशे ॥ यथा । व्यासेश्वरंसमारभ्यतप्तकुण्डान्तकं शिवे ।मगधाख्योमहादेशो यात्रायांनहिदुष्यति ॥ दक्षोत्तरक्रमेणैवक्रमात्कीकटमागधौ ॥ मगधानांनिवासोजनपद: ० मगधा: । निवासेऽर्थोजनपदेलुप् । लुपियुक्तवद्भाव: ॥

मगधा । स्त्री० पिप्पल्याम् ॥

मगधेश्वर: । पुं० जरासन्धनृपे । मगधदेशाधिपमात्रे ॥ मगधानांदेशविशेषाणामीश्वर: ॥

मगधोद्भव: । त्रि० मगधदेशजाते ॥

मगधोद्भवा । स्त्री० पिप्पल्याम् ॥ मगधे उद्भवोयस्य ॥

मग्न: । त्रि० जलान्त: प्रविष्टे । आप्लुते । स्नाते ॥ मज्जति । टुमस्जो शुद्धौ । क्त: । ओदितश्चेति०निष्ठानत्वम् । तस्यासिद्धत्वात्०स्कोरिति सलोप: । चो: कु: ॥

मघ: । पुं०द्वीपान्तरे ॥ देशान्तरे । मग०नामकर्म्मस्थाने ॥ न० पुष्पविशेषे ॥

मघवा । पुं० इन्द्रे । शक्रे ॥ मह्यतेपूज्यते । मह पूजायाम् । श्वन्नुक्षन्पूषन्प्लीहन्निर्त्यादिना०कनिन् ॥ कविरितिमनोरमायांस्फुटम् ॥ निपातनात्०हस्यघोवुगागमश्च । मघवानौ०मघवान: ॥ मघवाबहुलमितिमितिवादेशपक्षेतु० मघवान्मघवन्तौ० मघवन्त: ० इत्यादिबोध्यम् ॥ जिनानांद्वादशचक्रवर्त्त्यन्तर्गतचक्रवर्त्तिविशेषे

मघवती । स्त्री० इन्द्राण्याम् ॥

मघा । स्त्री० दशमनक्षत्रे ॥ अत्रजातस्यफलंयथा । कठोरचित्त: पितृमातृभक्तस्तीव्रस्वभावस्त्वनवद्यविद्य: चेज्जन्मभं यस्यमघाऽनघ: स्यान्मति: सदारातिविनाशदक्ष: ॥ बहुवचनान्तोप्ययंदृश्यते ॥ यथा नवोदकेनवान्ने चगृहप्रच्छादनेतथा । पितर: स्पृहयन्त्यन्नमष्टकासुमघासुचेति ॥ मघायांपिण्डदानेनज्येष्ठपुत्रोदिनश्यतीत्येकवचनान्तोपि ॥ औषधविशेषे ॥

मघाभव: । पुं० शुक्राग्रहे ॥

मघाभू: । पुं० शुक्राचार्ये ॥

मघी स्त्री० धान्यविशेषे ।

मघोनी । स्त्री० इन्द्राण्याम् ॥

मङ्कुर: । पुं० दर्पणे । मुकुरे । मङ्कतेमकि० । बाहुलकादुरच् ॥

मङ्क्षि : । त्रि० शठे ॥ मङ्क्ते । मङ्कि०
। वङ्क्र्यादित्वात्साधु : ॥
मङ्खणम् । न० जङ्घात्राणे ॥ इति
हारावली ॥
मङ्खु । अ० शीघ्रे ॥ भृशार्थे ॥ म-
ज्जति । टुमस्जोशुद्धौ । बाहुलका
त्खु : । मस्जिनशोरितिनुम् । स्को
रितिसलोप : ॥
मङ्खुणम् । न० जङ्घात्राणे ॥ इति
त्रिकाण्डशेष : ॥
मङ्ग : । पुं० नौमस्तके ॥ मङ्गति । म-
गिसर्पणे । पचाद्यच् ॥
मङ्गल : । पुं० अङ्गारके । कुजे । तृती
यग्रहे ॥ अस्यवारेजातस्यफलंयथा ।
उग्र : प्रतापीक्षितिपोलमन्त्रीरणप्रि
योवक्रवचा : सरोष : । सत्वान्वि-
त : शूरगणप्रणेताकुजस्यवारेप्रभ-
वोमनुष्य : ॥ न०कल्याणे ॥ सर्वा-
र्थरक्षणे ॥ अगर्हिताभिप्रेतार्थसि-
द्धौ ॥ यत्खलुक्रियमाणमेवमन : -
प्रह्लादनंसमीहितसाधनञ्चतन्मङ्ग-
लमुच्यतइतिव्याख्याकारा : ॥ आ
शीर्नमस्क्रियावस्तुनिर्देशोवापित
न्मुखमित्यालङ्कारिकोक्ते : काव्या
दिमुखे क्रियमाणे ॥ यथाहभगवा-
न्भाष्यकार : । मङ्गलादीनिमङ्गल
मध्यानिमङ्गलान्तानिशास्त्राणिप्रथ-
न्ते वीरपुरुषाण्यायुष्मत्पुरुषाणिच-
भवन्तिअध्येतारश्चप्रवक्तारोभवन्ती-
तिमङ्गलानुष्ठानप्रयोजनानि ॥ प्रश
स्ताचरणंनित्यमप्रशस्तविवर्जनम् ।
एतद्धिमङ्गलंप्रोक्तमृषिभिस्तत्त्वदर्शि
भि : ॥ लोकेऽस्मिन्मङ्गलान्यष्टौ-
ब्राह्मणोगौर्हुताशन : । हिरण्यंस
र्पिरादित्यआपोराजातथाष्टम : ॥
एतानिसततंपश्येन्नोचेदर्च्यादिना
यजेत् । प्रदक्षिणन्तुकुर्वीततथाचा
युर्नहीयते ॥ अपिच । रोचनंचन्द
नंहैमम्मृदङ्गंदर्पणंमणिम् । गुरुम-
ग्निंतथासूर्यंप्रात : पश्येत्सदाबु-
ध : ॥ मङ्गति०दुरदृष्टमनेन । मगि
सर्पणे॥ गतौवा । मङ्गेरलच् ॥ अ-
शुभानिनिराचष्टे तनोतिशुभसन्तति
म् । स्मृतिमात्रेणयत्पुंसांब्रह्मत-
न्मंगलंविदुरितिविष्णुपुराणम् ॥
त्रि०कल्याणवति ॥
मङ्गलग्रहम् । न० मेषराशौ ॥ वृश्चि
कराशौ ॥ मङ्गलस्यतृतीयग्रहस्यगृ
हम् ॥
मङ्गलचण्डिका । स्त्री० ) दुर्गायाम् ॥
मङ्गलचण्डी । स्त्री० ) यथा । प्रधा
नांशस्वरूपांचदेवीमङ्गलचण्डिका
। प्रकृतेर्मुखसम्भूतासर्वमङ्गल
दासदा ॥ सृष्टौमङ्गलरूपाचसंहा
रेकोपरूपिणी । तेनमङ्गलचण्डी
सापण्डितै : परिकीर्त्तितेतिभागव
तम् ॥
मङ्गलच्छाय : । पुं० प्लक्षवृक्षे ॥

मङ्गलपाठकः। पुं॰ स्तुतिपाठके। वन्दिनि॥

मङ्गलप्रदा। पुं॰ दुर्गायाम्॥ हरिद्रायामितिकश्चित्॥ त्रि॰ मङ्गलदातरि॥

मङ्गलप्रस्थः। पुं॰ भारतवर्षस्यपर्वतान्तरे॥

मङ्गलमालिका। स्त्री॰ स्रजोभेदे॥ मङ्गलायामालिका॥

मङ्गला। स्त्री॰ उमायाम्। कात्यायन्याम्॥ गयायांमङ्गलास्मृतेतिदेवीगीता॥ सितदूर्वायाम्॥ साध्व्याम्॥ करञ्जभेदे॥ हरिद्रायाम्॥ नीलदूर्वायाम्॥ वृत्तार्हन्मातृविशेषे।

मङ्गलागुरु। न॰ अगुरुचतुष्टयान्तर्गतागुरुविशेषे॥ यथा। मङ्गल्यामल्लिकागन्धामङ्गलागुरुवाचकाः। मङ्गल्यागुरुशिंशिरागन्धाढ्यायोगवाहिका॥

मङ्गलाचरणम्। न॰ ग्रन्थाद्यारम्भे मङ्गलकरणे॥ मङ्गलाचरणंशिष्टाचारात्फलदर्शनाच्छ्रुतितश्चावश्यंकर्त्तव्यमित्याहुर्व्याख्याकाराः॥

मङ्गलारुहा। स्त्री॰ दूर्वायाम्॥

मङ्गलिकाक्षीरणम्। न॰ असादृश्यकथायाम्॥

मङ्गल्यः पुं॰ त्रायमाणायाम्॥ अश्वत्थे॥ विल्वे॥ मसूरके जीरके॥ नारिकेले॥ कपित्थे॥ रीठाकरञ्जे॥ न॰ दधिनि॥ चन्दने॥ मङ्गलागुरुणि॥ सिन्दूरे॥ स्वर्णे॥ त्रि॰ शिवकरे॥ रुचिरे॥ साधौ॥ मङ्गलेसाधुः। तत्र साधुरितियत्॥

मङ्गल्यकः। पुं॰ मसूरे॥ स्वार्थे कन्॥

मङ्गल्यकुसुमा। स्त्री॰ शङ्खपुष्प्याम्॥ मङ्गल्यानिकुसुमान्यस्याः॥

मङ्गल्यनामधेया। स्त्री॰ जीवन्त्याम्। शाकश्रेष्ठायाम्॥

मङ्गल्या। स्त्री॰ मल्लिगन्धागुरुणि॥ शम्याम्॥ अधःपुष्प्याम्॥ मिश्याम्॥ शुक्लवचायाम्॥ रोचनायाम्। प्रियङ्ग्वाम्॥ शङ्खपुष्प्याम्॥ माषपर्ण्याम्॥ जीवन्त्याम्॥ ऋद्धिनामौषधौ॥ वचायाम्॥ हरिद्रायाम्॥ चोडायाम्॥ दूर्वायाम्॥ मङ्गलेसाधुः। तत्रसाधुरितियत्॥ गौर्याम्। शिवायाम्। भवान्याम्॥ शोभनानिचश्रेष्ठानियादेवीददतेहरे। भक्तानामार्त्तिहरणीमङ्गल्यातेनसास्मृता॥

मङ्गिनी। स्त्री॰ नावि। नौकायाम्॥

मचर्चिका। स्त्री॰ प्रशस्ते॥ मांशब्दंचर्चति। चर्चअध्ययने। खु

ल् ॥ यथा । प्रशस्तोब्राह्मणः॰ ब्राह्मणमचर्चिकारूढिशब्दत्वात्॰ प्रशंसावचनैश्चेतिसमासः ॥
मच्छः। पुं॰ मत्स्ये ॥
मज्जका। स्त्री॰ मज्जायाम् ॥ मज्जैवस्वार्थेकः ॥
मज्जकृत्। न॰ अस्थनि ॥
मज्जा। पुं॰ वृक्षसारे। वृक्षादेरुत्तमस्थिरभागे ॥ फलमज्जगुणायथा। यस्ययस्यफलस्येहवीर्यंभवतियादृशम्। तस्यतस्यैववीर्येणमज्जानमपिनिर्दिशेत् ॥ अस्थिमध्यगतधातौ। अस्थिसारे ॥ मज्जस्वरूपमाह। अस्थियत्स्वाग्निनापक्वंतस्यसारोद्रवोघनः। यः स्वेदवत्पृथग्भूतः समज्जेत्यभिधीयते ॥ स्थानन्तु। स्थूलास्थिषुविशेषेणमज्जात्वभ्यन्तरेस्थितः। इति ॥ अस्यगुणायथा। बलशुक्ररसश्लेष्मभेदोमज्जविवर्द्धनः। मज्जाविशेषतोऽस्थ्नाञ्चबलकृत्स्नेहनेहितः ॥ मज्जत्यस्थिषु। टुमस्जोशुद्धौ। श्वन्नुक्षन्निति साधुः ॥ शिरोस्थिमध्येपिण्डितस्नेहे। मस्तिष्के ॥
मज्जनम्। न॰ स्नाने ॥ मज्जत्यनेन। टुमस्जो॰। बहुलमन्यत्रापीति युच् ॥ मज्जायामितिशब्दचन्द्रिका ॥
मज्जसमुद्भवम्। न॰ वीजे। शुक्रे ॥
मज्जसम्भवः। पुं॰ शुक्रे ॥
मज्जा। स्त्री॰ वृक्षसारे। अस्थिगतधातौ ॥ मज्जति: पचाद्यजन्तात् टाप्। मज्जोक्तामजजयासहेति॰ द्विरूपः ॥
मजजाजः। पुं॰ भूमिजगुग्गुलौ ॥
मजजारसः। पुं॰ शुक्रे ॥
मजजासारम्। न॰ जातीफले ॥
मजजिका। स्त्री॰ मज्जकायाम् ॥
मञ्चः। पुं॰ खट्वायाम् ॥ कर्णवंशे। मांचा॰मांजा॰ इ॰भा॰ ॥ उच्चमण्डपविशेषे ॥ दोलायमानंगोविन्दंमञ्चस्थंमधुसूदनम्। रथस्थंवामनंदृष्ट्वापुनर्जन्मनविद्यतेइति पुराणम् ॥ मञ्चते। मचिधारणोच्छायपूजनेषु। पचाद्यच् ॥
मञ्चकः। पुं॰ इन्द्रकोषे। उच्चमण्डपे ॥ खट्वायाम् ॥
मञ्चकाश्रयः। पुं॰ मत्कुणे ॥
मञ्चमण्डपः। पुं॰ शस्यरक्षार्थकुटीरे। कुटङ्गे ॥
मञ्चिका। स्त्री॰ आसन्द्याम् ॥
मञ्जरः। पुं॰ वल्लरौ ॥ मुक्तायाम् ॥ तिलकद्रुमे ॥ वल्ल्याम्। लतायाम् ॥
मञ्जरिः। स्त्री॰ वल्लर्याम् ॥ मञ्जुत्वमृच्छति। ऋगतौ। अचइः। शकन्ध्वादिः ॥
मञ्जरी। स्त्री॰ तिलकद्रुमे ॥ स्थूलमुक्तायाम् ॥ वल्लरी ॥ तुलस्यामृजौ ॥

ष् ॥
मञ्जरीनम्रः । पुं० वेतसवृक्षे ॥
मञ्जा । स्त्री० मञ्जर्याम् ॥
मंजि: । पुं० मंजर्याम् ॥
मञ्जिका । स्त्री० वारसुन्दर्याम् । वेश्यायाम् ॥
मञ्जिफला । स्त्री० कदल्याम् ॥
मञ्जिष्ठा । स्त्री० विकसायाम् । जिङ्ग्याम् । समङ्गायाम् । मजीठ० इ० भा० प्र० औषधी ॥ मञ्जिष्ठा मधुरातिक्ताकषायस्वरवर्णकृत् । गुरूरुष्णाविषश्लेष्मशोथयोन्यक्षिकर्णरुक् । रक्तातीसारकुष्ठास्रविसर्पव्रणमेहनुत् ॥ मञ्जौशोभनेवर्णे तिष्ठति । ष्ठा० । सुपिस्थइतिकः । अम्बाम्बेतिषत्वम् ॥ यद्वा । अतिशयेनेतमविष्ठनौ ॥
मञ्जी । स्त्री० मञ्जर्याम् ॥
मञ्जीरः । पुं० मन्थानदण्डरज्जुबन्धनार्थस्तम्भे । कुटरे ॥ पुं० न० नूपुरे ॥ मञ्जति । मजिध्वनौ० सौत्रः । बाहुलकादीरन् ॥ गुर्वर्थेऽरे०ऽ, ॥
मञ्जरीधा । स्त्री० वर्णवृत्तान्तरे ॥
मञ्जुः । त्रि० मनोज्ञे ॥ मञ्ज्यते । मजि० । बाहुलकादुः ॥
मञ्जुकेशी । पुं० श्रीकृष्णे ॥ त्रि० मनोज्ञचिकुरविशिष्टे ॥
मञ्जुकेशी । स्त्री० स्वर्गवेश्याभेदे ॥
मञ्जुगमना । स्त्री० हंस्याम् ॥ त्रि० सुन्दरगामिनि ॥
मञ्जुघोषः । पुं० शिवे ॥ उपास्यदेवताविशेषे ॥ पूर्वजिने ॥ बुद्धानां देवताभेदे ॥ मञ्जुः घोषः शब्दोऽस्य ॥ शोभनशब्दे ॥ त्रि० शोभनशब्दवति ॥
मञ्जुपाठकः । पुं० शुके । कीरे ॥ त्रि० सुन्दरपाठकर्त्तरि ॥
मञ्जुप्राणः । पुं० ब्रह्मणि ॥
मञ्जुभद्रः । पुं० पूर्वजिनविशेषे ॥ ज्ञानदर्पणे । मञ्जुघोषे ॥ शिवे ॥
मञ्जुभाषिणी । स्त्री० अतिजगतीछन्दःप्रभेदे ॥ यथा । सजसाजगौचयदिमञ्जुभाषिणी ॥ अमृतोर्मिशीतलकरेणलालयंस्तनुकान्तिरोचितविलोचनोहरे । नियतंकलानिधिरसीतिवल्लवीमुदमच्युतेव्यधितमञ्जुभाषिणी ॥सुनन्दिनीतिशम्भौ॥
मञ्जुमणिः । पुं० पुष्परागे । पोखराज० इ० भा० ॥
मञ्जुलः । पुं० जलरङ्कौ ॥ न० जलाश्रले । शैवाले ॥ निकुंजे ॥ त्रि० मञ्जौ ॥ मञ्जु० मञ्जुत्वंलाति । ला० । कः ॥ मञ्जुमञ्जुलमस्त्यस्यास्मिन्वा । सिध्मादित्वाल्लच् ।
मञ्जुवक्त्रः । त्रि० सौम्याननयुक्ते ॥
मंजुवाक् । त्रि० मधुरवचने ॥
मञ्जुश्रीः । पुं० मञ्जुघोषे ॥ म-

ऽजुर्मनोज्ञाश्रीर्यस्य॥
मञ्जुषा । स्त्री० मञ्जूषायाम् । पिटके ।
मञ्जूषा । स्त्री० पिटके । दार्वादिनिर्मितपेटके ॥ पाषाणे । प्रस्तरे ॥ मञ्जिष्ठायाम् ॥ हिरण्यादिनिक्षेपाधारे ॥ मज्जन्त्यत्रवा । टुमस्जो मस्जिनुंमृचेत्यूषन् ॥
मटची । स्त्री० मर्दनहेतुभूतेपाषाणवृष्ट्यादौ ॥ अशन्याम् ॥
मटस्फटि : । पुं० दर्पारम्भे ॥
मट्टकम् । न० गृहमस्तके ॥
मठ : । पुं० छात्रादिनिलये ॥ मठन्त्यत्र । मठमदनिवासयो : हलश्चेतिघञ् । संज्ञापूर्वकत्वान्नवृद्धि : ॥ यद्वा । मठतिनिवासयति । पचाद्यच् ॥ मांठ० इतिख्यातेपक्वान्नविशेषे ॥ यथा । समितांमर्दयेदाज्यैर्जलेनापिचसन्नयेत् । तस्यास्तुबटकांकृत्वापचेत्सर्पिषिनीरसम् ॥ एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते । मज्जयित्वासितापाकेततस्तश्चसमुद्धरेत् ॥ अयंप्रकार : संसिद्धोमठइत्यभिधीयते ॥ मठस्तुबृंहणोवृष्योबल्य: सुमधुरोगुरु: । पित्तानिलहरोरुच्यो दीप्ताग्नीनांसुपूजित : । समिता शर्करासर्पिर्निर्मितापरेप्रिये । प्रकाराअमुनातुल्यास्तेपिचैतद्गुणा: स्मृता : ॥

मठर : । पुं० मुनिविशेषे ॥ शौण्डे ॥ मन्यते । मनज्ञाने । मनुतेवा । मनुअवबोधनेवा । वचिमनिभ्यां किच्चेतिअरष्ठोन्तादेशश्च ॥
मडक : । पुं० मड्डुवा० इ० प्र० शस्ये
मड्डु : । पुं० वाद्यप्रभेदे मज्जति० मज्जन्तिशब्दाश्चत्रवा । टुमस्जोशुद्धौ ॥ भृमृशीतुचरित्सरितनिधनिमिमस्जिभ्यउ : । पृषोदरादि : ॥ डमरुरेवमहान्मड्डुरित्युच्यते ॥ चुचुक० इ० गौडेषुयस्यप्रसिद्धि :॥
मड्डुक: । पुं० मड्डुवाद्ये ॥ स्वार्थेक : ॥ मर्दले ॥
मणि : । पुं० स्त्री० अश्मजातौ । रत्ने ॥ मुक्तादौ ॥ अजागलस्तने ॥ लिङ्गाग्रे ॥ अलिंजरे ॥ योन्यग्रभागे ॥ स्तने । मणिबन्धे ॥ मण्यते । मण शब्दे । सर्वधातुभ्यइन् ॥
मणिकम् । न० अलिंजरे । मांट० इ० भा० प्र० ॥ मणति । मण० । इन् । स्वार्थेयावादित्वात्कन् । संज्ञायांकोवा ॥
मणिकर : । पुं० मणिकारे ॥
मणिकर्णिका । स्त्री० काश्यन्तर्गतप्रधानतीर्थे ॥ दृष्टोविश्वेश्वरोदेवो स्नातव्यामणिकर्णिका ॥
मणिकर्णिकेश्वर : । पुं० काश्यन्तर्गतशिवलिङ्गविशेषे ॥ मणिकर्णिकाया : ० मणिकर्णिकायांवाईश्वर: ।

मणिकाननम् । न० कण्ठे ॥ रत्नवने

मणिकारः । पुं० वैकटिके । मणिघटितालङ्कारादिकर्त्तरि । जौंहरी इ० भा० । मणिकार० इति च ॥ मणिं करोति । डुकृञ्० । कर्मण्यण् ॥ न्यायचिन्तामणिकर्त्तरि ॥

मणिकूटः । पुं० पर्वतविशेषे ॥ यथा । मणिकूटस्याथगिरेर्गन्धमादनकस्य च । मध्येस्रवतिलौहित्योब्रह्मपुत्रः समाश्रितः ॥ प्लक्षद्वीपस्थेगिरिविशेषे ॥

मणिखनिः । स्त्री० मण्याकरे ॥ मणेः खनिः ॥

मणिगुणनिकरः । पुं० अतिशक्वर्यां १५ प्रभेदे ॥ यथा । वसुमुनियतिरिति० मणिगुणनिकरः । यथा । नरकरिपुरवतु० निखिलसुरगति० रमितमहिमभरसहजनिवसतिः अनिबधिमणिगुणनिकरपरिचितिः सरिदधिपतिरिवधृततनुविभवः ॥

मणिग्रीवः । पुं० कुवेरात्मजे ॥ मणिरिवग्रीवायस्य ॥ त्रि० रत्नकन्धरे ॥

मणिच्छिद्रा । स्त्री० मेदायाम् ॥ ऋषभाख्यौषधौ ॥

मणितम् । न० रतिकूजिते । मैथुनकालीनवाक्ये ॥ रतिकालेस्त्रीणांकण्ठकूजितविशेषे ॥ मणनम् । मण० । भावेक्तः ॥

मणितारकः । पुं० सारसपक्षिणि ॥

मणिद्वीपः । पुं० क्षीराब्धिमध्येपद्मरागादिमणिमयान्तरीपे । त्रिपुरसुन्दर्यावासस्थाने ॥ भुवनेश्वर्याः स्थानइ०देवीगीता । ब्रह्मलोकादूर्ध्वभागेसर्वलोकोस्तियःश्रुतः । मणिद्वीपःसएवास्तियत्रदेवीविराजते ॥ सर्वस्मादधिकोयस्मात्सर्वलोकस्ततःस्मृतः । पुरापराम्बयैवायंकल्पितोमनसेच्छया । सर्वादौनिजवासार्थंप्रकृत्यामूलभूतया । कैलासादधिकोलोकोवैकुण्ठादधिकोत्तमः ॥ गोलोकादपिसर्वस्मात् सर्वलोकोधिकःस्मृतः । नैतत्समंत्रिलोक्यान्तुसुन्दरंविद्यतेक्वचिदित्यादिमादेवीभागवतेद्वादशस्कन्धे १० अध्यायेऽस्यवर्णनंद्रष्टव्यं ॥

मणिनागः । पुं० तीर्थविशेषे ॥

मणिपर्वतः । पुं० गिरिविशेषे ॥

मणिपुष्पकः । पुं० सहदेवाख्यपाण्डवस्य शङ्खे ॥

मणिपूरम् । न० षट्चक्रान्तर्गतनाभिमध्यस्थे दशदलेतृतीयेचक्रे ॥ मणिवद्भिन्नंतत्पद्मंमणिपूरंतथोच्यते ॥ देशविशेषे ॥

मणिबन्धः । पुं० प्रकोष्ठपाण्योः सन्धिस्थाने । करग्रन्थौ । कलाइ० इ० भा० । हस्तमूले ॥ मणिर्बध्यतेऽत्र । बन्धबन्धने । हलश्चेतिघञ्० न० ॥ बृहती ९ छन्दः प्रभेदे ॥ यथा ।

आदितुरीयं पञ्चमकं षष्टमथान्त्यं स्या द्गुरु चेत् । इन्द्रियवेदैश्च विरति-स्तन्मणिबन्धं प्राहफणी ॥ मणिमध्य मितिनामान्तरम् ॥

मणिबन्धनम् । न० हस्तमूले ॥

मणिभद्र : । पुं० जिनानां पूर्वयत्तवि शेषे । जम्भले ॥ कुवेरसेनापतौ ॥

मणिभूमि : । स्त्री० कुट्टिमे । रत्नस्यख नौ ॥

मणिमञ्जीरम् । न० रत्नमयनूपुरे ॥

मणिमण्डप : । पुं० रत्नमयगृहे ॥

मणिमध्यम् । न० बृहती ९ छन्दोभे दे । मणिबन्ध ॥ लक्षणं यथा । स्या न्मणिमध्यं चेद्भसाः । यथा । का लियभोगाभोगगतस्तन्मणिमध्यस्फो तरुचा । चित्रपदाभोनन्दसुतस्चारु ननर्त्तस्मेरमुख : ॥

मणिमन्थम् । न० सैन्धवलवणे ॥ पर्व तविशेषे ॥

मणिमान् । त्रि० मणिविशिष्टे । रत्न भूषिते ॥ पुं० तीर्थस्त्वेनवर्णितेप र्वतविशेषे ॥

मणिमन्दिरम् । न० बहुमूल्यप्रस्तरयु क्तगृहे ॥

मणिमाला । स्त्री० हारे ॥ स्त्रीणांदन्त-क्षतान्तरे ॥ लक्ष्म्याम् ॥ जगती-१२ छन्दोभेदे । यथा । त्यौत्यौम णिमालाछिन्नागुहवक्त्रै : ॥ यथा । प्रह्वामरमौलीरत्नोपलक्लृप्ते ०जातप्र तिबिंबाशोणामणिमाला । गोविन्द पदाब्जे राजीनखराणामास्तांममचि त्ते ध्वान्तं शमयन्ती ॥ मणीनां० मा ला० मालेववा ॥

मणिरागम् न० हिङ्गुले ॥

मणिव : । पुं० नागविशेषे ॥ मणि रस्यास्ति । अन्येभ्योपिदृश्यतइति व : ॥

मणिवर : । पुं० हीरके ॥

मणिबीज : । पुं० दाडिमवृक्षे ॥

मणिसर : । पुं० मुक्ताहारे ॥

मणी । स्त्री० मणौ ॥

मणीचकम् । न० इन्दुकान्ते । चन्द्र वर्णरूप्ये ॥ पुं० मत्स्यरङ्कख गे ॥

मणीव । अ० मणितुल्ये ॥

मणीवकम् । न० पुष्पे । कुसु मे ॥

मण्टपी । स्त्री० क्षुद्रोपोदक्याम् ॥

मण्ठ : । पुं० पक्वान्नविशेषे । मंठे । मांठ० इ० भा० ॥ मण्ठते । मठि शोके । शोकद्रुहाध्यानम् । पचाद्य च् ॥

मण्ड : । पुं० पञ्चाङ्गुले । एरण्डवृक्षे ॥ शाकभेदे ॥ मस्तुनि ॥ भूषा याम् ॥ सारे ॥ पिच्छे ॥ दर्दुरे ॥ भक्तादिभवरसे ॥ तल्लक्षणं यथा भक्तैविंनाद्रवोमण्ड : पेयं भक्तस मन्वितम् ॥ अपिचास्यलक्षणंविधि

गुणास्ततण्डुलानांसुसिद्धानांचतुर्द्दशगुणे जले । रसः सिक्थैर्विरहितोमण्डइत्यभिधीयते ॥ शुण्ठीसैन्धवसंयुक्तोदीपनः पाचनश्चसः । अन्नस्यसम्यक्सिद्ध्यात्तस्ययामण्डस्यसिद्धता ॥ पेयायूषयवागूनांविलेपीभक्तयोरपि । तस्यगुणाः । मण्डोग्राहीलघुः शीतोदीपनोधातुसाम्यकृत् ॥ ज्वरघ्नस्तर्पणोवल्यः पित्तश्लेष्मश्रमापहः । अपिच शुद्धोधनोवस्तिविशोधनश्चप्राणप्रदः शोणितवर्द्धनश्च । ज्वरापहारीकफपित्तहन्तावायुंजयेदष्टगुणोहिमण्डः ॥ लाजमण्डोग्निजननोदाहतृष्णानिवारणः ज्वरातीसारशमनोऽशेषदोषामपाचनः ॥ वाट्यमण्डोग्निजननः शूलानाहविनाशनः । पाचनोदीपनोहृद्यः पित्तश्लेष्मानिलापहः वाट्यमण्डोभृष्टयवमण्डः ॥ न० मस्तुनि ॥ मण्डने ॥ पुं० न० सर्व्वेषामन्नदध्यादीनामग्ररसे । मांड० इ० भा० ॥ सारे ॥ पिच्छे ॥ मण्डयति । मडिभूषायाम् । पचाद्यच् ॥ मण्डति० मण्ड्यतेवा । अच्० घञ्वा ॥ मन्यतेवा । मनस्नाने । अमन्ताड्डः ॥

मण्डकः । पुं० मांडे० मांडा० मण्डाइतिप्रसिद्धखाद्यपदार्थे ॥ तद्विधानंयथा । वारिणाकोमलांकृत्वासमितांसाधुमर्द्दयेत् । हस्तलालनयातस्यालोपूर्वींसम्यक्प्रसारयेत् ॥ अधोमुखघटस्यैतद्विस्तृतंप्रक्षिपेद्दृढ़ि । मृदुनावह्निनासाध्यः सिद्धोमण्डकउच्यते ॥ दुग्धेनसाज्यखण्डेनमण्डकंभक्षयेन्नरः । अथवासिद्धमांसेनसतक्रवटकेनवा ॥ मण्डकोवृंहणोवृष्योवल्योरुचिकरोभृशम् । पाकेपिमधुरोग्राहीलघुर्दोषत्रयापहः ॥ गीताङ्गविशेषे ॥ यथा । जयप्रियः कलापद्मकमलः सुन्दरस्तथा । मङ्गलोवल्लभश्चेतिमण्डकाः षट्प्रकीर्त्तिताः ॥ एषांविशेषः सङ्गीतदामोदरेद्रष्टव्यः ॥

मण्डनम् । न० प्रसाधने । भूषणे ॥ चतुर्धामण्डनंवासोभूषामाल्यानुलेपनैः ॥ मण्ड्यतेऽनेन । मडि० । ल्युट् ॥ नीतिर्भूमिभुजांनतिर्गुणवतांह्रीरङ्गनानांधृतिर्दम्पत्योः शिशवोगृहस्यकविताबुद्धेः प्रसादोगिराम् । लावण्यंवपुषः स्मृतिः सुमनसः शान्तिर्द्विजस्यक्षमाशक्तस्यद्रविणंगृहाश्रमवतांस्वास्थ्यंसतांमण्डनम् ॥ त्रि० भूषणकर्त्तरि अलङ्करिष्णौ । मण्डनशीलः । मडि० । क्रुधमण्डार्थेभ्यश्चेतियुच् ॥

मण्डनता । स्त्री० प्रसाधनत्वे ॥

मण्डपः । पुं० न० जनाश्रये । जनविश्रामसद्मनि ॥ मण्डनम् मडि । घञ् । मण्डं पाति । पारक्षणे । आतोऽनुपसर्गेकः ॥ देवादिद्रव्यवेश्मनि ॥ त्रि० मण्डपानकर्त्तरि ॥ मण्डं पिबति । पा० । कः ॥

मण्डपी । स्त्री० निष्पाव्याम् ।

मण्डयन्तः । पुं० नटे ॥ वधूसमूहे । अन्ने ॥ अलङ्कारे । भूषणे ॥ मण्डयति । मडिभूषायांहर्षेच । तृभूवहिवसीत्यादिना० झच्० सचषित् ॥

मण्डयन्ती । स्त्री० योषिति । वध्वाम् ॥ नव्याम् ॥ षित्वान्ङीष् ॥

मण्डयमानः । त्रि० मण्डनंकुर्वाणे ॥ मण्डयति० तच्छीलः । मडि० । ताच्छील्यवयोवचनशक्तिषुचानश् ॥

मंडरी । स्त्री० घुर्घुर्याम् ॥

मंडलः । पुं० कुक्कुरे ॥ सर्पप्रभेदे ॥ न० परिधौ चन्द्रसूर्ययोर्वहिर्वेष्टने । चन्द्रसूर्ययोरुत्पातजरश्मिमंडले ॥ य० वातेनमंडलीभूताः सूर्याः चन्द्रमसोः कराः । मालाभाव्योम्नितन्वन्तो परिवेशः प्रकीर्तितइति ॥ चक्रवाले । मंडलाकारेणपरिणतेसमूहमात्रे ॥ चतुरस्त्रादौ ॥ यथा। चतुरस्रंत्रिकोणंवावर्त्तुलंचार्द्धचन्द्रकम् । कर्तव्यमानुपूर्व्येणब्राह्मणादिषुमंडलमिति ॥ कोठरोगे । मंडलवत् कुष्ठे ॥ देशे ॥ समन्ताद्विंशतियोजने । चत्वारिंशद्योजनेवादेशइतिकेचित् ॥ द्वादशराजकेः ॥ द्वादशराजमु द्वादशराजमंडलंतुकामन्दकेनोक्तं । यथा । अरिर्मित्रमरेर्मित्रंमित्रमित्रमतः परम् । तथारिमित्रमित्रञ्चविजिगीषोः पुरः स्थिताः ॥ पार्ष्णिग्राहः स्मृतः पश्चात्आक्रन्दस्तदनन्तरम् । आसारावनयोश्चवविजिगीषोस्तुपृष्ठतः मंडलम् ॥ अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्तरः । अनुग्रहेसंहतयोः समर्थोव्यस्तयोर्वधे ॥ मंडलाद्वहिरेतेषामुदासीनोबलाधिकः । अनुग्रहेसंहतानांव्यस्तानाञ्चवधेप्रभुः ॥ पञ्चविजिगीषोः पुरः सराः । पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रान्दासाराइतिपृष्ठतश्चत्वारः । मध्यमोदासीनौद्वौ । विजिगीषुरेकइत्येवंद्वादशराजमंडलम्भवति ॥ गोले ॥ चक्रे॥ सङ्घाते ॥ नखाघाते ॥ गदायुद्धेगतिभेदे ॥ धन्विनांस्थानपञ्चकान्तर्गतस्थितिविशेषे ॥ यथा । मंडलाकारपादाभ्यांमंडलंस्थानमीरितम्॥ व्याघ्रनखाख्यगन्धद्रव्ये ॥ व्यूहविशेषे । यथा । तिर्यग्वृत्तिश्चदंडःस्याद् भोगोन्वावृत्तिरेवच । मंडलंसर्वतोवृत्तिःपृथग्वृत्तिरसंहतः ॥ मंडयति । मडि० । वृषादित्वात्कलः ॥ मंडं

भूषांलातिवा । मंडते० इतिवा ॥ यद्वा । मंडमस्यस्य । सिध्मादित्वा ल्लच् ॥ त्रि० निवहे । बिम्बे ॥

मण्डलकम् । न० बिंबे । कुष्ठभेदे । मण्डलाकारकुष्ठे । कोठे ॥ दर्पणे ॥ मण्डलाकारव्यूहे ॥ पुं० कुकुरे ॥ मण्डलमिव । इवेप्रतिकृताविति कन् ॥

मण्डलनृत्यम् । न०क्लीबे । मण्डलाकारनृत्ये ॥

मण्डलपत्रिका । स्त्री० रक्तपुनर्नवायाम् ॥

मंडलसङ्क्रम : । पुं० राशिसङ्क्रमे ॥

मंडलाग्रः । पुं० कृपाणे । खड्गे ॥ मंडलमग्रमस्य ॥

मंडलायितम् । न० वर्तुले ॥

मंडलाधीशः । पुं० मंडलेश्वरे । मध्यमे ॥

मंडलिका । स्त्री०परिधौ ॥ मंडलात् स्वार्थेकः । कात्पूर्वस्येकारः ॥ मंडल्याम् ॥ स्वार्थेके० केण : ॥

मण्डली । पुं० भुजङ्गे ॥ विडाले ॥ जाहके ॥ गोनासे० सर्पे ॥ वटवृक्षे ॥

मण्डली । स्त्री० मण्डलाकारेणपरिणतसमूहे ॥ दूर्वायाम् ॥ गौरादित्वान्ङीष् ॥

मण्डलेश : । पुं० एकजन्मनि । भयापहे । मण्डलेश्वरे ॥ शाण्डक्यादेव्याः स्थाने ॥ मण्डलस्येश : ॥

मण्डलेश्वरः । पुं०नृपान्तरे ॥ भूम्येकदेशाधिपे ॥ चतुर्योजनपर्यन्तमधिकारीनृपस्य च । योराजातच्छतगुण : सएवमण्डलेश्वर : ॥ मण्डलस्यपरिमितादिरूपस्यदेशस्यईश्वर : ॥

मण्डहारक : । पुं० शौण्डिके ॥ मण्डं सुराग्रसंहरति । हृञ् । कर्मण्यण् । स्वार्थेक : ॥

मण्डा । स्त्री० आमलक्याम् ॥ सुरायाम् ॥ मण्डे : पचाद्यजन्ताट्टाप् ॥

मण्डित : । पुं० बौद्धगणाधिपविशेषे ॥ त्रि० भूषिते ॥ मंडते । मडि० क्त : ॥

मण्डुक : । पुं० सङ्ग्रहे ॥

मण्डूक : । पुं० गूढवर्चसि । दर्दुरे । भेके । शोणके ॥ मुनिविशेषे ॥ न० बन्धविशेषे ॥ मण्डयति० जलाशयम्० मंडतेवा । मडि० । शलिमण्डिभ्यामूकण् ॥

मण्डूकपर्ण : । पुं० पत्रोर्णे । स्योनाकवृक्षे ॥ शोणके ॥ मंडूकस्येवपर्णमस्य ॥ कपीतने ॥

मण्डूकपर्णी । स्त्री० मञ्जिष्ठायाम् ॥ ब्राह्म्याम् ॥ गोजिह्विकौषधौ ॥ आदित्यभक्तायाम् ॥ मंडूकवत्पर्णमस्याः । पाककर्णेतिङीष् ॥

मण्डूकमाता । स्त्री० ब्राह्म्याम् ॥

मंडूका । स्त्री० मञ्जिष्ठायाम् ॥

मंडूकी । स्त्री० मंडूकपर्ण्याम् ॥ धृष्टयो

षिति । भेक्याम् । ब्राह्म्याम् ॥ सूर्यभक्तायाम् ॥

मंडूरम् । न० लौहमले । सिंहाणे । शिङ्घाणे ॥ ध्मायमानस्यलोहस्यमलंमंडूरउच्यते । यल्लोहंयद्गुणंप्रोक्तं तत्किट्टमपितद्गुणम् ॥ शतोर्द्ध्वमुत्तमंकिट्टंमध्यञ्चाशीतिवार्षिकम् । अधमम्षष्ठिवर्षीयंततोहीनोविषोपमम् ॥ मूण्डते ।मडि० । खर्जूरादित्वादूर : ॥

मंडोदकम् । न० चित्तरागे ॥ आतर्पणे । आलिम्पने ॥

मतम् । त्रि० सम्मते ॥ ज्ञाने ॥ अर्चिते ॥ शिष्टसंमते ॥ तर्किते ॥ मन्यते । मनज्ञाने । मतिबुद्धिपूजार्थेभ्यश्चेतिवर्तमानेक्त : ॥ न० अभिप्राये ॥ निश्चये ॥

मतङ्ग : । पुं० मुनिविशेषे ॥ मेघे ॥

मतङ्गकेदार : । पुं० तीर्थविशेषे ॥

मतङ्गज : । पुं० गजे । हस्तिनि ॥ मतङ्गात्कृषेर्जात : । जनी० । पञ्चम्यामजातावितिड : ॥

मतल्लिका । स्त्री० प्रशस्ते ॥ मतं० मतिम्० अलति । अलभूषणादौ । ण्वुल् । पृषोदरादित्वात्कल : । प्रशस्त : पुरुष : ० पुरुषमतल्लिका । मतल्लिकायारूढिशब्दत्वात्० प्रशंसावचनैश्चेतिसमास : ॥

मतानुज्ञा । स्त्री० निग्रहस्थानभेदे ॥ तस्यलक्षणंयथा । स्वपक्षेदोषाभ्युपगमात्परपक्षेदोषप्रसङ्गोमतानुज्ञा । इ० गौ० सूत्रम् । ६३ ॥ अस्यार्थ: । दोषाभ्युपगमात्० दोषमनुज्ञात्वेत्यर्थ : । यथाशब्दोनित्य : श्रावणत्वादित्युक्ते०ध्वनावनैकान्तिकत्वेन हेत्वाभासोयमित्युक्ते० शब्दोऽनित्य : कृतकत्वादितिसाधितेध्वनेरपिपक्षत्वान्नदोष इत्युक्ते० असिद्धत्वात्तवापिहेत्वाभासोयमित्युक्ते० सोयंमतानुज्ञयानिगृहीत : स्यात् प्रतिषिद्धमनुमतंभवतीतिस्वपक्षे दोषाभ्युपगमात् ॥ इति ॥ ६३ ॥

मति : । स्त्री० इच्छायाम् ॥ धियि ॥ बुद्धौ । यस्ययत्कुलेजन्मतन्मतिस्तादृशीभवेत् ॥ स्मृत्याम् ॥ श्रुतस्यमनने ॥ मतिकरौषधंयथा । पाठाइजीरकेकुष्ठमश्वगन्धाजमोदकम् । वचात्रिकटुकञ्चैवलवणाचूर्णमुत्तमम् ॥ ब्राह्मीरसेभावितञ्चसर्पिर्मधुसमन्वितम् । मत्ताहभक्षितंकुर्यान्म ...... मतिं परामितिगरुडपुराणम् ॥ मन्यतेऽनया । मनज्ञाने । क्तिन् ॥ मतिर्मननं तर्क्यमन्तव्यविषयश्च दरइति छान्दोग्यमहाभाष्यम् ॥ आर्ये ॥ शाकभेदेइत्यजयपालः ॥ अतीतानुस्मृतिर्मेधातत्कालग्राहिणीमतिः । शुभाशुभविचारज्ञाप्रज्ञाधीरैरुदाहृतेतिविशेषः ॥

मतिगर्भः । त्रि० प्रतिभासारे ॥
मतिदा । स्त्री० ज्योतिष्मत्याम् ॥ शि
मृडीक्षुपे ॥
मतिभ्रमः । पुं० भ्रमे ॥ मतेर्भ्रमः ॥
मतिभ्रान्तिः । स्त्री० मतिभ्रमे । मि-
थ्यामतौ ॥ मतेर्भ्रान्तिः ॥
मतिमान् । त्रि० प्राज्ञे ॥
मतिविभ्रंसः । पुं० उन्मादरोगे ॥
मतेर्भ्रंसोनाशोयेन ॥
मतुबर्थीयः । पुं० मत्वर्थीयेषुप्रत्ययेषु ॥
बाहुलकान्मतुबर्थशब्दाच्छः ॥ शैषि
कान्मतुवर्थीयादितियथा ॥
मत्कुणः । पुं० मकनाइतिख्यातेनि-
र्विषाणेभे । कालेप्यजातदन्ते गजे ॥
नि: श्मश्रुपुरुषे ॥ उद्दंशे । रक्त
पायिनि । रक्ताङ्गे । मञ्चाश्रये०
कीटविशेषे । उडुस० मांगुण०
खटमल० इं०चभाषा ॥ नारिकेले ॥
जङ्घात्राणे । जङ्घासम्बद्धवाससि ॥
मत्कुणा । पुं० निर्लोमयोनौ ॥
मत्कुणारिः । पुं० इन्द्राशने । भङ्गा
याम् ॥
मत्तः । पुं० प्रभिन्ने । चरन्मदेहस्ति
नि । गर्जिते ॥ धुस्तूरे ॥ कोकिले ॥
महिषे ॥ त्रि० हृष्टे ॥ मदिरामत्ते
॥ शौण्डे माद्यतिस्म । मदीहर्षे
। गत्यर्थेतिक्तः । नध्याख्येतिननत्वं ॥
मत्तकाशिनी । स्त्री० उत्युत्तमनार्याम्
। वरवर्णिन्याम् ॥ मत्ता० चीवे
वकाशतेभाति । काशृदीप्तौ । कर्त्त
र्युपमानइतिणिनिः ॥
मत्तकासिनी । स्त्री० वरारोहायांयो
षिति ॥ मत्तेवकासते । कासृशब्द
कुत्सायाम्० कसगतिशासनयोर्वा
। कर्त्तर्युपमानइतिणिनिः ॥
मत्तकीशः । पुं० हस्तिनि ॥
मत्तवारणः । पुं० प्रक्षिप्तकाटकुञ्जरे ।
मत्तगजे ॥ न० प्रासादवीथीभांबर
ण्डे । कोठेकाबरंडा० इं०भा० ॥
अपाश्रये । प्राङ्गनावरणे ॥ पूगचूर्णे ॥
मत्तमयूरः । पुं० अतिजगती १३ छ
न्दःप्रभेदे । यथा । वेदैरन्ध्रैर्म्तौस
यगामत्तमयूरः । यथा । लीला
नृत्यन्मत्तमयूरध्वनिकान्तम् ० नृ
त्यन्नीपामोदिपयोदानिलरम्यम् ।
रासक्रीडाहृष्टमनागोपवधूभिः ०
कंसध्वंसीनिर्जनवृंदावनमाप ॥
मत्तमातङ्गः । पुं० दंडकप्रभेदे ॥ यथा ।
आदितोरागणाखेच्छयायत्रवृत्ताः
सर्वेमत्तमातङ्गनामामहादंडकः स
न्मतः ०खान्तरेनंसमादायमोदायचे
तोविधेहिप्रभोभारतीरीतिविश्रान्ति
भूस्त्वंयतः । विस्फुरत्सङ्गरप्राङ्ग
णेनागराजीसचीत्कारफूत्कारधाराकु
लेसावधानोयथा० पन्नगाधीशयुग्व
प्रबुद्धैकबुद्धिप्रकाशप्रवृत्तेवृहद्वृत्तशा
स्त्रेऽपिनित्यंयथा ॥
मत्तमातङ्गलीलाकरः । पुं० दंडकप्र

भेदे ॥ यथा । यत्र रेफ : पर : स्वे च्छयागुम्फित : ॥ सम्भृतोद्दंडकोमत्तमातङ्गलीलाकर :॥ हेमगौरे वसानोंऽशुकेइन्द्रनीलासितवर्ष्मणि स्पष्टदिव्यानुलेपाङ्कितो॰हारतारां शुभ्रचोनभास्वित्रमालाश्चितोभव्यभूषोज्ज्वलाङ्ग : समंसीरिणा । अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेनलीलापरीहासहासोर्मिकौतूहले : कंसरङ्गाद्रिगु: पातुनश्चक्रपाणिर्गतिक्रीडयामत्तमातङ्गलीलाकर : ॥

मत्ता । स्त्री॰ मदिरायाम् ॥ मदेनमूढायाम् ॥ पङ्क्तिच्छन्द : १० प्रभेदे ॥ यथा । ज्ञेयामत्तामभसगसृष्टा ॥ यथा । पीत्वामत्तामधुमधुपाली॰-कालिन्दीयेतटवनकुञ्जे । उद्दीव्यन्तीव्रजजनरामाकामासक्तामधुजितिचक्रे ॥

मत्ताक्रीडम् । न॰ विकृतिच्छन्द : २३ प्रभेदे ॥ यथा । मत्ताक्रीडंवसिष्वाशायतिमयुगगयुगमनुलघुगुरुभि: ॥ यथा । मुग्धोन्मीलन्मत्ताक्रीडंमधुसमयसुलभमधुरमधुरसात्॰गानेयानेकिञ्चित्स्पन्दत्पद्मरुणनयनयुगलसरसिजम् । रासोल्लासक्रीडत्कम्रव्रजयुवतिवलयविहितभुजरसम्॰सान्द्रानन्दंवृन्दारण्येस्मरजहरिमनघचरणपरिचयम् ॥

मत्तालम्ब : । पुं॰ प्राङ्गनावरणे । अ-पाश्रये । प्रगीवे । मत्तवारणे ॥

मत्तेभगमना । स्त्री॰ स्त्रीविशेषे । मत्तगजगामिन्याम् ॥ मत्तेभवद्गमनंयस्या : सा ॥

मत्पूर्व : । त्रि॰ मदीयप्राचीने ॥

मत्यम् । न॰ दाचादिमुष्टौ । वष्टे । वैटा॰इ॰भा॰ ॥ मतंज्ञानम्॰तस्य करणम्॰भाव : साधनंवा । मतजनहलात्करणजल्पकर्षेषु॰इतियत् ॥

मत्वर्थीय : । पुं॰ मतुबर्थीयेप्रत्यये ॥ मत्वर्थाच्छ : । बहुलवचनाट्टकारलोप : ॥

मत्स : । पुं॰ मत्स्ये ॥

मत्सगण्ठ : । पुं॰ गलग्रहे । मत्सघण्ट इ॰गौ॰दे॰प्र॰व्यञ्जनविशेषे ॥

मत्सर : । पुं॰ मात्सर्ये । अन्यशुभद्वेषे ॥ क्रोधे ॥ वैरे ॥ त्रि॰असह्यपरसम्पत्तौ । परोत्कर्षासहनपूर्विकायांस्वोत्कर्षवाञ्छायाम् । स्वप्रयोजनप्रतिसन्धानंविनापराभिमतनिवारणेच्छायाम् ॥ अन्यशुभद्वेषवति ॥ कृपणे ॥ माद्यतिपरकृच्छ्रे । मदीहर्षे । कृधूमदिभ्य : क्विदिति सर: ॥ मत्सरंहर्षहेतुमितिवेदभाष्यम् ॥ आत्मधिक्कारविशेषे ॥ यथा । निन्दन्निमांसदालोकाधिगस्तुममजीवनम् । इत्यात्मनिभवेद्यस्तुधिक्कार : सचमत्सर : ॥

मत्सरा । स्त्री० मक्षिकायाम् ॥

मत्सरी । त्रि० अन्यशुभद्वेषरि । कर्णे जपे । दुर्जने । पिशुने । सूचके । नीचे । द्विजिह्वे । खले ॥ मत्सरोऽस्यास्मिन् वा । इनि : ॥

मत्सी । स्त्री० मत्स्यस्त्रियाम् ॥ मत्स्य शब्दात्स्त्रीत्वेच्छायांगौरादित्वान् ङीषि०सूर्यतिष्येति यलोप : । स चमत्स्यस्यङ्यांसिद्ध : ॥

मत्स्य : । पुं० मीनान्तरे ॥ अभिख्य· यादवे । नारायणे ॥ द्वादशराशौ । मीने ॥ अष्टादशपुराणान्तर्गतेचतुर्दशसहस्रश्लोकात्मकेपुराणविशेषे ॥ दशावतारान्तर्गतप्रथमावतारे ॥ मत्स्या : भूम्नि । देशविशेषे ॥ पुलिन्दादुत्तरेभागेकच्छाच्चपश्चिमेशिवे । मत्स्यदेश:समाख्यातोमत्स्यवाहुल्यकारक:॥मत्स्यानांनिवासोजनपद:मत्स्या:।जणोलुप।लुपियुक्तवद्भाव: ॥ देशविशेषे ॥ विराटनगरे ॥ माद्यति । मदी० । ऋतन्यञ्जीति मदे : स्यन् । जनिदेत्यादिना० स्नोवा । स्वरभेद : ॥ पुं० स्त्री० जलजन्तुविशेषे । पृथुरोमणि । झषे । मीने । वैसारिणे । अण्डजे । मच्छी० इ० भाषा ॥ रोहितादयास्तुये जीवास्तेमत्स्या : परिकीर्त्तिता : ॥ अथैतेषांगुणा: । यथा । मत्स्या: स्निग्धोष्णमधुरा: गुरव : कफपित्तला : । वातघ्नावृंहणावृष्यारोचकाबलवर्द्धना : ॥ अध्वव्यवायसक्तानांदीप्ताग्नीनाञ्चपूजिता : ॥ शुष्कमत्स्यानवल्या : स्युर्दुर्जराविड्विबन्धना : । दग्धमत्स्योगुणै : श्रेष्ठ : पुष्टिकृद्बलवर्द्धन : ॥ सूक्ष्ममत्स्यास्तु । भर्जितास्तिलतैलेनसर्वसम्भारसम्भृता: । सूक्ष्मामत्स्या : स्वादुरसादोषत्रयनिवर्हणा : । परंसूक्ष्मास्तुयेतेषु तेसर्वेपुंस्त्वनाशना: ॥ अथकूपादिमत्स्यानांगुणा: । कौपमत्स्या : शुक्रमूत्रकृच्छ्रघ्ना विबन्धदा : । सरोजामधुरा : स्निग्धावल्यावातविनाशना : ॥ नादेयावृंहणामत्स्या गुरवोनिलनाशना : ॥ रक्तपित्तकरावृष्या : स्निग्धोष्णा : स्वल्पवर्चस: ॥ चौड्या : पित्तहरा : स्निग्धामधुरालघवोहिमा : । ताडागागुरवोवृष्या : शीतलाबलमूत्रदा : ॥ ताडागवन्निर्झरजानलायुर्मतिदाकरा : ॥ अथर्त्तुविशेषेमत्स्यगुणा : । यथा । हेमन्तेकूपजामत्स्या : ० शिशिरेसारसाहिता : । वसन्तेतेतुनादेयाग्रीष्मेचौड्यासमुद्भवा : ॥ तडागजास्तेवर्षासुताखपथ्यानदीभवा : । नैर्झरा : शरदिश्रेष्ठाविशेषोयमुदाहृत : ॥ अपिच । स्नि : शस्तानि

न्दितामत्स्याः सर्वे शल्कयुताहि-
ताः। वपुःस्थैर्य्यकरावीर्यबल
पुष्टिविवर्द्धनाः॥ हृदकुल्याजल
निर्झरतडागवापीजलेषु येमत्स्याः
। तेऽतिजडानादेयायथोत्तरंलघु
तरास्तुदेयाः॥ चाराम्बुमत्स्या
गुरवोविदाहिनोविष्टंभदास्ते लव
णार्णवादिजाः। नानाश्रिताः
स्वादुजलस्थिताश्चपिच्छ्याजडास्ते
पितथाश्रितास्त्विमे॥ क्षुद्रमत्स्याः
स्वादुरसादोषत्रयविनाशनाः।
लघुपाकारुचिकराः सर्वदातेहि
तामताः॥ अतिसूक्ष्माः पुंस्त्व
हरारुच्याः कासानिलापहाः।
मत्स्याण्डगुणास्तु। मत्स्यग
र्भोभृशं वृष्यः स्निग्धः पुष्टिकरो
गुरुः। कफमेदः प्रदोबल्योग्ला
निकृन्मेहनाशनः॥ अथरन्धन
प्रकाराः मत्स्यखण्डानिसङ्घृ
ष्यचालयेत्प्रथमंजलैः। ततोवे
शनतक्राभ्यांबहुशः चालयेत्पुनः
॥ गन्धनाशनप्रकारस्तु। हरिद्रा
शुण्ठीधान्याककटुतैलैर्विमर्दये
त्। प्रचाल्यहिङ्गुनालिम्पेद्गन्ध
स्तेनोपशाम्यति॥ मत्स्योत्तमरन्ध
नन्तु। तप्ततैलेक्षिपेदान्यंकास
मर्दंसहिङ्गुकम्। भृष्टंसलवणंत
क्रे मत्स्यंक्षिप्त्वापुनः पचेत्॥ अर्द्ध
पक्वे क्षिपेदम्लंसिद्धचूर्णञ्चनागरम्।

मत्स्यः

दग्धंहिङ्गुविनिःक्षिप्यसाधयेन्मत्स्य
मुत्तमम्॥ मत्स्यपिष्टिकातु। गत
त्वक्कण्टकोमत्स्योवेसवारेणसंयु-
तः। शिलायांपेषितोभूयः प्रोच्य
तेमत्स्यपिष्टिका॥ तैलेविपाचयेत्य
श्चाच्चतुर्थंसाम्लसंयुतम्। वेसवारेण-
संयुक्तंशिलायांपेषयेत्पुनः॥ अ
नयापूर्ववत्कुर्यान्मांसस्येवप्रकार-
काः। वटिकावटकाद्याश्चसूपका
रधियोचिताः॥ मत्स्यपूरणम्।
तक्रेणस्विन्नमत्स्यस्यखण्डान्प्रचाल्य
पेषयेत्। वीजपूराद्र्दंमरिचैर्हिङ्गुसै
न्धवजीरकैः॥ संयुक्तकटुतैलाद्यै
र्घृतेपक्त्वाथचूर्णयेत्॥ मत्स्यपुटपा-
कस्तु। गतत्वक्चालितंमत्स्यंकद-
लीफलवेष्टितम्। मृदालिप्तंपुटेपक्वं
संस्कृतंदाडिमादिना॥ यच्चमत्स्यंपु
टेपक्वंजीरतण्डुललेपितम्। तापि-
कायांपुनःपक्वंसंमिश्रंमरिचादि-
ना केचिद्वदन्त्यमृतमस्तिपुरेसुरा
णांकेचिद्वदन्तिवनिताधरपल्लवेषु।
ब्रूमोवयंसकलशास्त्रविचारबुद्ध्या-
जम्बीरनीरपरिपूरितमत्स्यखण्डेद्ध-
तिमणिमिश्रः॥ मत्स्यभक्षणनिषेधो
यथा। योयस्यमांसमश्नातिसत-
न्मांसादउच्यते। मत्स्यादः सर्वमां
सादस्तस्मान्मत्स्यान्विवर्ज्जयेत्॥ त्रि
न्ध्यस्यपश्चिमेभागेमत्स्यभुक्पतितो-
भवेत्। अन्यत्रकामतोजग्ध्वासोपवा

सम्वत्सरं वसेत्॥ अज्ञानतस्तदर्द्धम्॥ मत्स्यभक्षणप्रतिप्रसवो यथा। मत्स्यान्सशल्कान्भुञ्जीतमांसंरौरवमेवच। निवेद्यदेवताभ्यस्तुब्राह्मणेभ्यस्तुनान्यथा॥ सफरंसिंहतुण्डञ्चतथापाठीनरोहितौ। मत्स्यास्त्वेतेसमुद्दिष्टाभक्षणायतपोधनैः॥ प्रोक्षितंभक्षयेदेषांमांसञ्चद्विजकाम्यया। यथाविधिनियुक्तञ्चप्राणानामपिचात्यये॥ इतिकौर्मेउपरिभागे १६ अध्यायः॥ अपिच। पाठीनरोहितावाद्यौनियुक्तौहव्यकव्ययोः। राजीवान्सिंहतुण्डांश्चशल्कांश्चैवसर्वशः॥ इतिमनुः॥ अनिवेद्यनभोक्तव्यंमत्स्यंमांसञ्चयद्भवेत्। अन्नंविष्ठापयोमूत्रंयद्विष्णोरनिवेदितम्॥

मत्स्यकरण्डिका। स्त्री० मत्स्यरक्षणपात्रे। मत्स्याधान्याम्। कुवेण्याम्। खालुइ० इ० गौ० दे० भा०॥

मत्स्यगन्धा। स्त्री० व्यासदेवस्यमातरि॥ तोयपिप्पल्याम्। लाङ्गल्याम्॥ मत्स्यस्यगन्धइवगन्धोस्याः। उपमानाच्चेतिइत्त्वाभावश्छान्दसः॥

मत्स्यगर्भः। पुं० मत्स्यांडे॥

मत्स्यघण्टः। पुं० मत्स्यघटितव्यञ्जनविशेषे। गलग्रहे॥

मत्स्यजालम्। न० आनाये। जाले॥

मत्स्यण्डिका। स्त्री० मत्स्यण्डाम्। राव० इ० भा०॥ मत्स्यण्डिकाखंडसिताः क्रमेणगुणवत्तराइतिवाग्भटः मत्स्यण्डा व। स्वार्थेकन्॥

मत्स्यंडी। स्त्री० फाणिते राव० इ० काशीभाषा॥ तल्लक्षणम्॥ यथा। इक्षोरसीयः सम्यक्कोघनः किञ्चिद्द्रवान्वितः। मन्दंयत्स्यन्दतेतस्मान्मत्स्यण्डीतिनिगद्यते॥ मत्स्यण्डीभेदिनीवल्यालघ्वीपित्तानिलापहा। मधुराबृंहणीवृष्यारक्तदोषापहास्मृता॥ मत्स्याण्डाकारत्वात्० मत्स्यंडी। शकन्ध्वादिः॥ मदंमुदंवास्यन्दते। स्यन्दू प्रस्रवणे। कर्मण्यण्। ङीप्। पृषोदरादिः॥

मत्स्यधानी। स्त्री० मत्स्याधान्याम्। कुवेण्याम्॥ मत्स्याधीयन्तेच। करणाधिकरणयोरितिधाञोल्युट्॥

मत्स्यध्वजः। पुं० मत्स्याकारेध्वजे॥ गिरिकामरूपप्रसिद्धेपर्वते॥ यथा। मणिकूटाचलात्पूर्वंमत्स्यध्वजकुलाचलः। निर्दग्धोयत्रमदनोहरनेत्राग्निनापुनरित्यादिकालिकापुराणे॥ ८१ऽध्यायेऽस्ति॥

मत्स्यनाशकः। पुं० कुररपक्षिणि। त्रि० मीननाशकर्त्तरि॥

मत्स्यनाशनः। पुं० कुररपक्षिणि॥

मत्स्यपित्ता । स्त्री० कटुरोहिण्याम् कृष्णभेद्याम् । कटुक्याम् ।। मत्स्यानांपित्तमिवतत्स्वादुत्वात् ॥

मत्स्यप्रलेह : । पुं० मत्स्यव्यञ्जनान्तरे ॥ विशेष : प्रलेहे ॥

मत्स्यबन्धी । पुं० कैवर्त्ते । धीवरे ॥

मत्स्यबन्धनी । स्त्री० कुवेण्याम् । मत्स्याधान्याम् ।

मत्स्यमंडक : । पुं० व्यञ्जनान्तरे । मत्स्यस्यपिष्टिकांकृत्वापर्णस्यांमण्डलाकृतिम् । आसुरेणसमुत्स्विन्नां संयुक्तांधूलनेनतु । मत्स्यमण्डकइत्युक्त : सूदशास्त्रे विचक्षणै : ॥

मत्स्यरङ्क : । पुं० )
मत्स्यरङ्कक : । पुं० ) पक्षिविशेषे । मत्स्याशिनि । जलमङ्गौ । मणीचके । माचराङ्गा० इ० गौ० दे० भा० । मच्छरङ्ग० इ० दे० भा० ॥

मत्स्यराज : । पुं० विराटनृपे । रोहितमत्स्ये ॥ मत्स्यानांराजा । टच् ॥

मत्स्यविन्ना । स्त्री० कटुकायाम् ॥

मत्स्यवेधनम् । न० वडिशे ॥ विध्यतेनेन । विधविधाने । करणेतिल्युट् । मत्स्यानांवेधनम् ॥

मत्स्यवेधनी । स्त्री० मद्गुपक्षिणि ॥ वडिशे ॥

मत्स्यसन्तानिक : । पुं० मत्स्यव्यञ्जनविशेषे ॥ यथा । दग्धोङ्गारेसलवणोविसवारैरुपस्कृत: । साद्रंक : कटुतैलेनमत्स्यसन्तानिकोभवेत् ॥

मत्स्यसुता । स्त्री० उत्तरायाम् । परीक्षिन्मातरि ॥ सत्यवत्याम् ॥

मत्स्याक्षी । स्त्री० तोयपिप्पल्याम् ॥ सोमलतायाम् । ब्राह्म्याम् ॥ यथा ब्राह्मीवयस्थामत्स्याक्षीमीनाक्षीसोमवल्लरी । मत्स्याक्षीशिशिरारुच्या व्रणदोषचयापहा ॥ इतिराजनिघण्ट : ॥ गण्डदूर्वायाम् ॥ हिलमोचिकायाम् ॥ मत्स्यस्याक्षीवपुष्पमस्या : । मत्स्यशब्द : स्वाङ्गावयवेगौण : । बहुव्रीहाविति षच् । ङीष् ॥ मच्छेक्षी० इतिलोकप्रसिद्धौषधौ ॥ मत्स्याक्षीग्राहिणीशीताकुष्ठपित्तकफास्रजित् । लघुस्तिक्ताकषायाचस्वाद्वीकटुविपाकिनी ॥

मत्स्यात्खग : । पुं० मत्स्यान्अत्ति । अद० । क्विप् । मत्स्याद्चासौखगश्च ॥

मत्स्यादनी । स्त्री० लाङ्गल्याम् । तोयपिप्पल्याम् । मत्स्याक्ष्याम् ॥ मत्स्यैरद्यते । अद० । ल्युट् । क्विप् । ङीप् ॥

मत्स्याधानी । स्त्री० मत्स्यरक्षार्थपात्रे । कुवेण्याम् । खारयी० खालुइ० इ० गौ० देशभा० ॥ मत्स्याआधीयन्तेऽत्र । डुधाञ्० । करणाधिकरणयोरितिल्युट् ॥

मत्स्याशन: । पुं॰ मत्स्यरङ्कविहङ्गमे ॥

मत्स्योडरी । स्त्री॰ मत्स्यद्रव्यञ्जनान्तरे ॥ कासमर्दकचूर्णेनमत्स्यपिष्टिनियोजिता । भर्जिताकटुतैलेनमत्स्योडरीइतीरिता ॥

मत्स्योदरी । स्त्री॰ सत्यवत्याम् । व्यासमातरि ॥ काशीस्थतीर्थविशेषे ॥

मथन: । पुं॰ गणिकारिकायाम् ॥ न॰दध्यादिविलोडने । विलोडना॰ इ॰भा॰ ॥ मथति । मथविलोडने । ल्युट् ॥

मथितम् । न॰ निर्जलेसरोवर्जितेविलोडितेदधिनि ॥ सरोदकंविहीमन्तुमथितंकफपित्तनुत् । त्रि॰ आलोडिते ॥ घृष्टे । निघृष्टे ॥ मथ्यतेस्म । मथे॰ । क्त: ॥

मन्थ: । पुं॰ मन्थानदण्डे ॥ मथ्यतेऽनेन । मन्थविलोडने । मन्थइति॰ इनि: कित् । कित्त्वान्नलोप: ॥ मन्थामन्थानदण्डेचवज्रेवातेपिचस्मृत: ॥

मथुरा । स्त्री॰ मधुपुर्याम् । श्रीकृष्णजन्मभूमौ । मधुरायाम् ॥ मथति । मथे॰ । मन्दिवाशिमथिचतीच्युरच् ॥ मथुराचविलोमेनमध्यमोनेयदक्षरम् । योनस्मरतिलोकेस्मिंस्तन्मध्यंतन्मुखोपरि ॥

मथुरेश: । पुं॰ श्रीकृष्णे ॥

मथूरा । स्त्री॰ मथुरायाम् ॥

मद: । पुं॰ रेतसि ॥ कस्तूर्याम् ॥ गर्वे । अहङ्कारे ॥ विद्यामदोधनमदस्तथैवाभिजनोमद: । एतेमदामदान्धानांतएवहिसतांदमा: ॥ हर्षे । आमोदे ॥ इभदाने । गजगण्डजले । दाने ॥ यथा । करात्कटाभ्यांमेढ्राच्चनेत्राभ्यांचमदस्रुति: । करान्नासारन्ध्राभ्याम् ॥ मद्ये ॥ मादकद्रव्यसेवनजन्येविकारविशेषे ॥ क्षैव्ये । मत्ततायाम् ॥ यथा । स्वामदात्प्रकृतिमेतिहिसर्व: इतिस्वाभाविकधर्म्मप्रकाशनंमदधर्म्म: उत्कर्षरहितस्वेप्युत्कर्षविशेषाध्यारोपे ॥ अशास्त्रीयविषयसेवनोन्मुखत्वे ॥ मदनम्॰ माद्यत्यनेनवा । मदीहर्षे । मदोऽनुपसर्गइत्यप् ॥ मदयतिवा । अच् ॥ नदे ॥ कल्याणवस्तुनि ॥ इतिधरणि: ॥ बुद्धेर्मोह: समभवदहङ्कागदभून्मद: । तस्यलक्षणं यथा । अहंमहात्माधनवान्मत्तुल्य: कोस्तिभूतले । इतियज्जायतेचित्तेमद: प्रोक्त: सकोविदै: ॥

मदक: । पुं॰ मध्वासवे ॥

मदकट: । पुं॰ षण्डे । गोपतौ ॥

मदकर: । पुं॰ आनन्दजनके ॥

मदकल : । पुं० अन्तर्मदगजे । मदोत्कटे ॥ त्रि० मदेनव्यक्तवचने ॥ मदेनकलते । कलशब्दसङ्ख्यानयोः । अच् ॥ मदेसति० कलोध्वनिर्यस्येतिवा ॥

मदगन्ध : । पुं० सप्तच्छदवृक्षे ॥ मदसदृशोगन्धोस्य ॥

मदगन्धा । स्त्री० सुरायाम् ॥ अतस्याम् ॥

मदगमना स्त्री० महिष्याम् ॥

मदघ्नी । स्त्री० पूतिकायाम् ॥

मदच्युत् । पुं० अमृतरसच्यावयितरि० अमृतरूपेसोमे ॥ मदं मदकरमानन्दकरं रसममृतरूपं च्यावयत्यसौमदच्युत् ॥

मदन : । पुं० मन्मथे । कामदेवे ॥ वसन्ते ॥ धूस्तूरे ॥ पीण्डीतकें । मरुवके । श्वसने । मयनफलइतिभाषा ॥ मदनोमधुरस्तिक्तोवीर्योष्णोलेखनोलघुः । वातकृद्विद्रधिहरः प्रतिश्यायव्रणान्तकः ॥ रूक्षः कुष्ठकफानाहशोथगुल्मव्रणापहः ॥ सिक्थके । मधूच्छिष्टे । मैण० मोम० इतिचभाषा ॥ मदनं मृदुसुस्निग्धं भूतघ्नं व्रणरोपणम् । भग्नसन्धानकृद्वातकुष्टवीसर्परक्तजित् ॥ माषे ॥ खदिरे ॥ लग्नात्सप्तमभवने ॥ आलिङ्गनविशेषे ॥ तत्स्वरूपं यथा । नायकोनायिकायाः कण्ठे हस्तं दत्त्वा० द्वितीयहस्तंतस्या मध्यदेशेदत्त्वायदाश्लिषति० इति कामशास्त्रम् ॥ मदयति मदीहर्षग्लेपनयोः । ल्युः ॥ न० जले ॥

मदनकाकुरव : । पुं० पारावते ॥

मदनगृहम् । न० लग्नात्सप्तमगृहे ॥ मात्रावृत्तप्रभेदे ॥ यथा । प्रथमं कुरुषट्कलमन्ते कुण्डलमिहमध्ये वसुतुरगधरं सन्तापहरम्० दशवसुभुवनाष्टभिरत्रचरणमभिभवतिविरामोयदिललितं कविवलयहितम् फणिनायकभणितं जगणविरहितं चत्वारिंशत्कलकलितं भुवनेमहितम्० वृत्तं रसनिवहं तन्मदनगृहं नरपतिसंसदिलब्धपदं गुरुशोकगदम् ॥ यथा । विरहानलतप्तासीदतिसुप्तारचितनलिनदलतल्पतले मरकतविमले० करकलितकपोलं गलितनिचोलं नयततिसततरुदिते ननिशामनिमेषदृशा । नसखीमभिनन्दतिरुजमनुबिन्दतिनिन्दतिहिमकरकरनिकरं परितापकरम्० मनुतेहृदिभारं मुक्ताहारं दिवसनिशाकरदीनमुखी जीवितविमुखी ॥

मदनगोपाल : । पुं० श्रीकृष्णे ॥

मदनचतुर्दशी । स्त्री० चैत्रशुक्लचतुर्दश्याम् ॥

मदनत्रयोदशी । स्त्री० चैत्रशुक्लत्रयो-

दश्याम् ॥
मदनद्वादशी । स्त्री० चैत्रशुक्लद्वादश्याम् ॥
मदनपाठकः । पुं० कोकिले ॥
मदनभवनम् । न० लग्नात्सप्तमस्थाने ॥
मदनमोहनः । पुं० श्रीकृष्णे ॥
मदनरसः । पुं० शृङ्गारे ॥
मदनललिता । स्त्री० अष्टिसंज्ञकच्छन्दः १६ प्रभेदे ॥ म्भौनोम्नौगोमदनललिताविदैः षड्ऋतुभिः । यथा । विभ्रष्टस्रग्गलितचिकुराधौताधरपुटा०म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला । राधात्यर्थंमदनललितान्दोलाऽलसवपुः कंसारातेरतिरसमहोचक्रेऽतिचटुलम् ॥
मदनलवः । पुं० अल्पांशे ॥ मदनस्य लवः ॥
मदनशलाका । स्त्री० कामोद्दीपकभैषज्ये ॥ सारिकायाम् ॥ कोकिलायाम् ॥
मदनसारिका । स्त्री० पक्षिप्रभेदे । सारिकायाम् । चित्रलोचनायाम् । सालिक० इ० गौ० भा०
मदना । स्त्री० सुरायाम् ॥
मदनायकः । पुं० कोद्रवे ॥
मदनाङ्कुशः । पुं० नखे ॥ लिङ्गे ॥
मदनाडी । स्त्री० गजदानशिरायाम् ॥ ताश्चसप्तयथाहपालः । करात्कटाभ्यांमेढ्राच्चनेत्राभ्याञ्चमदच्युतिरिति ॥
मदनायुधः । पुं० भगे ॥ योनौ ॥
मदनायुषः । पुं० कामवृद्धिक्षुपे ॥
मदनालयः । पुं० कुसुमधनुषोमन्दिरे । स्मरागारे । भगे ॥ मदनभवने ॥
मदनावस्था । स्त्री० उद्वेगरूपायांकामावस्थायाम् ॥ कथंतस्यालाभोभविष्यतीति ॥
मदनी । स्त्री० सुरायाम् ॥ कस्तूर्याम् ॥ अतिमुक्तके ॥
मदनीयः । त्रि० मदकारिणि । मदयति । मदी० । कृत्यल्युटोबहुलमितिकर्त्तरि अनीयर् ॥
मदनीया । स्त्री० धातक्याम् ॥
मदनेच्छाफलः । पुं० वहरसाले ॥
मदनोत्सवः । पुं० सुवसन्तके । होलाकायाम् । होली० इ० भा० ॥
मदनोत्सवा । स्त्री० स्वर्गवेश्यायाम् ॥
मदप्रयोगः । पुं० करिणांमदोद्गमे । व्यस्तारे ॥
मदनभञ्जनी । स्त्री० शतमूल्याम् ॥
मदमूढबुद्धिः । त्रि० मदेनविपरीतप्रवृत्ते ॥ मदमूढबुद्धिषुविवेकिताकृतः ॥
मदयन्तिका । स्त्री० मल्ल्याम् ॥
मदयन्ती । स्त्री० मल्ल्याम् ॥ वनमल्लिकायां ॥

मदयिता । त्रि० मादके ॥ मदयति । मदी० । लट : शदे ॥

मदयित्नु : । पुं० कामदेवे ॥ शौण्डिके ॥ मेघे ॥ न० मद्ये ॥ मदयति । हर्षयति० ग्लेपयतिवा । मदी० । स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुजिति० इत्नुच् । णेरयादेश : ॥

मदलेखा । स्त्री० उष्णिक् ७ छन्द : प्रभेदे ॥ मसगा : स्यान्मदलेखा । यथा । रङ्गे बाहुविलग्नाहन्तीन्द्रान्मदलेखा । लग्नाभून्मुरशत्रौकस्तूरीरसचर्चा ॥

मदविक्षिप्त : । पुं० मत्तहस्तिनि ॥

मदव्यायाम : । पुं० मदाधिक्ये ॥

मदशाक : । पुं० उपोदक्याम् ॥

मदसार : । पुं० तूदवृक्षे । ब्रह्मकाष्ठे ॥

मदस्थलम् । न० )
मदस्थानम् । न० )मद्यपानस्थले । शुण्डायाम् । पानगृहे ॥

मदहस्तिनी । स्त्री० महाकरञ्जे ॥

मदहेतु : । पुं० धातक्याम् ॥ मदस्यकारणे ॥

मदाढ्य : । पुं० तालवृक्षे ॥ त्रि० मदयुक्ते ॥

मदाढ्या । स्त्री० लोहितझिण्ट्याम् ॥

मदातङ्क : । पुं० मदात्ययरोगे ॥

मदात्यय : । पुं० मद्यपानजन्यरोगविशेषे । पानात्यये । मदव्याधौ ॥ निदानानितु । विषस्यये गुणाद्दष्टा : सन्निपातप्रकोपणा : । तएवमद्येदृश्यन्ते विषे तुवलवत्तरा : ॥ तस्मादविधिपीतेनतथामात्राधिकेनच । युक्तेनचाहितैरन्नै रकालेसेवितेनच । मद्येनखलुजायन्ते मदात्ययमुखागदा : ॥ अविधिप्रयुक्तंमद्यंविकारान्तरमप्युत्पादयतीत्याह । निर्भुक्तएकान्ततएवमद्यं निषेव्यमाणं मनुजेनित्यम् । उत्पादयेत्कष्टतमान् विकारानुत्पादयेच्चापिशरीरभेदम् ॥ किञ्चान्तरमप्याह । क्रुद्धेनभीतेनपिपासितेनशोकाभितप्तेनबुभुक्षितेन । व्यायामभाराध्वपरिक्षतेनवेगावरोधाभिहितेनवापि॥ अत्यम्लरूक्षावततोदरेणसाजीर्णभुक्तेनतथाऽबलेन । उष्णाभितप्तेनच सेव्यमानं करोतिमद्यं विविधान्विकारान् ॥ तेचविकाराग्रन्थान्तरेज्ञातव्या : ॥ चिकित्सातु । मद्योत्थानान्तुरोगाणांमद्यमेवहिभेषजम् । यथादहनदग्धानांदहनं स्वेदनं हितम् ॥ मिथ्याविहितमद्येनयोव्याधिरुपजायते । मद्येनैवनिपीतेनमद्येनसहशाम्यति ॥ विशेषोन्यत्रद्रष्टव्य : ॥

मदामद : । पुं० परमेश्वरे ॥ आत्मनि ॥ आत्माहिसमदोऽमदश्च० सहर्षोऽहर्षश्च० विरुद्धधर्मवानतोदेशि

कोपदेशं विनाऽशक्योज्ञातुम् ॥
मदाम्नात :। पुं० गजढक्कायाम् । ह्रा थोपरकाडक्का० इ० भा० ॥
मदाम्बर :। पुं० मत्तहस्तिनि ॥
मदायुधः। पुं० चतुर्दन्ते। ऐरावते॥
मदारः। पुं० द्विरदे। हस्तिनि॥ शूकरे॥ धूर्ते॥ कामुके॥ मत्तहस्तिनि। गन्धभेदे॥ नृपान्तरे॥ माद्यति। मदी०। अगिमदिमन्दिभ्यआरन्॥ वस्त्रनविशेषे॥
मदामर्द :। पुं० मल्लभेदे। राजगीवे॥
मदालसा। स्त्री० मार्कण्डेयपुराणप्रसिद्धायामृगन्धर्वकन्यायाम्॥ययापुत्त्रस्तारित :॥
मदालापी। पुं० कोकिले॥
मदाश्रय :। त्रि० मदैकशरणे॥
मदाह्वय :। पुं० कस्तूर्याम्॥
मदिर :। पुं० रक्तखदिरे॥ मदयति। मदि०। किरच्॥
मदिरा। स्त्री० मादकद्रव्यविशेषे। सुरायाम्। हलिप्रियायाम्। वरुणात्मजायाम्। गन्धोत्तमायाम्। प्रसन्नायाम्। कादम्बर्याम्। इरायाम्। मद्ये। सुप्रतिभायाम्। मोदिन्याम्। महानन्दायाम्। मैरेये। देवसृष्टायाम्। अब्धिजायाम्। द्वादशविधेयं यथा। माध्वीकंपानसंद्राक्षंखार्जूरंतालमैक्षवम्। मैरेयंमाक्षिकंटाङ्कंमधूकंनारकेलजम्॥ मुख्यमन्नप्रकारोत्थंमद्यानिद्वादशैवच॥ ऋतुविशेषेपेयमदिरायथा। गौडीतुशिशिरेपेया० पैष्टीहेमन्तवर्षयो :। शरद्ग्रीष्मवसन्तेषुमाध्वीग्राह्यानचान्यथा॥ कादम्बरीशर्करजादिमद्यंसुशीतलंवृष्यकरंमदाढ्यम्। माध्वीसमंस्यात्तुतथेक्षुजातंमद्यंसुशीतंगुरुतर्पणञ्च॥ अन्यथाकुरुतेपानंमद्यंसन्तापशोषदम्। अन्नदोषमदात्याद्विकारकंमूर्च्छनञ्चतत्॥ नवजीर्णमद्ययोर्गुणास्तु। मद्यंनवंसर्वविकारहेतुसर्वन्तुवातादिकदोषदायि। जीर्णंतुसर्वंसकलामयघ्नंघ्राणप्रदंवृष्यकरञ्चदीपनम्॥ मद्यप्रयोगंकुर्वन्तिशूद्रादिषुमहात्तिषु। द्विजैस्त्रिभिस्तुनग्राह्यंयद्यप्युज्जीवयेन्मृतम्॥ गौडीपैष्टीत थामाध्वीत्रिविधाचोत्तमासुरा। सैवनानाविधाप्रोक्तातालखर्जूररसम्भवा। तथादेशविभेदेननानाद्रव्यविभेदत :। बहुधेयंसमाख्याताप्रशस्तादेवतार्चने॥ अन्येद्वादशधामद्यभेदानाहुर्मनीषिणः। उक्तस्यान्तर्भवन्तीतिनान्येषांपृथगीरितम्॥ प्रायशोभिनवंमद्यंगुरुदोषलमीरितम्। स्रोतसांशोधनंजीर्णंदीपनंलघुरोचनम्।

हर्षणं प्रीणनं बल्यं मद्यं शोकश्रमापहम् । प्रागल्भ्यप्रतिभापुष्टिवीर्यतुष्टिस्वरप्रदम् ॥ अपिच । सम्यग्विधिविधानेनसुसमाहितचेतसा । पिबन्तिमदिरांमर्त्याअमर्त्याएवते चिती ॥ आकृतिच्छन्दः २२ प्रभेदे ॥ यथा । सप्तभकारयुतैक गुरुर्गदितेयमुदारतरामदिरा । यथा । माधवमासिविकस्वरकेशर पुष्पलसन्मदिरामुदितैर्भृङ्गकुलैरु पगीतवनेवनमालिनमालिकलानि लयम् । कुञ्जगृहोदरपल्लवकल्पित तल्पमनल्पमनोजरसं त्वंभजमाध विकामृदुनर्त्तनयामुनवातकृतोप गमा ॥ मादात्यनया । मदीहर्षे । इषिमदिमुदीत्यादिनाकिरच् ॥ मत्तखञ्जने ॥

मदिराक्षी । स्त्री० मत्तनेत्रायाम् ॥ मदिरावदक्षिणीयस्याः सा । यथा । अविदितसुखदुःखं निर्गुणं वस्तु किञ्चिज्जडमतिरिहकश्चिन्मोक्षइ त्याचचक्षे । ममतुमतमनङ्गस्मे रतारल्यघूर्णन्मदकलमदिराक्षीनी विमोक्षोहिमोक्षः ॥ इतिविटोक्तिः ॥

मदिरागृहम् । न० गञ्जायाम् । मद्य संधानगृहे ॥ मदिरायाः गृहम् ॥

मदिरासखः । पुं० आम्रवृक्षे ॥

मदिष्ठा । स्त्री० मदिरायाम् ॥

मदी । स्त्री० चषकवस्तुनि ॥ कृष्यङ्गे ॥

मदीयम् । त्रि० मदकरे । हर्षोत्पादके । मदीयं सरः इतिवेदेदर्शनात् ॥ मामके ॥ ममेदम् । छः । मपर्यन्तस्यमादेशः ॥

मदोत्कटः । पुं० अन्तर्मदेहस्तिनि । मदकले ॥ मदेनदानेनाम्बुना० उत्कटः मत्तः ॥ त्रि० मदमत्ते ॥

मदोत्कटा । स्त्री० मदिरायाम् ॥ मदेनोन्मत्तायाम् ॥ मदेनउत्कटा ॥

मदोदग्रः । त्रि० मदोन्मत्ते ॥

मदोदया । स्त्री० नार्याम् ॥

मद्गतप्राणः । त्रि० मद्गजनार्थजीवने ॥ मद्गताः प्राणायस्य ॥

मदोद्धतः । त्रि० मत्ते ॥ मदः पौरुषादिधर्मः तेनउद्धतः ॥

मद्गुः । पुं० कारण्डवे ॥ जलकाके ॥ मज्जति । टुमस्जोशुद्धौ । भृमृशीत्यु । न्यङ्क्वादित्वात्कुत्वम् । सस्यजश्त्वेनदः ॥ ब्राह्मणेनवन्दिभार्यायांजनिते ॥

मद्गुरः । पुं० मगुरी० मागुर० इ० ख्यातेमत्स्ये ॥ मज्जति । टुमस्जो० । मद्गुरादयश्चेतिनिपातितः ॥ यद्वा । माद्यति । मदी० । मद्गुराद यश्चेत्युरच्० धातोर्गुरादेशः ॥ मद्गुरोवातहृद्वृष्योबल्यः कफकरोलघुः ॥ मद्गुरः खण्डरहितः कटुतैलेसुभर्जितः । मणिमन्थनिशायुक्तोहिङ्गुनाधूपितेरसः । मद्गुरो-

वातहापथ्योरुच्योहृष्योबलः प्रदः । अग्निसञ्जननोहृद्यस्तद्दुक्ताचशृङ्गिका ॥
मद्गुरकः । पुं० मद्गुरमीने ॥
मद्गुरसी । स्त्री० शृङ्ग्याम् ॥
मद्गताः । त्रि० प्रेमणामय्यनुरक्ते ॥
मद्यम् । न० सुरायाम् ॥ माद्यन्त्यनेन । मदी० गदमदचरेत्यादिनायत् ॥ अस्यलक्षणादि यथा । मेयंयन्मादकंलोकेस्तन्मद्यमभिधीयते। यथारिष्टंसुरासीधुरासवाद्यमनेकधा ॥ गौडीपैष्टीतथामाध्वीचिविधाचोत्तमासुरा। सैवनानाविधाप्रोक्ता तालखर्जूरसम्भवा ॥ तथादेशविभेदेननानाद्रव्यविभेदतः । बहुधेयंसमाख्याताप्रशस्तादेवतार्चने ॥ तद्द्वादशविधंयथाहपुलस्त्यः । पानसद्राक्षमाधूकंखार्जूरंतालमैक्षवम् । माध्वीकंटाङ्कमार्द्वीकमैरेयंनारिकेलिजम् ॥ समानानिद्विजातीनांमद्यान्येकादशैवतु । द्वादशन्तुसुरामद्यंसर्वेषामधमंस्मृतम् ॥ मद्यं सर्वंभवेदुष्णंपित्तकृद्वातनाशनम् । भेदनंशीघ्रपाकञ्चरूक्षंकफहरंपरम् ॥ अम्लञ्चदीपनंरुच्यंपाचनंवासकारिच । तीक्ष्णंसूक्ष्मञ्चविशदंव्यवायिचविकाशिच ॥ मद्यंनवमभिष्यन्दि त्रिदोषजनकंसरम् । अहृद्यंबृंहणं दाहिदुर्गन्धंविशदंगुरु ॥ जीर्णंतदेवरोचिष्णुक्रिमिश्लेष्मानिलापहम् । हृद्यंसुगन्धिगुणवल्लघुस्रोतोविशोधनम् ॥ सात्त्विकादिविभेदेनचेष्टाद्यामनीषिभिः । तैर्भेदास्तु। पर्याया वाग्भवेन्मद्यंतामसंराक्षसप्रियम् । मण्डलावाद्याजसंततृतदूर्द्धं सात्त्विकंभवेत् ॥ सात्त्विकेगीतहास्यादिराजसेसाहसादिकम् । तामसेनिन्द्यकर्माणिनिद्राञ्चमदिराचरेत् ॥ विधिनामात्रयाकालेहितैरन्नैर्यथाबलम् । प्रहृष्टोयः पिवेन्मद्यंतस्यस्यादमृतंयथा ॥ किन्तुमद्यंस्वभावेनयथैवान्नंतथास्मृतम् । अयुक्तियुक्तं रागाययुक्तियुक्तंयथामृतम् ॥ मद्यगन्धस्यनाशायउपायोयमुदीर्यते । मुस्तैलवालगदजीरकधान्यकैलायश्चर्वयन्सदसिवाचमभिव्यनक्ति। स्वाभाविकंमुखजमुग्रमतिपूतिगन्धंगन्धञ्चमद्यलशुनादिभवंचनूनम् ॥ * ॥ नालिकेरोदकंकांस्येताम्रपात्रेस्थितंमधु । गव्यञ्चताम्रपात्रस्थंमद्यतुल्यंघृतंविनेतिकर्मलोचनम् ॥
मद्यगन्धः । पुं० बकुलद्रुमे ॥
मद्यद्रुमः । पुं० माडे । ध्वजवृक्षे । वितानके ।
मद्यपः । त्रि० सुरापे ॥ सुराव्यतिरिक्तमद्यपातरि ॥
मद्यपङ्कः । पुं० सुराकल्के । मेदके ॥ जंगले । मेया० इ० गौ० दे० भा० ॥

मद्यपाचनी । स्त्री० धातक्याम् ॥

मद्यपाशनम् । न० उपदंशे । अवदंशे । चचर्णे । पानरोचकभक्ष्ये ॥

मद्यपुष्पी । स्त्री० धातक्याम् ॥

मद्यमण्डः । पुं० सुराग्रभागे । मद्यफेने । कारोत्तरे ॥

मद्यवासिनी । स्त्री० धातकीवृक्षे ॥

मद्यबीजम् । न० नानाद्रव्यकृतसुराबीजे । किण्वे । नग्नहि । वाखर० इ० गौ० दे० भा० ॥ मद्यस्यबीजम् ॥

मद्यसन्धानम् । न० अभिषवे । आसुतौ । मद्यस्य भावना० इ० भा० ॥

मद्याजी । त्रि० मत्पूजापरे ॥ मांयष्टुं शीलं यस्य । णिनिः ॥

मद्यामोदः । पुं० वकुलवृक्षे ॥ मद्यस्येवामोदोऽस्मिन् ॥

मद्योगः । त्रि० मदेकशरणे । मयि सर्वकर्मसमर्पणे ॥

मद्रः । पुं० हर्षे ॥ देशविशेषे ॥ वैराटपाण्ड्योर्मध्ये पूर्वदक्षक्रमेण तु मद्रदेशः समाख्यातो माद्री हा तत्र तिष्ठति ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । स्फायितञ्चीतिरक् ॥

मद्रकः । त्रि० मद्रदेशभवे ॥ मद्रेषु जातः । कन् ॥

मद्रकारः । पुं० मद्रङ्करे ॥ मद्रं करोति । डुकृञ् । क्षेमप्रियमद्रेण् चेतिअण् ॥

मद्रङ्करः । त्रि० क्षेमङ्करे । शङ्करे ॥ मद्रं करोति । डुकृञ् । क्षेमप्रियमद्रेण् चेतिखच् ॥

मद्रसुता । स्त्री० माद्र्याम् । नकुलसहदेवयोर्जनन्यां पाण्डुपत्न्याम् ॥

मद्वान् । पुं० विधौ० । वायसे ॥

मद्वती । स्त्री० शिवायां ॥

मद्वा । पुं० शिवे ॥ माद्यति । मदी० । स्नामदीत्यादिनावनिप् ॥ राजवत्० रूपाणि ॥

मद्वरी । स्त्री० सुरायाम् ॥ माद्यत्यनया । मदी० । वनिप् । वनोरचेति ङीब्री ॥

मद्गीणः । त्रि० }
मद्गीयः । त्रि० } मद्गसम्बन्धि-
मद्ग्यः । त्रि० } नि ॥ शैषिकेष्व

र्थेषु० अशब्दे यत्खावन्यतरस्यामित्यनेनक्रमात्० खछयत्प्रत्ययाः ॥

मधु पुं० मधुद्रुमे । मधूके मधुवा० इ० भा० ॥ वसन्तर्त्तौ ॥ दैत्यविशेषे ॥ यं हत्वा० विष्णुर्मधुसूदनोऽभूत् ॥ चैत्रेमासि ॥ जीवाशोके ॥ असुरविशेषे ॥ सचशत्रुघ्नेन हतः । यस्य नाम्ना मथुरा० मधुपुरीति ख्यातिंगता ॥ मधुयष्ट्याम् ॥ न० क्षीरे ॥ जले । मद्ये ॥ मधुररसे ॥ दुग्धे ॥ वर्णवृत्तान्तरे ॥ यथा । द्वयमपि । लघुमधु ॥ यथा । रतिमथ । वरतनु ॥ कर्मफले ॥मन्यन्ते-

तिरविजोधरणीसुतोवामूलर्क्षहस्त-
मघरेवतिमेचभेषु । कचोपभङ्गप
तनानिवसेनिकानांसर्वचलोकम
रणंजलधौतदेश : ॥ ( ० # ० )
मांसास्थीनिसमादायश्मशानाद्गृह
वायसा : । श्वाभृगालोथवामध्ये
पुरस्यप्रविशन्तिचेत् ॥ विकिर
न्तिगृहादौचश्मशानंसामहीभवेत्
। चोरेणहन्यतेलोक : परचक्रस
मागम : ॥ सङ्ग्रामश्चमहाघोरो
दुर्भिक्षंमरकंतथा । अङ्गुतानि
प्रसूयन्ते तस्यदेशस्यविद्रव : ॥ दे
वीमाहात्म्यपाठेनभैरवस्यस्तवेनच
। अवशान्तिर्भवेन्नूनंतुलस्याविष्णु
पूजनात् ॥

मरकतम् । न० हरिद्वर्णमणिवि-
शेषे । गारुत्मते । अश्मगर्भे-
। हरिन्मणौ । पन्ना० इ० सा
धारणलोकभाषाप्रसिद्धे ॥ अस्य
लक्षणंयथा ॥ स्वच्छस्वच्छायंस्नि
ग्धंगात्रश्चमार्दवसमेतम् । अव्य
ङ्गंबहुरङ्गंशृंगारीमरकतंशुभंबिभृ
यात् ॥ कुलक्षणंयथा । शर्करि
लकलिलरुक्षंमलिनंलघुहीनकान्ति
कल्माषम् । त्रासयुतंविकृताङ्गं
मरकतममरोपिनोपभुञ्जीत ॥ प
रीक्षादिकन्त्वन्यत्रद्रष्टव्यम् ॥ म
रकांतरन्त्वनेन । तु० । अ-
न्ये त्वपीतिह : ॥

मरकतपत्रिका । स्त्री० )
मरकतपत्री । स्त्री० पाच्याम् ॥
मरकम् । न० मरकतमणौ ॥
मरणम् । न० वत्सनाभविषे ॥ प-
ञ्चतायाम् । कालधर्मे । दिष्टा
न्ते । निधने । मृत्यौ ॥ मर
णंचेच्छयाकामंदु : खितोपिनवा
छति । रोगग्रस्तोपिदीनोपिन-
मुमूर्षतिकश्चनेतिभागवतम् ॥ अ-
पिच । मरणमृषिभि : प्रोक्तंसङ्ग
रैमङ्गलास्पदम् । यत्ततत्समान
बलयोर्योधयोर्युध्यतो : क्विति ॥
अनुष्ठानासमर्थस्यवानप्रस्थस्यजीर्य
त : । भृग्वग्निजलसम्पातैर्मरण
म्प्रविधीयते ॥ न्यायमतेन० वि
जातीयात्मन : संयोगध्वंसे ॥
उपात्तानांपूर्वासांनिकायविशिष्टा-
नांदेहेन्द्रियमनोबुद्ध्यहङ्कारवृत्तिवेद
नानांपरित्यागे ॥ नत्वात्मनोपि
नाश : तस्यकूटत्वात् ॥ मरणं-
प्राणविच्छेदोनतुनाश : सतोम
त : । मृत्प्राणत्यागदृत्युक्तंस्व
यंनष्ट : कथंत्यजेत् ॥ मृङ्गोल्युट्
॥ लग्नाष्टमभवने ॥

मरत : । पुं० मरणे ॥ म्रियते ।
मृङ्प्राणत्यागे । भृमृदृशियजिप
र्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥
मरन्द : । पुं० )
मरन्दक : पुं० ) मकरन्दे ॥

मरहट्टा । पुं॰ मात्रावृत्तप्रभेदे ॥ यथा । आदौकुरुषट्कलमथचतुष्कलप्रथानन्दमितोपि॰द्रयवखे आदश भवतिवशमधिकशुचामवलोपि । विंशतिनवसङ्ख्यंभणितसुमुख्यंनन्दितगुणगणकोटिमरहट्टावृत्तंकिलजयकृतृतेकृतरिपुविनतकरोटि ॥ यथा । अभिमतधनदातासिद्धिविधाताजगदन्तरगतशील॰दुरितद्रुमदाशीविश्वविगाशीकल्पचयकृतखेल॰भुवनत्रयवंदितहरशिरसिस्थिरवास॰दहहुतत्रयशापंदेहिदुरापंथ मुद्दततिमिरविलास ॥

मराकालौ । स्त्री॰ हस्तिकाख्याम् ॥

मराल: । पुं॰ राजहंसे ॥ कारण्डवे ॥ कज्जले ॥ वारिवाहे ॥ तुरङ्गमे ॥ दाडिमीविपिने ॥ त्रि॰ खले ॥ त्रि॰ मसृणे ॥

मरालक: । पुं॰ कलहंसे ॥

मरिचम् । न॰ कोलके । कृष्णे । ऊषणे । धर्म्मपत्तने । कालीमिरच॰ इतिभाषा॰ ॥ मरिचंकटुकंतीक्ष्णंदीपनंकफवातजित् । उष्णंपित्तहरंरूक्षंश्वासशूलकृमीन्हरेत् ॥ तदार्द्रंमधुरंपाकेनात्युष्णंकटुकंगुरु । किञ्चित्तीक्ष्णगुणंश्लेष्मप्रसेकिस्यादपित्तलम् ॥ म्रियतेविषमनेन । मृङ्प्राणत्यागे । बाहुलकादिच: ॥ कक्कोले ॥ पुं॰ मरुबकवृत्ते ॥

मरिचपत्रक: । पुं॰ अजकर्णे । सालतरो: प्रभेदे ॥

मरिमा । पुं॰ मृत्यौ ॥ म्रियते । मृङ्॰ । जनिमृङ्भ्यामिमनिच् ॥

मरिष्यमाण: । त्रि॰ आसन्नमरणे ॥

मरीचम् । न॰ वेल्लजे । मरिचे । कृष्णमरिच॰ इ॰ भा॰ ॥ म्रियतेविषमनेन । मृङ्॰ । बाहुलकादीच: ॥

मरीचि: । पुं॰ ब्रह्मणोज्येष्ठमानसपुत्रे॰ मुनिविशेषे ॥ प्रजापतौ ॥ मरुतांमध्येभगवद्विभूतौ ॥ पुं॰ स्त्री॰ चन्द्रसूर्ययो: किरणे । गभस्तौ ॥ षट्त्रसरेणुपरिमाणे॰ इति वैद्या: । म्रियतेतमोऽस्मिन् । मृकणिभ्यामीचि: ॥ त्रि॰ कृपणे ॥

मरीचिका । स्त्री॰ मृगतृष्णायाम् ॥ ग्रीष्मे मरुदेशसिकताद्यावर्क्ककरा: प्रतिफलिता: दूरस्थानांजलत्वेनाभांति॰तद्याचिकामृगतृष्णिकेति॰ टीकाकार: ॥ मरीचिरिव । इवेप्रतिकृताविति कन् ॥

मरीचिप: । पुं॰ तपोविशेषाल्लब्धेतिसंज्ञेतापसान्तरे ॥ चद्रिकापायिनि ॥

मरु: । पुं॰ गिरौ । पर्वते ॥ धन्वनि । दशेरके । निरुदकदेशे । मारवाड॰ इ॰ भाषा ॥ गुर्जरात्पूर्वभागेतुद्वारिकातोहिदिग्विषे । म

रुदेशीमहेशानिवष्ट्रोत्पत्तिपरायणः ।। स्नियन्तेप्राणिनोऽत्र । मृङ् । भ्रमश्रीच्थ् : ॥ मरुवकवृत्ते ॥ सूर्यवंशीयभाविनृपविशेषे ॥

मरुक : । पुं० मृगविशेषे ॥ मयूरे ॥

मरुकान्तारम् । न० रामबाणेनशोषितेदेशविशेषे ॥ आफ्रिका० इ० इङ्ग्ज भा० ॥

मरुज : । पुं० नखीनामगन्धद्रव्ये व्याघ्रनखाख्ये ॥ त्रि० मरुदेशजाते ॥

मरुजा । स्त्री० मृगेर्वारौ ॥

मरुट । स्त्री० )

मरुण्डा । स्त्री० )उच्चललाटायामस्त्रियाम् ॥

मरुत् । पुं० समीरे । वायौ ॥ म्रियंतेऽनेन० हन्नेन० विनावा । मृङ् । मृग्रोरुति : ॥ देवे । सुरे ॥ सप्तसप्तकेगणे ॥ मरुवके ॥ न० ग्रन्थिपर्णे ॥ स्त्री० पृक्कायाम् ॥ मरुदग्निप्रदोहृद्यस्तिक्तोष्णा : पित्तलोलघु : । हस्तिकादिविषश्लेष्मवातकुष्ठकृमिप्रणुत् ॥

मरुत : । पुं० वायौ ॥ अव्युत्पन्नोयम् । मरुत : स्पर्शन : प्राणइतिविक्रमादित्यादिकोषात् । कोयंवातिसदाक्षिणात्यमरुतइतिकविराज : ॥ घण्टापाटलिवृत्ते ॥

मरुत्कर : । पुं० राजमाषे ॥

मरुत्त : । त्रि० वायुविशिष्टे । मरुत : सन्त्यत्र । तप्पर्वमरुद्भ्यामितितप् ॥ चन्द्रवंशीयनृपविशेषे ॥

मरुत्तक : । पुं० मरुवके ॥

मरुत्पथ : । पुं० आकाशे ॥

मरुत्पुत्र : । पुं० हनुमति ॥ भीमसेने ॥ मरुत : वायो : पुत्र : ॥

मरुत्प्लव : । पुं० कण्ठीरवे । सिंहे ॥

मरुत्फलम् । न० घनोपले ॥

मरुत्वान् । पुं० इन्द्रे । शचीपतौ ॥ मरुतोदेवतो : सन्त्यस्य । मतुप् । झयइतिवत्वम् । तसौमत्वर्थइतिभत्वाज्जश्त्वाभाव : ॥

मरुत्वतीयम् । न० मरुत्वत्ये हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति-गृहमेधाच्छचेति० छ० :॥

मरुत्वत्यम् । न० मरुत्वतीये० हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीत्यत्रस्यचकारात्०यत् ॥

मरुत्सख : । पुं० इन्द्रे ॥ अग्नौ ॥

मरुदान्दोल : । पुं० धवित्रे ॥

मरुदिष्ट : । पुं० गुग्गुलौ ॥

मरुद्गण : । पुं० आवहप्रवाहादिवायुसमूहे ॥

मरुद्द्रुमम् । न० वाततूले । ग्रीष्महासे । बुढियाकोसूत० इ० भा० ॥

मरुद्भवा । स्त्री० ताम्रमूलाक्षुपे । खिराइ इ० गौ० दे० भा० ॥

मरुद्रथः । पुं० अश्वे । देवरथे ॥
मरुद्रुमः । पुं० विट्खदिरे । अरिमेदे ॥
मरुद्वर्त्म । न० आकाशे ॥
मरुद्वाहः । पुं० धूमे ॥ वह्नौ ॥
मरुद्विपः । पुं० उष्ट्रे ॥
मरुन्माला, स्त्री० पृक्कायाम् ॥ मरुद्भिर्मल्यते । मलधारणे । घञ् ॥
मरुप्रियः । पुं० उष्ट्रे ॥ मरुदेशविशेषः प्रियोऽस्य ॥
मरुभूः । स्त्री० दशेरकेमारवाड०-इ० प्र० ॥ निर्जलदेशे ॥
मरुभूरुहः । पुं० करीरवृक्षे ॥
मरुलः । पुं० कारण्डवपक्षिणि ॥
मरुला । स्त्री० केरलदेशप्रसिद्धायां नद्याम् ॥
मरुवः । पुं० मरुवके ॥
मरुवकः । पुं० समीरणे । प्रस्थपुष्पे । फणिज्झके मरुवा० इ० भा०-प्र०पुष्पे ॥ पिण्डीतके । श्वसने । करहाटके । मदनद्रुमे । मयनफल इ० भाषा ॥ मरुं वाति । वा० । कृन्शिल्पिसंज्ञयोः ॥ व्याघ्रे ॥ राहौ ॥ खरपत्रे । नागदौना० इ० गौ० दे० भा० प्र० क्षुपविशेषे ॥ त्रि० भयानके ॥
मरुसम्भवम् । न० चाणक्यमूलके ॥
मरुसम्भवा । स्त्री० महेन्द्रवारुण्याम् ॥ क्षुद्रदुरालभायाम् ॥
मरुस्था । स्त्री० क्षुद्रदुरालभायाम् ॥
मरूकः । पुं० मृगविशेषे ॥ मयूरे ॥ मर्त्ये ॥ मारयति० म्रियतेवा । मृङ्० । मृकणिभ्यामूकोकणावित्यूकः ॥
मरूद्भवा । स्त्री० कार्पास्याम् ॥ यवासे । क्षुद्रखदिरे ॥
मरोलिः । पुं० मकरे । असितदंष्ट्रके । मगर० इ० भा० प्र० यादसि ॥
मरोलिकः । पुं० मकरे ॥
मर्कः । पुं० देहे । शरीरे ॥ वानरे ॥ वायौ ॥ मर्चति० मर्चयतिवा । मर्चिः सौत्रोधातुरितिवसवः । मर्चशब्दे० चौरादिकइति० मित्रचोन्यात्सूत्रेकैयटः । इणभीकापाशल्यतिमर्चिभ्यः कन् । नचैवंणिलोपश्यस्यानिवद्भावात्० कुत्त्वंनस्यादितिवाच्यम्० पूर्वत्रासिद्धेतदभावात् ॥
मर्ककः । पुं० गलेगण्डखगे । हाडगिल० इ० गौ० दे० भा० ॥
मर्कटः । पुं० वानरे ॥ लूतायाम् ॥ ऊर्णनाभे ॥ स्त्रीकरणान्तरे ॥ गलेगण्डे । हाडगिल० इ० भा० प्र० खगे ॥ मर्कति । मर्कः सौत्रोधातुर्ग्रहणे । शकादिभ्योऽटन् ॥ स्थावरविषभेदे ॥
मर्कटकः । पुं० शस्यप्रभेदे ॥ वानरे ॥ लूतायाम् ॥ मत्स्यविशेषे ॥ दैत्यवि

शेषि ॥ संज्ञायांकन् ॥
मर्कटतिन्दुक : । पुं॰ कुपीलौ ।
मर्कटपिप्पली । स्त्री॰ अपामार्गे ॥
मर्कटप्रिय : । पुं॰ क्षीरवृक्षे ॥
मर्कटवास : । पुं॰ आशावर्से ॥ लूतातन्तौ । मकडीकाजाल॰ इ॰ भा॰ ॥
मर्कटशीर्षम् । न॰ हिङ्गुले ॥
मर्कटास्यम् । न॰ ताम्रे ॥ वानरमुखे ॥ पुं॰ म्लेच्छविशेषे ॥ त्रि॰ वानरमुखसदृशमुखविशिष्टे ॥
मर्कटी । स्त्री॰ करञ्जप्रभेदे । मकडाकरैंजुवा॰ इ॰ भा॰ ॥ शूकशिम्ब्याम् ॥ मर्कटीवविविधचेष्टाहेतुत्वात् ॥ अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्वान्ङीष् ॥
मर्कटेन्दु : । पुं॰ काकतिन्दुके ॥
मर्कर : । पुं॰ भृङ्गराजे ॥
मर्करा । स्त्री॰ निष्फलायाम् ॥ दर्य्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥
मर्जू : । पुं॰ धावके । रजके ॥ पीठमर्द । स्त्री॰ शुद्धौ ॥ मार्ष्टि । मृजूशुद्धौ । मृजेर्गुणश्चेत्यू : ॥ मार्जनंवा ॥
मर्त : । पुं॰ मर्त्यलोके ॥ मानुषे ॥ म्रियन्तेऽत्र । मृङ्॰ । हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्निति तन् ॥
मर्त्य : । पुं॰ मनुष्ये ॥ म्रियते । मृङ्॰ । हसिमृग्रिणितितन् । ततः स्वार्थेयत् । प्राक्प्रवोधात्॰ सर्वादिमर्त्य : ॥ मध्यलोके ॥ म्रियन्तेऽत्रेतिमर्त्य : । हसिमृग्रिणि॰ मृङ्धातोस्तन्॰ मर्त : । ततोनवसूरमर्त्तयविष्टेभ्यः स्वार्थेयत् ॥ मर्ते भवोवा । दिगादेराकृतिगणत्वाद्यत् ॥
मर्त्त्यमुख : । पुं॰ यक्षे ॥
मर्त्या । स्त्री॰ मानुषस्त्रियाम् ॥
मर्त्येन्द्रा । स्त्री॰ मातरि ॥ अम्बिदमन्याम् ॥ राजमातरि ॥
मर्द्दनम् । न॰ अङ्गस्यमर्द्दने । पादमर्द्दनादौ । संवाहने ॥ मृदक्षोदे । ल्युट् । कदने ॥ चूर्णने॰ । त्रि॰ मर्दयितरि ॥ मर्दयति । मृदक्षोदे॰ मृदमर्दनेवा । हेतुमण्णिजन्तात्कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुज्वा ॥
मर्द्दल : । पुं॰ वाद्यप्रभेदे ॥ मर्दलो मादल इति॰ नेपालेख्यातो॰ मृदङ्गसजातीयः ॥ मर्दमुपमर्दंलाति॰ । ला॰ । आतइतिक : ॥
मर्द्दित : । त्रि॰ चूर्णिते ॥ ग्रन्थिते ॥
मर्द्दिता । त्रि॰ मर्द्दिनि ॥
मर्द्दी । त्रि ॰ मर्द्दितरि ॥
मर्म्मकील : । पुं॰ भर्त्तरि ॥
मर्म्मज्ञ : । त्रि॰ मर्मविदि । तत्त्वज्ञे ॥
मर्म्म । न॰ स्वरूपे । तत्त्वे ॥ यथा ।

मृगयानविगीयतेन्टपैरपिधर्मागम-
मर्म्मपारगैः। स्मरसुन्दरमांयद-
त्यजत्तवधर्मः सदयोदयोज्ज्वलाः॥
सन्धिस्थाने ॥ जीवस्थाने ॥ परचे-
न्नेगांचरन्तींनवाचचीतकस्यचित्।
नसंवसेत्सूतकेचनकंवेमर्मणिस्पृ-
शेत् ॥ अरुषि ॥
मर्म्मरः। पुं॰ वस्त्रविशेषे ॥ शुष्कप
र्णध्वनौ ॥ वस्त्रपर्णानांस्वनिते ।
मर्मर्मरड्मरड्॰ इतिचभाषा ॥
मर्मराति। रा॰ कः ॥ अनुकरण-
शब्दोवा ॥
मर्म्मरी। स्त्री॰ पीतदारुणि ॥
मर्म्मरीकः। त्रि॰ दीनजने ॥ म्रियते।
मृङ्॰ । पर्फरीकादित्वादीकन्॰धा
तोर्द्वित्वंरुक्चाभ्यासस्य ॥
मर्म्मवित्। पुं॰ मर्म्मज्ञे । कार्पटि-
के ॥
मर्म्मवेदी। पुं॰ मर्मविदि ॥
मर्म्मस्पृक्। त्रि॰ मर्मपीडके । अरु-
न्तुदे ॥ मर्म्मस्पृशति। स्पृशउपता
पे। स्पृशोऽनुदकइति॰ क्विन् ॥
मर्म्माविद्। त्रि॰ सन्धिस्थानवेधक
र्त्तरि ॥ मर्म्मज्ञे ॥ मर्म्माणिविध्य
ति। व्यधताडने। क्विप्। ग्रहिज्ये
तिसम्प्रसारणम्। नह्वितीतिदी-
र्घः ॥
मर्म्मिकः। त्रि॰ मर्मज्ञे ॥
मर्म्मुरः। पुं॰ तुषानले ॥

मर्य्यः। पुं॰ मरणधर्म्मणि । मनु-
ष्ये ॥
मर्य्या। स्त्री॰ सीमायाम् ॥
मर्य्यादा। स्त्री॰ सीमनि। अवधौ।
तेनविनेत्यर्थे ॥ स्थितौ। धारणा-
याम्। सत्पथस्थितौ॥ अनुल्लङ्घनी
यायांव्यवस्थायाम् ॥ स्थित्यनतिक्र
मे ॥ कूलभूमौ ॥ मर्येतिसीमार्थेऽ-
व्ययम्। तत्रदीयते। डुदाञ्॰ ।
आतश्चोपसर्गइत्यङ् ॥
मर्षः। पुं॰ क्षान्तौ ॥ मर्षणम्। मृ-
षतितिक्षायाम् ॥ घञ् ॥
मर्षणम्। न॰ अपराधेसत्यपिकोपा-
नाविष्करणे। क्षमायाम्। मृष॰
भावेल्युट् ॥
मर्षितः। त्रि॰ क्षान्तियुक्ते ॥ मृषेः
कर्त्तरिक्तः। भावेक्ते क्लीवम् ॥
मर्षितवान्। त्रि॰ क्षान्ते ॥ मृषेः
कर्त्तरिक्तवतुः ॥
मर्षी। त्रि॰ क्षमाशीले ॥
मलः। पुं॰ न॰ पापे। किल्विषे ॥
विशि। विष्ठायाम्। यथा। मला
यत्तंबलंपुंसांशुक्रायत्तन्तुजीवनम्।
तस्माद्यत्नेनतंरक्षेत्यक्ष्मिणोमलरे-
तसीइति ॥ किट्टे। मण्डूरादौ ॥
खेदादौ ॥ वसाशुक्रमसृङ्मज्जामू-
त्रंविट्कर्णविण्नखाः। श्लेष्माश्रुदू
षिकास्वेदोद्वादशैतेनृणांमलाः ॥
वातादिषु। यथा। शरीरदूषणाद्दो

षामलिनीकरणान्मला :। धारणा द्वातवस्तेषु वातपित्तकफास्त्रय:॥ सर्वेषामेवरोगाणांनिदानंकुपिता-मला :। तत्प्रकोपस्यतुप्रोक्तं विविधाहितसेवनम् । हरेद्वसन्तेश्लेष्माणं पित्तं शरदिनिर्हरेत् वर्षासुशमयेद्वायुंप्राग्विकारसमुच्छ्रयात् ॥ अत्र-विशेषमाहमाधव : कफपित्तानिला : पूर्वमध्यान्तेषुव्यवस्थिता :। देहाहोरात्रिवयसांसम्भिष्वपिकफानिलाविति ॥ अस्यार्थ :। कफपित्तानिला : देहाहोरात्रिवयसांपूर्वमध्यान्तेषुयथासंख्यंव्यवस्थिता :। देहस्य पूर्वभागेशिरआरभ्यवक्षोन्ते-कफोव्यवस्थित :। मध्येआमाशय-मारभ्यनाभ्यन्ते पित्तं व्यवस्थितम् । अन्ते नाभ्यधोभागेवायुर्व्यवस्थित :। शिरोमूलत्त्वात्देहस्य वपूर्वादिकल्पना। अह्नस्त्रिधाविभक्तस्यपूर्व-भागेकफोमध्ये पित्तमन्ते वायु :। एवंरात्रे रपिवयसोपिपूर्वभागेबाल्यावस्थायांश्लेष्मामध्ये तरुणावस्थायां-पित्तम्अन्ते वृद्धावस्थायांवायु :। सन्धिष्विति। देहाहोरात्रिवयसा-मित्यव। तत्रदेहस्यपूर्वभागमध्य-भागयो : सन्धौकफोव्यवस्थित: मध्यभागान्त्यभागयो : सन्धौपक्वाशयास्थोवायु : एतच्चयथासङ्ख्यमिष्यतोलभ्यते। अह : सन्धौराल्या-

साकमह : सन्धि : प्रात : संज्ञकस्तस्मिन्कफ :। अह्नासाकंरात्रे : सन्धि : सायंतस्मिन्वात :। वय: सन्धौबाल्यतारुण्ययो सन्धौश्लेष्मा तारुण्यवृद्धत्त्वयो : सन्धौवायुरिति ॥ मृज्यतेऽसौ। मृजूशुद्धौ। मृजेष्टिलोपश्चेतिकल :॥ मलयति। मल तत्कृतौ॰ अदन्त :। मलतेवा । मलधारणे। पचाद्यच् ॥ कर्पूरे ॥ त्रि॰ कृपणे। कदर्य्ये ॥

मलघ्न :। पुं॰ शाल्मलीकन्दे ॥ त्रि॰ मलनाशके ॥

मलघ्नी। स्त्री॰ नागदमन्याम् ॥

मलजम्। न॰ पूये ॥ त्रि॰ मलोद्भवे॥

मलदूषित :। त्रि॰ मलिने ॥ मलेनदूषित :। कर्तृकरणेइतिसमास:॥

मलद्रावी। पुं॰ जयपाले ॥

मलधी:। पुं॰ कामिनि॥

मलन :। पुं॰ पटवासे। अंशुकालये ॥ न॰ मर्द्दने। पीडना॰ मलना॰ स्त्री॰ भा॰ ॥

मलपू :। स्त्री॰ काकोदुम्बरिकाया-म् ॥ मलयूस्तम्भकृत्तिक्ताशीतला तुबराजयेत्। कफपित्तव्रणश्वित्रकुष्ठपाण्डुर्शकामला :॥ मलात्पापात्। पुनाति। पूञ्पवने। क्विप् ॥

मलभुक्। पुं॰ काके ॥

मलभेदिनी। स्त्री॰ कटुकायाम् ॥

मलमास :। पुं॰ अधिमासे। मलि

स्तुषे ॥ यस्मिन् मासि नसङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा । मलमासः स विज्ञेयो मासस्त्रिंशत्तमो भवेत् ॥ गर्गस्तु । अमावास्याद्वयं यत्र रविसङ्क्रान्तिवर्ज्जितम् । मलमासः स विज्ञेयो मासः शुद्धास्त्वथोत्तरः ॥ तथा च ब्रह्मसिद्धान्ते । चान्द्रो मासो ह्यसङ्क्रान्तो मलमासः प्रकीर्त्तितः ॥ सत्यव्रतस्तु । राशिद्वयं यत्र मासि सङ्क्रमेत् दिवाकरः । नाधिमासो भवेदेव मलमासस्तु केवलम् ॥ एकत्र मासद्वितयं यदि स्यादब्देऽधिकं तत्र परोऽधिमासः । त्रयोदशस्तु श्रुतिराहमासं चतुर्द्दश क्वापि न चास्तिदृष्टम् ॥ अयं मासश्चान्द्र एव नसौरः । अधिकत्रयोदशो मासः स चशुश्चा निगद्यते । असौ चान्द्रो न सौरः स्यान्नास्ति सौरस्त्रयोदशः ॥

मलमासत्वम् । न० रविसङ्क्रान्त्यभावविशिष्टचान्द्रमासत्वे ॥

मलयः । पुं० ऋष्यमूकप्रदेशान्तरे स्वनामप्रसिद्धेऽद्रिविशेषे । भाषाढे । दक्षिणाचले । चन्दनाद्रौ क्षतमालातास्रपर्णीप्रमुखा मलयोद्भवाः ॥ शैलाङ्गे ॥ देशविशेषे । मलेवार० इ० भा० ॥ आरामे नन्दनवने ॥ अष्टादशोपद्वीपान्तर्गतद्वीपविशेषे ॥ मलते । मलधारणे । वलिमलितनिभ्य: कयन् ॥ ऋषभदेवस्य पञ्चमे पुत्रे ॥

मलयगन्धिनी । स्त्री० उमायाः सखीविशेषे ॥

मलयजः । पुं० राहुग्रहे ॥ पुं० न०-चन्दने ॥ मलये जातः । सप्तम्यांजनेडः ॥

मलया । स्त्री० त्रिवृतायामोषधौ ॥

मलयाचलः । पुं० सह्याद्रिसमीपस्थे शैलविशेषे । दक्षिणाचले ॥ सतां मिसैव्यो हिमवान भोगिनां मलयाचलः ॥

मलयानिलः । पुं० वासन्ते । वसन्तकालिकवायौ ॥

मलयालः । पुं० देशविशेषे ॥ यथा । सुराम्बिकां समारभ्य मलयाद्यन्तगं शिवे । मलयालाभिधो देशो मन्त्रसिद्धिप्रदर्शकः ॥

मलूः । स्त्री० मलय्वाम् । काकोदुम्बरिकायाम् ॥ मलं यवति । युज् गुप्तायाम् । क्विप् । बाहुलकाद्दीर्घः ॥ यद्वा । मलते । मलधारणे । बाहुलकादृयूः ॥

मलयोद्भवम् । न० चन्दने ॥

मलवर्त्म । न० गुदे ॥

मलविलासिनी । स्त्री० शङ्खपुष्प्याम् ॥

मलहन्ता । पुं० शाल्मलीकन्दे ॥

मला । स्त्री० भूम्यामलक्याम् ॥

मलाका । स्त्री० दूत्याम् ॥ कामिन्या

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न० पापमोचने ॥ मलस्यदूरीकरणे ॥

मलापहा । स्त्री० नदीविशेषे ॥ यथा। मलापहाभीमरथीचघट्टगाययाचक्र ष्णाजलसाम्यगागुणै:। मलापहा घट्टगयोस्तथापिपथ्यं लघुत्वादुतरं- सुकान्तिदम् ॥

मलावहम् । न० मलिनीकरणे । पापविशेषे ॥ यथा । कृमिकीटवयोऽङ्ग्यामदामुगतभोजनम् । फलेध: कुसुमस्तेयमधैर्यं चमलावहम् ॥

मलारि: । पुं० सर्ज्जक्षारे । साबन० इ० भा० ॥

मलिनम् । न० दोषे ॥ टङ्कणे । घोले ॥ त्रि० मलयुक्तवस्तुनि । मलीमसे । कच्चरे । मलदूषिते ॥ यथा । यथाभवतिबालानांगगनं मलिनंमलै: । तथाभवत्यबुद्धाना मात्मापिमलिनोमलैरिति॥ मलै: क्लेशकर्मफलैरात्मा । अन्यत्रम लैर्घनरजोधूमादिभिराकाशवदित्य र्थ: ॥ नित्यनैमित्तिकक्रियात्या गिनि ॥ कृष्णे ॥ दूषिते ॥ मलो ऽस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु: ॥ यद्वा । मलते । मल० । वहुलमन्यत्रापीतोनच् ॥

मलिनमुख: । पुं० वन्हौ ॥ गोलाङ्गूले० मृगे ॥ प्रेते ॥ त्रि० क्रूरे । खले ॥

मलिनात्मा । पुं० कृष्णदेहे ॥ दुष्ट चित्ते ॥ नपरिचयोमलिनात्मनां प्रधानम् ॥

मलिनाम्बु । न० मस्याम् ॥

मलिनास्य: । त्रि० खले ॥

मलिनिमा । पुं० कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्यभाव: । इमनिच् ।

मलिनी । स्त्री० रजस्वलायांनार्या म् । ऋतुमत्याम् ॥ मलोऽस्त्यस्या: । अतइनिठनौ ।

मलिनीकरणम् । न० मलावहे ॥

मलिम्लुच: । पुं० मलमासे ॥ यथा । तमतिक्रम्यतुरवियदागच्छेत् कथञ्चन । आद्योमलिम्लुचोज्ञेयो द्वितीय: प्रकृत: स्मृत: ॥ यदा दर्शान्तमासमतिक्रम्यतत्पूर्वमासा न्त्यचणहतिराशिस्थ: सन्सूर्यो ऽतिवाह्यगच्छेत् मासान्तरे राश्यन्त रसंयोगंगच्छेत् । तदाआद्योऽति क्रान्तमासोमलिम्लुचोज्ञेय:।मलो सन्म्लोचति० गच्छतीति० मलि म्लुच: । द्वितीयस्तुप्रकृत: शुद्ध: कर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मत्स्यते । मल० । इच् । मलिंधृतंम्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्क: ॥

मलिष्ठा । स्त्री० ऋतुमत्यांनार्याम् ॥

मलीमस : । पुं॰ पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु : ॥

मलूक : । पुं॰ कृमिविशेषे ॥

मल्ल : । पुं॰ पात्रे ॥ कपोले ॥ मत्स्यभेदे ॥ बलीयसि ॥ झल्ले । निच्छिवी । बाहुयोधिनि॰ मल्ल इतिनाम्नाप्रसिद्धे ॥ अयञ्चव्रात्यात् क्षत्रियात्सवर्णायांजात : । यथा इमनु : । झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्चकरणश्चैव खसोद्रविडएवच ॥ इति ॥ देशविशेषे ॥ यथा । दशार्णानवराष्ट्रञ्चमल्ला : शाल्वा : युगन्धरा : । इति । विराटपर्व्वणि १ अध्याय : ॥ वर्णसङ्करजातिविशेषे । माला॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ अयञ्च ॰ लेटात्तीवरकन्यायांजात : । इ॰ ब्र॰ वै॰ पु॰ ॥ तन्त्रवाय्यांकुन्दकाराज्जात : । इ॰ प॰ पु॰ ॥ नियुद्धकुशलोमल्ल स्तद्वृत्तिस्तपरायण : ॥

मल्लक : । पुं॰ दन्ते ॥ पुं॰ स्त्री॰ दृपाधारे ॥ कौशिकायाम् । नारिकेलफलनिर्म्मितेचषके । नरेली॰ इ॰ भा॰ ॥ मल्लते । मल्लधारणे । ण्वुल् ॥

मल्लतूर्य्यम् । न॰ वाद्यविशेषे । महास्वने ॥

मल्लनाग : । पुं॰ ऐरावतमातङ्गे ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लेखहारे ॥

मल्लभू : । स्त्री॰ मल्लभूमौ ॥

मल्लभूमि : । स्त्री॰ रङ्गभूमौ । अच्चवाटे । अखाडा॰ इ॰ भा॰ ॥ देशविशेषे ॥

मल्लयात्रा । स्त्री॰ मालश्याम् । मल्लानांयुद्धार्थंप्रयाणे ॥

मल्लयुद्धम् । न॰ नियुद्धे । बाहुयुद्धे । मल्लानांसङ्ग्रामे ॥

मल्ला । स्त्री॰ नार्य्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ॥

मल्लार : । पुं॰ षण्णांरागाणांमध्येद्वितीयरागे ॥ मेघमल्लाररागस्यगानंवर्षासुसर्व्वदा ॥

मल्लारी । स्त्री॰ वसन्तरागस्यरागिण्याम् ॥ यथा । आन्दोलिताचदेशाख्यालोलाप्रथममञ्जरी । मल्लारीचेतिरागिण्योवसन्तस्यसदानुगा : ॥ मेघरागस्यरागिण्याम् ।

मल्लि : । पुं॰ वृत्तार्हद्विशेषे ॥ स्त्री॰ मल्लिकायाम् ॥ मल्लते । मल्ल॰ । सर्व्वधातुभ्यइन् ॥

मल्लिक : । पुं॰ मलिनचञ्चुचरणयुतेहंसविशेषे । किञ्चिद्धूसरवर्णैश्चञ्चुचरणैरुपलक्षितेहंसप्रभेदे ॥ मल्लते । मल्ल॰ । इकन् । स्वार्थेक : ॥

मल्लिका । स्त्री॰ तृणशून्ये । भूपदाम् ।

। शतभीरौ । वेल्लि॰ वेला॰ वेली॰ इ॰ प्र॰ पुष्पवृक्षे ॥ मल्लतेगन्धं॰ मल्यतेवा । मल्ल॰ । सर्वधातुभ्यइन् । वाङीष् । स्वार्थेकन् । ह्रस्वः । टाप् ॥ मल्लिकोष्णालघुर्हन्त्याति क्ताचकटुकाहरेत् । वातपित्तास्यदृग्व्याधिकुष्ठारुचिविषव्रणान् ॥ मीनविशेषे ॥ मृत्पात्रविशेषे ॥ पानपात्रे ॥ सवैय्यान्तर्गतवृत्तविशेषे ॥ यथा । अशेषगुणाधिकशोभनशोभनसौरभयुद्धवविशुद्धयगते॰ विधेहिविधेहिविवेकनिधेहिपुरोजगणानिशसप्तलगौसुमते । विशोभियशोभिरुपेतितयेतिविनिर्मितमल्लिकयेशरते॰ निधेहिनिधेहिमुदंहृदयेसदयेयशवन्तधराधिपते ॥ वर्णवृत्तान्तरे ॥ यथा । हारशङ्ककज्ञसेणमण्डितष्टवर्णकेन । वर्धिताकुतूहलेनमल्लिकेपिङ्गलेन ॥ यथा । वेदवेदिबालखिल्यमारदादिसंस्तुताय । अस्तुमेनतिः सदैवतुभ्यमम्बुजप्रियाय ॥ भूपदीपुष्पे ॥ मल्लिकाया : पुष्पम् । पुष्पमूलेषुवहुलमिति॰ अनुदात्तादेरञोऽयस्यलुप् । लुपियुक्तवत् ॥ वर्णपात्रे ॥ इ॰ श॰ माला ।

मल्लिकाच्चः । पुं॰ किञ्चिद्धूम्रवर्णेचञ्चुचरणैरुपलक्षितेहंसविशेषे ॥ शुक्लवर्णवेष्टितचचुर्द्वययुक्ताश्वे ॥ मल्लिकाकारमक्षियस्यशुक्लापाङ्गत्वात् । बहुव्रीहौसक्थ्यक्ष्णोरितिषच् ॥

मल्लिकाख्य : । पुं॰ मल्लिकाक्षाभिधे हंसे ॥

मल्लिकाख्या । स्त्री॰ मोद्गिन्याम् । चिपुरमालीतिगौडदेशप्रसिद्धेपुष्पे ॥

मल्लिकागन्धम् । न॰ मल्लिकागुरुणि

मल्लिकापुष्प : । पुं॰ कुटजवृक्षे ॥ कावृवृक्षे । करुणालेवु॰ इ॰ गौ॰ दे॰ भा॰ ॥ स्वनामाप्रसिद्धेपुष्पवृक्षे ॥

मल्लिगन्धि । न॰ मल्लकागुरुणि ॥ मल्लिकापुष्पस्येवगन्धोयस्य । उपमानाच्चेति॰ इत् ॥

मल्लिपत्रम् । न॰ छत्राके ॥

मल्ली । स्त्री॰ मल्लिकायाम् ॥

मल्लीकर : । त्रि॰ चौरे ॥

मल्लु : । पुं॰ भालूके ॥

मवित : । त्रि॰ बद्धे ॥

मशक : । पुं॰ कीटविशेषे । वज्रतुण्डे । सूच्यास्ये । रात्रिजागरदे । मच्छर॰ इतिभाषा ॥ तन्नाशकधूपोयथा । त्रिफलार्जुनपुष्पाणिभल्लातकशिरीषकम् । लाक्षासर्जरसश्चैवविडङ्गश्चैवगुग्गुलु : एतैर्धूपैर्मक्षिकाणांमशकानांविनाशनम् ॥ क्षुद्ररोगविशेषे । मस्सा॰ इ॰ भा॰ प्रसिद्धे ॥ यथा । अवेदनंस्थिरंचैवयस्यगात्रेप्रदृश्यते । माषवत्कृष्णमुत्सन्नंमलिनंमशकंदिशेत् ॥ स्थिर

म०अचलम् ॥ अश्वचिकित्सायथा । चर्मकीलंजतुमणिंमशकांस्तिलकालकान् । उत्कृत्यशस्त्रेणदहेत्क्षाराग्निभ्यामशेषत: ॥ अपिच । लशुनानान्तुचूर्णस्यघर्षोमशकनाशन: ॥ इति ॥

मशकी । पुं० उदुम्बरवृक्षे ॥

मशहरी । स्त्री० चतुष्क्याम् । शयनतिरस्करिण्याम् ॥

मशुन: । पुं० कुक्कुरे ॥

मसनम् । न० सोमराजीवृक्षे ॥

मसरा । स्त्री० मसूरे ॥

मसार: । ) पुं० इन्द्रनील

मसारक: । ) पुं०मणौ ॥

मसि: । स्त्री० लिपिप्रयोजनायाम् । पत्राञ्जने । मस्याम् ॥ मस्यति । मसीपरिणामे । इन् ॥ शेफालिकावृक्षे ॥

मसिकूपी । ) स्त्री० मस्या-

मसिधानम् । ) न० धा-

मसीधाना । ) स्त्री० रे ।

मसिकूपिकायाम्

मसिनम् । न० सपिंडके ॥

मसिपण्य: । पुं० लेखके ॥

मसिप्रसू: । स्त्री० मस्याधारे ॥ मस्या: प्रसू: ॥ लेखन्याम् ॥

मसिमणि: । पुं० मस्याधारे ॥

मसिवर्द्धनम् । न० रसगन्धे ॥

मसी । स्त्री० मेलायाम् । लिपिसाधनविशेषे । काली० इ०गी०भा० । स्याही० इ० भाषा० ॥ शेफालिकावृक्षे । मस्यति । मसी० । पचाद्यच् । गौरादित्वात् ङीष् ॥

मसीजलम् । न० मस्याम् ॥

मसीधानम् । न० मस्याधारे ॥

मसीधानी । स्त्री० मस्याधारे ॥

मसीना । स्त्री० स्वनामख्यातेधान्ये । उमायाम् ॥

मसीश: । पुं० कायस्थे ॥ मस्याईश: ॥

मसुर: । पुं० मसूरे । मङ्गल्यके ॥ मस्यति० मस्यतेवा । मसी० । मसेरुरन् ॥ उपधाने ॥ मसुरा । स्त्री० वेश्यायाम् ॥ व्रीहिप्रभेदे ॥ टाप् ॥

मसुरी । स्त्री० पापरोगे । मसूर्याम् ॥

मसूर: । पुं० व्रीहिप्रभेदे । मङ्गल्यके ॥ मसूरोमधुर:पाकेसङ्ग्राही शीतलोलघु: । कफपित्तास्रजिद्रूक्षोवातलोज्वरनाशन: ॥ मस्यति० मस्यतेवा । मसी० । मसेरूरन्निति पाञ्चमिकऊरन् । उपधाने ॥

मसूरक: । पुं० उपबर्हविशेषे । चातुरे । चक्रगण्डौ । गोलसिर्हामा०इ०भा० ॥ मसूरे ॥ स्वार्थेक: ॥

मसूरविदला । स्त्री० कृष्णत्रिवृतायाम् ॥ मसूरवद्विदलमस्या: ॥

मसूरा । स्त्री॰ मसूर॰ इ॰ प्रसिद्धे व्रीहिभेदे । मण्डल्यके ॥ वेश्यायाम् ॥ टाप् ॥

मसूरिका । स्त्री॰ कुट्टन्याम् ॥ मण्डल्यके ॥ मसूरीरोगे । शीतलाख्यरोगे ॥ मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः ॥ अतीसारे ॥ मच्छर्याम् ॥ यथोक्तं पाश्चिक्रियायोगसारे । दंशांश्च मशकांश्चैव वर्षाकाले निवारयेत् । मसूरिकाभिः प्रायश्यमस्य शायिनमुच्युतमिति ॥

मसूरी । स्त्री॰ पापरोगे । रक्तवच्याम् । शीतलाख्यरोगे ॥ चिद्गति ॥ रक्तचिद्गति ॥

मसृणः । पुं॰ सोमे ॥ त्रि॰ अकर्कशे । अकठिने ॥ स्निग्धे ॥ मस्यति । मसी॰ बाहुलकात् ऋणः ॥ यद्वा । सम् ऋणोति । ऋणुगतौ ॥ इगुपधेतिकः । पृषोदरादिः ॥

मसृणा । स्त्री॰ उमायाम् । अतस्याम् ॥

मस्करः । पुं॰ वेणौ । वंशे ॥ मस्कतेऽनेनवा । मस्कगतौ । बाहुलकादरः ॥ यद्वा । मज्जति मश्चिमण्डने । अरः । आगमशास्त्रस्यानित्यत्वान्नुम् । मस्करमस्करिणौवेणुपरिव्राजकयोरितिसुट् ॥ रन्ध्रवंशे ॥

मस्करी । पुं॰ परिव्राजके । भिक्षौ । संन्यासिनि ॥ मस्कनम् । मस्कगतौ । बाहुलकादरः । मस्करोज्ञानं मतिर्वाऽस्यास्ति । मस्करमस्करिणाविति निः ॥ यद्वा । मस्करोवेणुरस्यास्ति । इनिः ॥ यद्वा । माकृतं कर्म निषिद्धं शीलमस्य । मस्करमस्करिणाविति साधुः ॥ यद्वा । मकुरवद्वशुद्धमन्तःकरणमस्यास्ति । प्राग्वन्निपातः ॥ यद्वा । मङ्कते । मकि॰ । बाहुलकादरः । आगमशास्त्रस्यानित्यत्वान्नुम् ॥ मकरो निधिर्भेदोवाऽस्यास्ति । पूर्ववन्निपातः ॥ चन्द्रे ॥

मस्तम् । न॰ मस्तके ॥ मस्यतेस्म । मसी॰ । क्तः ॥

मस्तकः । पुं॰ न॰ उत्तमाङ्गे । शिरसि । मूर्द्धनि ॥ स्वार्थेकन् ॥

मस्तकस्नेहः । पुं॰ शिरोमज्जनि ॥

मस्तकाख्यः । पुं॰ शिखरे ॥ वृक्षशिरसि ॥ मस्तकमित्याख्यायस्य ॥

मस्तदारु । न॰ देवदारुणि ॥

मस्तमूलकम् । न॰ शिरोधौ ॥

मस्तिष्कम् । न॰ गोर्दे । मस्तकस्थघृताकारस्नेहे ॥ मस्यते॰ मसनं वा॰ । मसी॰ । क्तिन् । मस्तिं मस्कते । मस्कगतौ । पचाद्यच् । पृषोदरादिः ॥

मस्तु । न॰ दधिभवमण्डे । दधिजले । तोड॰ इ॰ भाषा ॥ दध्नस्तूपरियोभागोघनः स्नेहसमन्वितः । स लोकेसरइत्युक्तोदध्नोमण्डस्तुमस्त्विति ॥ मस्तुक्रमहरंबल्यं लघुभुक्ता-

भिलाषकृत् । स्रोतोविशोधनंत्वा दिक्कफतृष्णानिलापहम् । अवृष्यं-प्रीणनंशीघ्रं भिनत्तिमलसङ्ग्रहम्॥ अपिच । तृष्णाऽम्लं रुचिपित्तदंश्रम हरंबल्यं कषायंसरंभुक्तिच्छन्दकरंदृ ष्टोदरगदघ्नौष्ठार्श्ससांनाशनम् । स्रोत : शुद्धिकरंकफानिलहरंविष्टम्भ-शूलापहम्पाण्डुश्वासविकारगुल्म शमनंमस्तुप्रशस्तं लघु ॥ मस्यते । मसी० । सितनीतितुन् ॥

मस्तुलुङ्ग : । पुं० मस्तकस्थघृताकार स्नेहे । मस्तिष्के ॥

मस्तुलुङ्गक : । पुं० मस्तिष्के ॥

मह : । पुं० उत्सवे॥ तेजसि ॥ महिषे ॥ मङ्गलम् । महपूजायाम् । घञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभाव : । घोत्रा ॥ यद्वा । महति । अच् । यज्ञे ॥

महक : । पुं० बहुलामोदे । महक० कू० भा० ॥

महत् । न० राज्ये ॥

महान् । पुं० ज्ञानक्रियाशक्तिमतिमहत्तत्त्वे । बुद्धितत्त्वे । अध्यवसायलक्षणे ॥ यथा । सविकासत्प्रधानात्तु महत्तत्त्वं प्रजायते । महानितियत : ख्यातिर्लोकानांजायतेसदा ॥ सर्वकार्यापेक्षयाऽधिकत्वात् कारणे० हिरण्यगर्भे । प्रथमजे ॥ दुर्गायाम् । महान्व्याप्यस्थितासर्वं महान्वाप्रकृतिर्मतेतिदेवीपुराणात् ॥ उष्ट्रे ॥ नवधाभक्तियुक्तश्रीकृष्णभक्ते० शिवशेषधर्मादौ ॥ त्रि० वृद्धे । विशङ्कटे । वृहति । विशाले । बड्रे । विपुले ॥ उत्कटे ॥ अतिप्रमाणे । अप्रमेये । आपातमधुरसांसारिकसुखनिस्पृहे ॥ यथा । महत्सेवांद्वारमाहुर्विमुक्तेस्तमोद्वारंयोषितांसङ्गिसङ्गम् । महान्तस्ते समचित्ता : प्रशान्ताविमन्यव : सुहृद : साधवोये ॥ महति । मह० । वर्त्तमानेपृषद्बृहन्महदितिनिपातित : ॥ मह्यतेवा । महच्छब्दप्रयोगनिषेधोयथा । शङ्खेतैलेतथामांसेवैद्येज्यौतिषिकेद्विजे । यात्रायांपथिनिन्द्रायांमहच्छब्दोनदीयते ॥ इति ॥ देशादिपरिच्छेदशून्ये सर्वगतेपरमात्मनि ॥

महती । स्त्री० नारदस्यवल्लक्याम् ॥ शततन्त्रीवीणामहतीति० स्वामी॥ विततायाम् ॥ वृहत्प्रमाणायाम् ॥ वृहत्याम् ॥ वार्त्ताक्याम् ॥ मह्यते । मह० । वर्त्तमानेपृषदिति साधु : । गौरादि : ॥

महतीद्वादशी । स्त्री० श्रवणद्वादश्याम् । वामनद्वादश्याम् ॥

महत्तत्त्वम् । न० चतुर्विंशतितत्त्वान्तर्गतद्वितीयतत्त्वे । प्रकृतेरुत्पन्ने समष्टिबुद्धिस्वरूपे ॥ तत्पर्यायाश्च । सम

हाभारते । यथा । महानात्मामति
र्विष्णुर्जिष्णुः शम्भुश्ववीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथाख्याति
र्धृतिःस्मृतिः ॥ पर्यायवाचकैः श
ब्दैर्महानात्माविभाव्यते ॥

महत्तरः । पुं॰ शूद्रविशेषे । ग्रामकूटे । महता॰ इ॰ भा॰ ॥ इ॰ चि॰ काण्डशेषः ॥

महत्युक्थम् । न॰ हहतीसहस्राख्य शस्त्रे ॥

महत्त्वम् । न॰ महतोभावे । यथा । महत्त्वंषड्विधेहेतुरिन्द्रियंकरणंमतम् । इ॰ भा॰ प॰ । महत्त्वंषड्विधइति । द्रव्यप्रत्यक्षेमहत्त्वंसमवायसम्बन्धेनकारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानांप्रत्यक्षे॰ स्वाश्रयसमवेतसमवायसम्बन्धेनकारणम् । इ॰ सिद्धान्तमुक्तावली ॥ स्वाध्यस्त सर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम् ॥

महत्पुष्पा । स्त्री॰ हस्तिघोषायाम् ॥

महद्ब्रह्म । न॰ अव्याकृते॰ प्रकृतौ॰ त्रिगुणात्मिकायांमायायाम् ॥ सर्वकार्यापेक्षयाधिकत्वात्कारणंमहत्॰सर्वकार्याणांवृद्धिहेतुत्वरूपात्॰ बृंहणत्वाद्वा॰ ब्रह्मणत्वाद्वा॰ ब्रह्मच भवत्यव्याकृतम् ॥ महच्चतद्ब्रह्मचेतिविग्रहः ॥

महद्भूतम् । न॰ परमात्मनि ॥ महत् ब्रह्मविद्योत्कर्षेणवर्तमानत्वात्॰भूतंपरमार्थसत्यम् । महच्चतद्भूतञ्च ॥

महनीयः । त्रि॰ पूजनीये ।

महर्घ्यता । स्त्री॰ अधिकन्यूनत्वे ॥

महर्द्धिः । स्त्री॰ समृद्धौ । कद्धेराधिक्ये ॥

महर्लोकः पुं॰ भूरादिसप्तलोकान्तर्गतचतुर्थलोके ॥ चतुर्मुखदिनस्यान्तेजगदेतच्चराचरम् । तदादिदह्यतेसर्वंत्रैलोक्यंभूर्भुवादिकम् । जनस्थानित्तितापार्त्तामहर्लोकनिवासिनः ॥ चतुर्थेतुमहर्लोकेतिष्ठन्ति कल्पवासिनः ॥ अपिच । भ्रुवोर्ध्वकोटियोजनेमरीच्यादिमुनिव्रजः ॥ भूपृष्ठाद्दिकोट्यूर्ध्वायोमरीच्यादिमुनिवृन्दस्थानंमहर्लोकइत्यर्थः ॥

महर्षभी । स्त्री॰ कपिकच्छ्वाम् ॥

महर्षिः । पुं॰ व्यासादिषु ॥ भृग्वादिसप्तसु ॥ वेदतदर्थद्रष्टृषु॰ सर्वज्ञेषु॰ विद्यासम्प्रदायप्रवर्तकेषु ॥ भृगुंमरीचिमत्रिंचपुलस्त्यंपुलहंक्रतुम् । वसिष्ठञ्चमहातेजाः सोऽसृजन् मनसासुतान् ॥ सप्तब्रह्माणइत्येते पुराणेनिश्चयङ्गताः ॥ महांश्चासौ॰ ऋषिश्च । कृत्स्नस्यवेदस्यदर्शनात् । । अन्येतुवेदैकदेशदर्शनादृषयः ॥

महल्लकः । पुं॰ अन्तः पुररक्षके । सौविदल्ले । कञ्चुकिनि ॥ महती लाति । ला॰ । कः । कः ॥

महल्लिकः । पुं॰ अन्तः पुररक्षके

अन्त : पुरस्थायिजने ॥ तल्लक्षणं यथा । सुप्तशून्योऽनुपस्थोय : स्त्री स्वभावोमहत्तिक : ॥ इति ॥

महः । न० उत्सवे ॥ तेजसि ॥ मह-नम् ० मह्यतेवा । महपूजायाम् । सर्वधातुभ्योऽसुन् ॥

महसम् । न० ज्ञाने ॥ महति० मह्य-तेवा । मह० । अत्यविचमितमिन मिरभिलभिनभितपियतिपश्विप-निमहिभ्योऽसच् ॥ प्रकारे ॥

महा । स्त्री० गोपकन्याम् । पृश्निप-र्णीविशेषे ॥ धेनौ । मह्यतेपूज्यते । मह० । खनोघचेति० घ : ॥

महाकच्छ : । पुं० समुद्रे ॥ प्रचेत-सि । वरुणे ॥ पर्वते ॥ महान्क-च्छोयस्यस : । आन्महतइत्यात्व-म् ॥

महाकण्टकिनी । स्त्री० क्षुद्रीभेदे । विश्वसारके । नागफणीयूहर० इ० भा० । फणिमनसा० इगौ० दे० भा० ॥

महाकन्द : । पुं० लशुने ॥ चाणक्य मूलके । मूलके ॥ रक्तलशुने । रा-जपलाण्डौ ॥

महाकपित्थ : । पुं० विल्ववृक्षे ॥ म-हांश्चासौकपित्थश्च । आन्महत : ॥

महाकपित्थाख्य : । पुं० विल्वे ॥

महाकरञ्ज : । पुं० हस्तिकरञ्जके ॥

महाकर्णिकार : । पुं० आरग्वधे ॥

महाकान्ता । स्त्री० पृथिव्याम् ॥

महाकाय : । पुं० वृषाणके । प्रमथ-विशेषे । शिवद्वारपाले ॥ वृहच्छरीरे ॥ त्रि० तद्वति ॥

महाकार्त्तिकी । स्त्री० रोहिणीनक्षत्रयुक्तायांकार्त्तिकपूर्णिमायाम् ॥

महाकाल : । पुं० महादेवे ॥ प्रमथ-विशेषे । महाभीमे ॥ लताविशेषे । किम्पाके ॥ अखण्डदण्डायमान विष्णुस्वरूपसमये ॥ उज्जयिन्यांम-हाकाल : शाङ्करीतत्रदेवता ॥

महाकाली । स्त्री० परदेवतायाम् ॥ म हाकालपत्न्याम् ॥ जिनानांचतु-र्विंशतिशासनदेवतान्तर्गतदेवीवि शेषे ॥

महाकाव्यम् । न० सर्गबन्धे ॥

महाकुमुदा । स्त्री० काश्मर्याम् ॥

महाकुम्भी । स्त्री० कटफले ॥

महाकुल : । त्रि० कुलीने । आर्ये । सभ्ये । सज्जने । साधौ ॥ महत्तत त्कुलञ्चमहाकुलम् । आन्महतइ त्यात्वम् । महाकुलमस्यास्ति । अ-च् ॥ महत्कुलमस्येतिविग्रहोवा ॥ न० सत्कुले ॥

महाकुलीन : । त्रि० महाकुले ॥ म-हाकुलस्यापत्यम् । कुलात्ख : इत्यनुवृत्तौ महाकुलादञ्खञौ वितिपक्षेख : ॥

महाकूप : । पुं० पादावर्त्ते ॥

महाकूल : । पुं० सत्कुले ॥

महाकोशफला । स्त्री० देवदालीलतायाम् ॥

महाकोशल: । पुं० देशविशेषे ॥ यथा । गोकर्णेशात्पूर्वभागेआर्यावर्त्तात्तुचोत्तरे । तीरभुक्तात्पश्चिमेतुमहापुर्याश्चसर्वत: । महाकोशलदेशश्चसूर्यवंशपरायण: ॥

महाकोषातकी । स्त्री० हस्तिघोषायाम् । नेनुवां० घीयातोरई० इ० भा० प्र० शाके ॥ महाकोषातकीस्निग्धासरापित्तानिलापहा ॥

महाक्रतु: । पुं० अश्वमेधे ॥ महांश्चासौक्रतुश्च ॥

महाखर: । पुं० अश्वतरे ॥

महागद: । पुं० ज्वरे ॥

महागन्ध: । पुं० कुटजवृक्षे ॥ अम्बुवेतसे ॥ न० हरिचन्दने ॥ महान् गन्धोयस्य० यस्मिन्वा ॥ बोले ॥

महागन्धा । स्त्री० चामुण्डायांदेव्याम् ॥ केविकापुष्पे ॥ नागबलायाम् ॥

महागव: । पुं० गवये । वनगवे ॥

महागिरि: । पुं० बौद्धभेदे ॥ वृहत्पर्वते ॥

महागुरु: । पुं० मातरि ॥ पितरि ॥ आचार्ये ॥ यथा । मातापिताब्रह्मदातासर्वाम्नोगुरव: स्मृता: । इति ॥ महांश्चासौगुरुश्च । आन्मतद्गुरुत्वात्वम् ॥ स्त्रिया: पतिरेवम हागुरु: ॥

महागुल्मा । स्त्री० सोमवल्ल्याम् ॥

महागुहा । स्त्री० पृश्निपर्ण्याम् ॥

महागोधूम: । पुं० पश्चाद्देशभवेगोधूमविशेषे । बडा० गोहूं० इ० भाषा ॥

महाग्रह: । पुं० सूर्ये ॥

महाग्रीव: । पुं० उष्ट्रे ॥ त्रि० वृहत् ग्रीवायुक्ते ॥

महाघूर्णा । स्त्री० सुरायाम् ॥ महती घूर्णायस्याययावा ॥

महाघोर: । त्रि० अतिशयभयानके ॥

महाघोष: । पुं० अतिघोषणे । महाशब्दे । न० हट्टे । आपणे ॥ त्रि० वृहच्छब्दयुक्ते ॥

महाघोषा । स्त्री० कर्कटशृङ्ग्याम् ॥ कुन्दुरुक्याम् ॥

महाङ्ग: । पुं० उष्ट्रे ॥ महान्त्यङ्गान्यस्य । अनेकमितिबहुव्रीहि: ॥ गोचूर्के ॥ महामूषिके ॥ रक्तचित्रके ॥ त्रि० वृहदवयवयुक्ते ॥

महाचञ्चु पुं० वृहच्चञ्चुमतिखगे ॥ शाकविशेषे । सुचञ्चुकायाम् । दीर्घपत्र्याम् । दिव्यगन्धायाम् ॥

महाचण्ड: । पुं० कालस्यभृत्ये ॥ त्रि० प्रचण्डे ॥

महाचीन: । पुं० देशविशेषे ॥ यथा कैलासनीरंसमारभ्यसरयूपरित: प-

रे । अमरगांमहेशानिमहाचीना भिधोभवेत् ॥

महाच्छन्द : । पुं० देवताडवृक्षे ॥ बृहत्पत्रे ॥

महाच्छाय : पुं० वटवृक्षे ॥ त्रि० वृहच्छायायुक्ते ॥ महतीच्छायाऽस्य ॥

महाच्छिद्रा । स्त्री० महामेदायाम् ॥ त्रि० वृहच्छिद्रयुक्ते ॥

महाज : । पुं० वृहच्छागे ॥ त्रि० महाकुलोद्भवे । महांश्चासावजश्च ॥ महतोजायतेवा ॥

महाजटा । स्त्री० रुद्रजटायामोषधौ ॥ वृहत्सुल्यांजटायाम् ॥

महाजन : । पुं० सज्जने । साधौ ॥ यथा । वेदाविभिन्ना : स्मृतयोविभिन्नानाऽसौमुनिर्यस्यमतंनभिन्नम् । धर्मस्यतत्त्वंनिहितंगुहायांमहाजनोयेनगत : सपन्था : ॥ महाजनोपर्यनुक्रोशयुक्त : सन्नाहराजाचिवेक : । यथा । बा : पापमहामोहहतकसर्वथाहतस्त्वयायंमहाजन : । यत : । शान्तेऽनन्तमहिम्निनिर्मलचिदानन्दे तरङ्गावलीनिर्मुक्तेऽमृतसागराम्भसिमनाक्मग्नोपिनाचामति । नि : सारेमृगतृष्णिकार्णवजले च्छान्तोपिमूढ : पिवत्याधावत्यवगाहतेऽभिरमतेमज्जत्यथोमज्जतीति ॥ मन्वादौ । यथा । प्रायेणवेदतदिदंनमहाजनोयंदेव्याविमोहितमतिर्यतमाययालम् । त्रय्यांजडीकृतमतिर्मधुपुष्पितायांवैतानिकेमहतिकर्मणियुज्यमान : ॥

महाजम्बु : । स्त्री० )
महाजम्बू । स्त्री० ) वृहज्जम्ब्वाम् । राजजम्ब्वाम् ॥

महाजव : । पुं० गवये ॥ श्रीकारिमृगे ॥ त्रि० अतिशयवेगवति ॥

महाजाति : । स्त्री० वासन्त्यामलतायाम् । माधव्याम् ॥ श्रेष्ठवर्णे ॥

महाजाली । स्त्री० पीतवर्णघोषायाम् ॥ राजकोषातक्याम् ॥ जालयति । जालमाच्छादनं । णु० । पचाद्यच् । गौरादि : । महतीचासौजालीच ॥

महाज्यैष्ठी । स्त्री० नक्षत्रविशेषादियुक्तायांज्यैष्ठ्यांपूर्णिमायाम् ॥ पद्माचशब्दकल्पद्रुमम् ॥

महाज्योतिष्मती । स्त्री० लताविशेषे । तेजोवत्याम् । वङ्करसायाम् । कनकप्रभायाम् । लवणायाम् । वडीमालकांगणी० इ० भा० ॥

महाज्वाल : । पुं० यज्ञवह्नौ ॥ त्रि ख्याम् ॥

महाज्वाला । स्त्री० जिनानांविद्याधरीविशेषे ॥ वृहदग्निशिखायाम् ।

महाडीनम् । न० पक्षिण : क्षुद्रपतनेनगत्यावृत्तौ ।

महाढ्यः । पुं॰ कदम्बे ॥ त्रि॰ अतिशयधनवति ॥

महातपाः । पुं॰ विष्णौ ॥ महत्सृष्टिविषयं तपो ज्ञानमस्य । ऐश्वर्य प्रतापो वा महद्यस्य ॥

महातमप्रभा । स्त्री॰ अतिशयान्धकारमयेनरकविशेषे ॥

महातरुः । पुं॰ स्नुहीवृक्षे ॥ वृहद्वृक्षे ॥

महातलम् । न॰ पातालप्रभेदे ॥

महातारा । स्त्री॰ जिनानांदेवीविशेषे ॥

महाताली । स्त्री॰ आवर्त्तक्याम् ॥

महातिक्तः । पुं॰ महानिम्बे ॥ त्रि॰ अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री॰ यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री॰ भल्लातकवृक्षे ॥ त्रि॰ अतिशयतीक्ष्णे ॥

महातुम्बी । स्त्री॰ राजालाब्वाम् ॥

महातेजाः । पुं॰ अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा, तेजस्विनोयद्दीयेनतेजसाभास्करादयः । तत्तेजोमहदस्येतिमहातेजाः सईश्वरः ॥ शौर्यशौर्यादिभिर्धर्मैर्महद्भिः समलङ्कृतः । इतिवास्यान्महातेजाः भगवानर्हन्नीश्वरः ॥ न॰ पारदे ॥ त्रि॰ अतिशयतेजस्विनि ॥ महत्प्रकृष्टं तेजस्येत

न्यलक्षणमस्य ॥

महात्मा । त्रि॰ महामनसि । महाशये ॥ अत्यन्तशुद्धान्तःकरणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहितान्तःकरणे । शुद्धसत्त्वे । समुत्पन्नसम्यग्दर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके ॥ सर्वेश्वरे॰ सर्वज्ञे॰ परमात्मनि ॥ अच्युद्रवुद्धौ ॥ महान्अनेकजन्मसुकृतैः संस्कृतः शुद्धकामाद्यनभिभूतः॰ आत्मा ।॰ अन्तःकरणं यस्य सः ॥ महांश्चासावात्माचेतिवा ॥

महात्ययः । पुं॰ चतुर्थके॰ विषमज्वरे ॥ गम्भीरे ॥ महतिकष्टे ॥

महादण्डः । पुं॰ यमदूतप्रभेदे ॥

महादन्तः । पुं॰ गजदन्ते । ईशादन्ते ॥ वृहद्दन्तमात्रे ॥ त्रि॰ तद्वति ।

महादानम् । न॰ श्रेष्ठदाने । तुलापुरुषादिषोडशप्रकारे । यथा । आद्यन्तुसर्वदानानांतुलापुरुषसंज्ञितम् । हिरण्यगर्भदानञ्चब्रह्माण्डंतदनन्तरम् ॥ कल्पपादपदानञ्चगोसहस्रन्तुपञ्चमम् । हिरण्यकामधेनुश्चहिरण्याश्वस्तथैवच ॥ पञ्चलांगलकं तद्वद्धरादानंतथैवच । हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा ॥ द्वादशंविष्णुचक्रञ्चततः कल्पलतात्मकम् । सप्तसागरदानञ्च रत्नधेनुस्तथैवच ॥ महाभूतघटस्तद्

तृषोडश : परिकीर्त्तित : ॥
महादारु । न० देवदारुणि ॥
महादारु : । पुं० नरकान्तरे ॥
महादेव : । पुं० शिवे ॥ महाँश्चासौ-
देवश्च । आन्महतइत्यात्वम् ॥ म-
हान्देवोन्ऽस्यादिरूपाक्रीडायस्येतिवा
॥ ब्रह्मादीनांसुराणाञ्चमुनीनांब्रह्म
वादिनाम् । तेषाञ्चमहतोदेवोमहा
देवःप्रकीर्त्तितः ।।महतीपूजिताविश्वे
मूलप्रकृतिरीश्वरी।तस्यादेवः पू
जितश्चमहादेवः सचस्मृतः ॥ इ०
ब्र० वै० पु० ॥ सर्वदेवानांमहनीय
त्वाञ्चमहादेवः । तथोक्तंसाम्बपुरा-
णे । पूज्यतेयस्सुरैः सर्वैर्महांश्चैव
प्रमाणतः । धातुर्महेतिपूजायांम
हादेवस्ततस्मृतः ॥ स्कांदेपि । म
हतामपिदेवनामहमेवमहान्यतः ।
नलुमसोमहामन्योमहादेवस्ततोह्य
हमिति ॥ कोटयोब्रह्महत्यानामग
म्यागमकोटयः । सद्यः प्रलयमा-
यान्तिमहादेवेतिकीर्त्तनात्॥ महा
देवमहादेवमहादेवेतिवादिनम् ।
वत्सं गौरिवगौरीशोधावन्तमनुधाव
ति ॥ अथोक्तमथर्वशिरसि । सर्वा
न्भावान्परित्यज्यात्मज्ञानयोगैश्व
र्ये महतिमहीयतेतस्मादुच्यतेमहा-
देवइति । अस्यार्थोविष्णुसहस्रनाम
भाष्यटीकायांद्रष्टव्य : ॥
महादेवी । स्त्री० दुर्गायाम् ॥ महतो-
ब्रह्मादीनपिदेवयतिसर्गादिभिर्व्यव
हारयति० इतिमहादेवी । दिवु० ।
अच् । टित्वान्ङीप् ॥ पूज्यतेयासु
रैः सर्वैर्महतीचप्रमाणतः । धातु
र्महेतिपूजायांमहादेवीततः स्मृते
तिदेवीपुराणम् । सर्वदृश्यंमहादेवी
द्रष्टासाक्षीचसैवहीतिदेवीभागवत-
म् । द्रष्टाजीवः साक्षी० ईश्वरः ०
दृश्यंसर्वंजगत्० इदंचय सैवभगवती
भवतीत्यर्थः ॥ राज्ञ्याम् । महिष्या
म् । पट्टदेव्याम् ॥
महादैत्य : । पुं० भौत्यमन्वन्तरीयदै-
त्यविशेषे ॥ उत्कृष्टदैत्ये ॥
महाद्युति : । त्रि० ईश्वरे ॥ महती-
बाह्याभ्यन्तरव्यापिनीद्युतिश्चैतन्य
लक्षणास्यकामादिपराभवेनस्वहित
साधनोन्मुखे० पुरुषर्षभे । महती
द्युतिरस्य ॥
महाद्रिधृक् । पुं० हरौमहान्तमद्रिं-
मन्दरंगोवर्द्धनंवाऽमृतमथनेगोरक्ष-
णेवाधृतवानितिव्युत्पत्तिः फलिता
र्थकथनपरा । वस्तुतस्तुमहाद्रयेध
र्षोति० धर्तुमुप्रगल्भते । ञिधृ-
षाप्रागल्भ्ये । क्विप् । क्विन्प्रत्यय
स्यकु : ॥
महाद्रुम : । पुं० अश्वत्थे ॥ महांश्चा
सौद्रुमश्च ॥ वृहद्वृक्षे ॥
महाद्रोणा । स्त्री० देवलुरुत्वायाम् । दि
व्यपुष्पायाम् ॥

महाद्रोणी । स्त्री॰ महाद्रोणाक्षुपे ॥

महाद्वन्द्वः । पुं॰ युद्धवाद्ये ॥ अतिकलहे ॥

महाधनम् । न॰ महामूल्ये । बहुमूल्यवस्तुनि । महर्घे॰ इ॰ भा॰ । सुवर्णे ॥ सिह्लके ॥ चारुवाससि ॥ महद्धनंमूल्यमस्य ॥ कृषिकर्म्मणि॥ त्रि॰ अतिशयधनयुक्ते ॥

महाधातुः । पुं॰ स्वर्णे ॥

महाध्वगः । पुं॰ उष्ट्रे ॥

महानटः । पुं॰ महादेवे ॥

महानदः । पुं॰ नदविशेषे ॥

महानदी । स्त्री॰ पुरुषोत्तमक्षेत्रान्तर्गतनदीविशेषे । चित्रोत्पलायाम् ॥ गङ्गायाम् ॥ यथा । अम्बुजमम्बुनिजातंजातु नजायतेम्बुजादम्बु । मुरहरतश्चविपरीतंपदाम्बुजाद्यन्महानदीजाता ॥

महानन्दः । पुं॰ मुक्तौ । अधिकाह्लादे ।

महानन्दा । स्त्री॰ अमृतायाम् । सुरायाम् ॥ माघशुक्लनवम्याम् ॥ नदीविशेषे । देवीविशेषे । अट्टहासेमहानन्दादेवी ॥

महानन्दिः । पुं॰ नन्दिवर्द्धनाख्यराजपुत्रे ॥

महानरकः । पुं॰ अतिशयनानाप्रकारयातनास्थाने ॥

महानलः पुं॰ वृहदग्नौ ॥ देवनले ।

महानवमी । स्त्री॰ आश्विनशुक्लनवम्याम् ॥

महानसम् । न॰ पाकस्थाने । रसवत्याम् ॥ तत्रचरणीयजनामाख्येउक्ताः । यथा । सूदशास्त्रविधानज्ञाः पराऽभेद्याः कुलोद्गताः । सर्वेमहानसेधार्याः कृत्तकेशनखाजनाः ॥ इति ॥ पुंल्लिङ्गोप्ययमितिकश्चित् ॥ महच्चतदनञ्च । अनोश्माय: सरसांजातिसंज्ञयोरितिसंज्ञायांटच् ॥

महानसाधिकृतः । त्रि॰ पौरोगवे ॥ महानसेऽधिकृतः ॥

महानाटकम् । न॰ हनुमन्नाटके ॥ नाटकविशेषे ॥

महानाडी । स्त्री॰ कण्डरायाम् ॥

महानादः । पुं॰ कुञ्जरे ॥ वर्षुकाब्दे ॥ महास्वने ॥ ध्वनियुक्ते । कर्णे ॥ सिंहे ॥ उष्ट्रे ॥ शङ्खे ॥ कोहलायाम् ॥ महान्नादोयस्यसः ॥

महानिद्रा । स्त्री॰ मरणे ॥

महानिम्बः । पुं॰ पवनेष्टे । पार्वते । वकायन॰ ट्रेक॰ इक॰ इ॰ भाषा । महानिम्बोहिमोरूक्षस्तिक्तोग्राहीकषायकः । कफपित्तक्रमिच्छर्दिकुष्ठहृल्लासरक्तजित् ॥ प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशनः॥

महानिशा । स्त्री॰ निशामध्यभागे । निशीथे ॥ रात्रेर्मध्यस्थप्रहरद्वये ॥

यथा । महानिशातुविज्ञेयामध्यस्थंप्रहरद्वयम् । तत्रस्नानंनकुर्वीत काम्यनैमित्तिकादृते ॥ स्मृत्युक्तमहानिशासार्द्धप्रहरोपरिप्रहरद्वयमितिरघुनन्दन : । देवलोक्तामहानिशारात्रिमध्यमदण्डद्वयात्मिकासाद्वितीयप्रहरशेषदण्डतृतीयप्रहरप्रथम दण्डरूपा ॥

महानीच: । पुं॰ रजके । अतिशयहीन वर्णे ॥

महानील: । पुं॰ भृङ्गराजे । नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते॰ मणिविशेषे ॥ सिंहलस्याकरोद्भूतामहानीलास्तुतेस्मृताइत्यगस्त्योक्ते: ॥ तल्लक्षणंयथा । यस्तुवर्णस्यभूयस्त्वात् क्षीरेशतगुणेस्थित: । नीलतांतनुयात्सर्वंमहानील : सउच्यते ॥ इतिगारुडे॰ ७२ अध्याय : ॥

महानीला । स्त्री॰ महाजम्ब्वाम् ॥

महानीली । स्त्री॰ नीलापराजितायाम् ॥ वृहन्नील्याम् । शेफालिकायाम् । केशार्हायाम् ॥

महानुभाव : । पुं॰ श्रीहरौ ॥ महाशये । सुकृतिनि । महामाहात्म्ये ॥ महान्श्रुताध्ययनतपआचारादिनिबन्धनोऽनुभाव: प्रभावोयस्यस: ॥

महान्तक : । पुं॰ महेन्द्राचलपीठस्थेशिवे । स्त्री॰ देवीविशेषे ॥ महेन्द्रेचमहान्तका ॥

महापक्ष : । पुं॰ बहुपुत्रादिपरिजने ॥

महापञ्चमूलम् । न॰ वृहत्पञ्चमूले । तद्यथा । बिल्वोग्निमन्थ : श्योनाक : काश्मर्य : पाटलातथा । सर्वैस्तुमिलितैरेतै : स्यान्महापञ्चमूलकम् ॥

महापञ्चविषम् । न॰ वृहद्विषपञ्चके ॥ तद्यथा । शृङ्गीचकालकूटश्चमुस्तको वत्सनाभक : । शङ्खकर्णीतियोगोयंमहापञ्चविषाभिध : ॥

महापञ्चाङ्गुल : । पुं॰ स्थूलैरण्डे ॥

महापत्र: । पुं॰ शाकवृक्षे ॥ मानके । मानकचू॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ कन्दे ॥ त्रि॰ वृहत्पर्णयुक्ते ॥ महान्तिपत्राणियस्यस : ॥

महापत्रा । स्त्री॰ महाजम्ब्वाम् ॥

महापथ: । पुं॰ प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे ॥ विस्तीर्णपथि ॥ श्मशाने ॥ महतांपन्था : ॰ अ : ॥

महापथगम : । पुं॰ मरणे ॥

महापद्म: । पुं॰ अष्टनागान्तर्गतनागविशेषे । अतिशुक्ले । दशबिन्दुकमस्तके ॥ कुबेरस्यनवनिध्यन्तर्गतनिधिविशेषे ॥ शतकोटिसङ्ख्यायाम् । १०००००००००००० ॥ न॰ सितपद्मे ॥

महापातकम् । न॰ ब्रह्महत्यादिषु ॥

यथा । ब्रह्महत्यासुरापानंस्तेयंगुर्व्वङ्गनागमः । महान्तिपातकान्याहुस्संसर्गश्चापितैः सह ॥ महापातकजंचिह्नं सप्तजन्मसुजायते । बाधतेव्याधिरूपेणतस्यकृच्छ्रादिभिः शमः ॥ महच्चतत्पातकञ्च ॥

महापातकी । स्त्री० ब्रह्महत्याद्यन्यतमपातकयस्ते ॥ वीरहननाद्यन्यतममहापातकयस्ते ॥ यथा । वीरघातीतथापायीचीराणांस्त्रीगमस्तथा । स्तेयीमहापातकिनस्तत्संसर्गीचपञ्चमः ॥ सचपतितः ॥ यथा । महापातकिनोयेचपतितास्तेप्रकीर्त्तिताः । पतितानांनदाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः । नचाश्रुपातः पिण्डोवाकार्य्यंश्राद्धादिकंक्वचित् ॥ एतानिपतितानान्तुयः करोतिविमोहितः । तप्तकृच्छ्रद्वयेनैवतस्यशुद्धिर्नचान्यथा ॥ इतिशुद्धितत्त्वधृतंविष्णुपुराणवचनम् ॥ महापातकिनोजीवतएव । तस्योदकक्रियावच्यमाणरीत्यासपिण्डैः समानोदकैश्चग्रामाद्वहिर्गत्वाग्राम्यर्त्विग्गुरुसन्निधानेरिक्तायांनवम्यांतिथौदिनान्तेकर्त्तव्येत्याहमनुः ॥ पतितस्योदकंकार्य्यंसपिण्डैर्बान्धवैर्बहिः । निन्दितेहनिसायाह्नेज्ञात्यृत्विग्गुरुसन्निधौ ॥ दासीघटमपांपूर्णंपर्य्यस्येत्प्रेतवत्पदा ॥ अहोरात्रमुपासीरन्नशौचंबांधवैः सह ॥ निवर्त्तेरंश्चतस्मात्तु सम्भाषणसहाशने । दायाद्यस्यप्रदानञ्चयात्राचैवहिलौकिकी ॥ ज्येष्ठताचनिवर्त्तेतज्येष्ठावाप्यञ्चयद्धनम् । ज्येष्ठांशंप्राप्नुयाच्चास्ययवीयान्गुणतोधिकः ॥ प्रायश्चित्ते तुचरितेपूर्णकुम्भमपांनवम् । तेनैवसार्द्धंप्रास्येयुः स्नात्वापुण्ये जलाशये ॥ सत्वप्सुतंघटंप्रास्यप्रविश्यभवनंस्वकम् । सर्व्वाणिज्ञातिकार्य्याणियथापूर्व्वंसमाचरेत् ॥ एतमेवविधिंकुर्य्याद्योषित्सुपतितास्वपि । वस्त्रान्नपानंदेयन्तुवसेयुश्चगृहान्तिके ॥ महापातकमस्त्यस्यास्मिन्वा । इनिः ॥ पारिभाषिकमहापातकीयथा ॥ कृतप्राणप्रतिष्ठाञ्चनीचैर्य्याप्रतिमांद्विजदुर्गांनप्रणमेद्यस्तुसमहापातकीस्मृतः ॥ अपिच । पितरंमातरंभार्य्यांगुरुपत्नींगुरुंपरम् । योनपुष्णातिकापट्यात्समहापातकीभवेत् ब्र० वै० पु० ॥

महापापम् । न० महापातके ॥ अत्युत्कटपापे ॥

महापाप्मा । पुं० असुरे ॥ कामे ॥ महतः पापस्यहेतुत्वात् ॥

महापारेवतम् । न० ह्रस्वपारेवते । द्वीपखर्जूरे ॥

महापाशः । पुं० यमदूतविशेषे । इत्याशि ॥

महापासकः । पुं॰ गोमिनि । चेलुकी । बुद्धभिक्षुशिष्ये ॥

महापिण्डीतकः । पुं॰ कृष्णवर्णमदनद्रुमे । वाराहे ॥

महापिण्डीतरुः । पुं॰ वृक्षविशेषे । श्वेतपिण्डीतकी । शस्त्रकोषतरौ । शरे । पिण्डीतरौ । पेंडिरा॰ इ॰ भा॰ ॥

महापीठम् न॰ एकपञ्चाशत्पीठे ॥

महापीलुः । पुं॰ बृहत्पीलुवृक्षे । महाफले । मधुपीलौ ॥

महापुराणम् । न॰ एकादशलक्षणयुक्ते व्यासप्रणीतेऽष्टादशसङ्ख्यकपुराणविशेषे ॥ तल्लक्षणं यथा । सृष्टिश्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपालनम् । कर्मणांवासनावार्त्तामनूनाञ्चक्रमेणच ॥ वर्णनंप्रलयानाञ्चमोक्षस्यचनिरूपणम् । उत्कीर्त्तनंहरेर्देवदेवानाञ्चपृथक्पृथक् ॥ दशाधिकंलक्षणञ्चमहतांपरिकीर्त्तितम् ॥ इतिब्रह्मवैवर्त्ते कृष्णजन्मखण्डे १३२ अध्यायः ॥

महापुरुषः । पुं॰ नारायणे ॥ श्रेष्ठनरे ॥ लक्षणं वाराह्या ६७ अ॰ ॥ ब्रह्मात्माभेदज्ञानिनि॰ जीवन्मुक्ते ॥ महांश्चासौपुरुषश्च । सन्महदिति समासः । आन्महतइत्यात्वम् ॥

महापुरुषदन्ता । स्त्री॰ शतमूल्याम् ॥

महापुरुषदन्तिका । स्त्री॰ महाशतावर्य्याम् ॥

महापुष्पा । स्त्री॰ अपराजितायाम् ॥

महापृष्ठः । पुं॰ उष्ट्रे त्रि॰ बृहत्पृष्ठे ॥

महापौरुषिकः । पुं॰ वैकुण्ठनाथानुचरे ॥

महाप्रकृतिः । स्त्री॰ दुर्गायाम् ॥

महाप्रपञ्चः । पुं॰ स्थूलसूक्ष्मकारणप्रपञ्चानांसमष्टौ ॥ यथाऽवान्तरवनानांसमष्टिरेकंमहद्वनम्॰ यथाऽवान्तरजलाशयानांसमष्टिरेकोमहान् जलाशयोभवति॰ तद्वत्स्थूलसूक्ष्मकारणशरीरप्रपञ्चानामपिसमष्टिरेकोमहान्प्रपञ्चोभवतीति ॥

महाप्रभः । त्रि॰ अतिशयदीप्तियुक्ते ॥

महाप्रभावः । त्रि॰ अतिशयतेजःशक्तिविशिष्टे ॥

महाप्रभुः । पुं॰ जगन्नाथे ॥

महाप्रलयः । पुं॰ सर्वसंहारे । एककालिकसमस्तजन्यपदार्थनाशे ॥ महांश्चासौप्रलयश्च ॥ न्यायमतेजन्यभावानधिकरणकालोमहाप्रलयः॰ सचचरमध्वंसरूपः ॥

महाप्रसादः । पुं॰ विष्णुनैवेद्यादौ ॥ यथा । पादोदकञ्चनिर्माल्यंनैवेद्यञ्चविशेषतः । महाप्रसादइत्युक्त्वाग्राह्यंविष्णोःप्रयत्नतः ॥ ब्राह्मणब्रह्मनैवेद्यब्रह्मणार्पितवस्तुनि । तन्माहात्म्यंमहानिर्वाणतन्त्रेसम्यक्

निरूपितम्

महाप्रस्थानम् । न॰ शास्त्रीयेदेहत्या गविशेषे ॥ महत्॰आवृत्तिशून्यंप्र स्थानम्॰सर्पवृश्चिकसिंहव्याघ्रादि विषमभूम्याद्यपरिहारेणगमनंयाव च्छरीरपातंतन्महाप्रस्थानम्॰इत्यु च्यते ॥

महाप्राण : । पुं॰ द्रोणकाके ॥

महाप्रेत : । पुं॰ ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशि व:।एतेपञ्चमहाप्रेताभूताधिपतयो मता:॥ चत्वारोमञ्चचरणा:पञ्चम: प्रच्छद:पट:।सच्चित्प्रकाशरूपेणशि वेनाभिन्नविग्रहा: ॥ तत्रासनेसमा सीनानिर्भरानन्दरूपिणीति ॥

महाफल : । पुं॰ मालूरे । विल्वे ॥ त्रि॰ उत्कृष्टफले ॥ न॰ वृहत्फले॥

महाफला । स्त्री॰ इन्द्रवारुण्याम् ॥ राजजम्ब्वाम् ॥ तुम्ब्याम् ॥ महा कोशातक्याम् ॥ मधुबीजपुरे ॥

महाफेना । स्त्री॰ अब्धिफेने । हिण्डी रे ॥

महाबल : । पुं॰ वायौ ॥ बुद्धे ॥ न॰ सीसके ॥ त्रि॰ बलोत्कटे । बलीय सि ॥ महासामर्थ्ये ॥ महत्प्रकृष्टं बलमस्य ॥

महाबला । स्त्री॰ अतिबलायाम् । पी तपुष्पाम् । पीतबाट्यालके ॥

महाबोधि : । पुं॰ बुद्धे ॥

महाब्राह्मण : । पुं॰ निन्दितब्राह्मणे । कथ्या॰ अचारज॰ इ॰ भा॰ ॥

महाभद्रा । स्त्री॰ काश्मर्याम् ॥ गङ्गा याम् ॥

महाभट : । पुं॰ अतिशययोद्धरि ॥

महाभाग : । त्रि॰ अतिधन्ये ॥ दयाद्य ष्टगुणयोगोमहाभागता॰ तद्विशिष्टे ॥ महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमु दायोयस्यवा ॥

महाभागा । स्त्री॰ महाभवतीर्थस्थायां देव्याम् ॥

महाभारतम् । न॰ व्यासप्रणीतेतिहास शास्त्रे ॥ तन्नामकारणं यथा । एक तश्चतुरोवेदाभारतञ्चैतदेकत: । पुराकिलसुरै: सर्वै: समस्यतुलया धृतम् ॥ चतुर्भ्य : सरहस्येभ्योदेवे भ्योभ्यधिकंयदा । तदाप्रभृतिलोके स्मिन्महाभारतमुच्यते ॥ महत्वा द्भारतत्वाच्चमहाभारतमुच्यते ॥

महाभाष्यम् । न॰ पातञ्जलेव्याकरण भाष्ये ॥

महाभिलाष : । त्रि॰ महेच्छे ॥ महा नभिलाषोस्य ॥

महाभिष: । पुं॰ राजर्षिविशेषे । प्रा तीपे । शन्तनौ ॥ यथा । महाभि षोनृपोज्ञात : प्रतीपस्यसुतस्तदा । शन्तनुर्नामराजर्षिर्धर्मात्मासत्यसङ्ग रइति ॥

महाभीता । स्त्री॰ लज्जालुवृक्षे ॥ त्रि॰ अतिशयभययुक्ते ॥

महाभीम : । पुं॰ शान्तनुनृपे ॥ भृङ्गिनामकशिवद्वारपाले ॥ त्रि॰ अतिशयभयानके ॥

महाभीरु : । पुं॰ कीटविशेषे । गोपालिक॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ ग्वाली॰ इ॰ दे॰ भा॰ ॥ अतिशय भयशीले ॥

महाभीष्म : । पुं॰ शान्तनुनृपे ॥

महाभूतम् । न॰ व्योमादिपञ्चसु । भूम्यादिपंचसु ॥ महाभूतानिपंचैव खानिलाग्न्यम्बुभूमय : ॥

महाभृङ्ग : । पुं॰ नीलभृङ्गराजे ॥

महाभैरव : । पुं॰ शरभरूपिशिवरे ॥

महाभोग : । त्रि॰ नारायणे । अति सुखिनि ॥ महान्भोग : सुखरूपोऽस्य ॥

महाभोगा । स्त्री॰ दुर्गायाम् । महार्थसाधिनीदेवीमहाभोगाततः स्मृता ॥

महामण्डूक : । पुं॰ पीतमण्डूकी ॥

महामति : । त्रि॰ अतिशयबुद्धिविशिष्टे ॥

महामद : । पुं॰ मत्तगजे ॥ त्रि॰ अतिशयहर्षयुक्ते ॥

महामना: । त्रि॰ सदन्तःकरणे ॥ उत्कटे । महेच्छे । उदारे । महाशये । अक्षुद्रचित्ते ॥ सर्वश्रेष्ठोऽहमितिमन्यमाने ॥ महद्भक्षीरमन्यैरसममानंमन्यमानंमनोयस्य स : ॥ परमेश्वरे ॥ सृष्टिस्थित्यन्तकर्माखिलजगतांमनसैवकरोतीतिमहामना : ॥ मनसैवजगत्सृष्टिंसंहारञ्चकरोतियइतिविष्णुपुराणम् ॥ मनसैव॰ सङ्कल्पमात्रेणैव ॥

महामाघ : । पुं॰ योगविशेषे ॥ माघीचमघसंयुक्तामघायांचगुरुर्यदा । महामाघस्तदाप्रोक्तोव्रतोद्वाहादिवर्जयेत् ॥

महामात्र : । पुं॰ प्रधाने । अमात्ये । सेनान्यादौ ॥ समृद्धे । हस्तिपकाधिपे । हस्तिशिक्षाजीविनि ॥ महतीमात्रापरिच्छेदोऽस्य ॥

महामात्री । स्त्री॰ आचार्यपत्न्याम् ॥ महामात्रयोषायाम् ॥

महामानसी । स्त्री॰ जिनाननांविद्यादेवीभेदे ॥

महामाय : । पुं॰ हरौ ॥ मायाविनामपिमायाकारित्वात् ॥ महतीप्रकृष्टामायास्य । महामायात्वंचमायाविनामपिमयशम्बरप्रभृतीनांविविधप्रपंचविभ्रमकारिमायाप्रयोक्तृत्वात् ॥

महामाया । स्त्री॰ दुर्गायाम् ॥ ईश्वरशक्त्याम् ॥ विसदृशप्रतीतिसाधनंमाया॰ तस्याश्चमहत्त्वंसर्वविषयत्वमितिव्याख्यानात् तस्याः स्वरूपंयथा । कालिकापुराणे । गर्भान्तर्ज्ञानसम्पन्नंप्रेरितंसूतिमारुतै:

। उत्पन्नं ज्ञानरहितंकुरुतैयानिरन्तरम् ॥ पूर्वातिपूर्वसम्बद्धसंस्कारेण-नियोज्यच । आहारादौततोमोहं-ममत्वं ज्ञानसंशयम् ॥ क्रोधोपरोधलोभेषुक्षिप्त्वाक्षिप्त्वापुन: पुन: । पश्चात्कामेनसंयोज्यचिन्तायुक्तमहर्निशम् ॥ आमोदयुक्तं व्यसनासक्तं जन्तुं करोतिया । महामायेतिसाप्रोक्तातेनसाजगदीश्वरी ॥ इति ॥

महामायी । पुं॰ ईश्वरे ॥

महामायी । स्त्री॰ दुर्गायाम् ॥

महामारी । स्त्री॰ महाकाल्याम् ॥ श्मशानेशभूतायांमहाजनक्षयकर्यांदेवतायाम् । संहारशक्तौ ॥ महतीमारयतीतितथा । महतीचासौमारीचेतिवा ॥ व्याप्तंतयैतत्सकलंब्रह्माण्डं मनुजेश्वर । महाकाल्यामहा-कालेमहामारीस्वरूपया ॥ सैवकालेमहामारीसैवसृष्टिर्भवत्यजा ॥ स्थितिंकरोभूतानांसैवकालेसनातनी-तिमार्कण्डेयपुराणम् ॥ अतिशयमारके ॥

महामार्ग: । पुं॰ राजमार्गे ॥

महामालिनी । स्त्री॰ नाराचाभिधेवृत्तविशेषे ॥ यदिहनयुगलंततोविरेफैर्महामालिनीतिलक्षणम् ॥

महामाष: । पुं॰ राजमाषे । चौरा॰ लोबिया॰ इ॰ भा॰ ॥

महामुख: । पुं॰ कुम्भीरे । न॰ बृह-न्मुखे ॥ त्रि॰ तद्वति ॥

महामुण्डी । स्त्री॰ महाश्रावणिकायाम् ॥

महामुनि: । पुं॰ नारायणे ॥ अग-स्त्ये ॥ बुद्धे काले ॥ कृपाचार्ये ॥ व्यासे ॥ महांश्चासौमुनिश्च । सन्म हदितिसमास: । आन्महतइत्यात्वम् ॥ ब्रह्मविदि ॥ तुम्बुरुवृक्षे ॥ न॰ कुस्तुम्बुरुणि । धन्याके ॥

महामूर्धा पुं॰ शिवे ॥ त्रि॰ बृहन्मस्तकयुक्ते ॥

महामूल: । पुं॰ राजपलाण्डौ ॥ त्रि लिङ्गिष्टे ॥

महामूल्य: । पुं॰ पद्मरागे ॥ न॰ महार्घे ॥ त्रि॰ तद्वति ॥

महामूषिक: । पुं॰ वृहद्दुंदुरौ । महाखौ ॥

महामृग: । पुं॰ हस्तिनि ॥ शरभे ॥

महामृत्युञ्जय: । पुं॰ मृत्योर्मृत्युका रे शिवमन्त्रविशेषे ॥ निश्यष्टशतं जपत्वामृत्युंमृत्युपथं नयेत् ॥

महामेघ: । पुं॰ अतिशयमेघे ॥

महामेद: । पुं॰ अष्टवर्गाङ्गौषधे ॥ पुरीक्षवे । बृहन्मेदे ॥

महामेदा । स्त्री॰ अष्टवर्गाङ्गौषधविशेषे । वसुच्छिद्रायाम् । जीवन्याम् । पांशुरागिण्याम् ॥ महामेदाभिध: कन्दोमोरङ्गादौप्रजायते । शुक्लार्द्रकनिभ :कन्दोलताजात:सुपाण्डुर:

महामेदाभिधः प्रोक्तोऽन्यो भावप्रकाशके । मेदायुग्मं गुरुस्वादु वृष्यं स्तन्यकफापहम् । हृद्यं शीतलं पित्तरक्तवातज्वरप्रणुत् ॥ तस्याच लाभे यद्धा स्थानेशतावरीदेया॥

महामेघः । पुं० बुद्धभेदे ॥ * ॥

महामोहः । पुं० भोगेच्छारूपाज्ञाने ॥ महामोहस्तुविज्ञेयोग्राम्यभोगसुखैषणा ॥ रागे । विषयं यविशेषे सदशविध । शब्दादिषु पञ्चसु दिव्यादिव्यतयादशविधेषु विषयेषु रञ्जनीयेषु रागः ० आसक्तिर्महामोहः ० सचदशविधविषयत्वा दशविधः ॥

महामोहा पुं० शिवप्रिये धत्तूरे ॥ त्रि० महामोहविशिष्टे ॥

महाम्बुजः । पुं० नरकान्तरे ॥

महाम्लम् । न० तिन्तिडीके । वृक्षाम्ले ॥

महायक्षः । पुं० इन्द्रोपासकविशेषे ॥

महायज्ञः । पुं० अध्यापनादिपंचसु ॥ पाठोहोमश्चातिथीनांसपर्यातर्पणं बलिः । एते पञ्चमहायज्ञाब्रह्मयज्ञादिनामकाः ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तुतर्पणम् । होमो दैवोबलिभौतो नृयज्ञोऽतिथिपूजनम् ॥ अहुतञ्चहुतञ्चैवतथाप्रहुतमेवच । ब्राह्म्यंहुतं प्राशितञ्चपञ्चयज्ञान्प्रचक्षते ॥ जपोऽहुतो हुतोहोमः प्रहुतोभौतिकोबलिः । ब्राह्म्यंहुतद्विजाग्र्यार्चाप्राशितंपितृतर्पणम् ॥ पञ्चैतान्योमहायज्ञान्नहापयतिशक्तितः । सगृहेऽपिवसन्नित्यं सूनादोषैर्नलिप्यते ॥ देवताऽतिथिभृत्यानांपितॄणामात्मनश्चयः । ननिर्वपतिपञ्चानामुच्छ्वसन्नसजीवति ॥ अपिच । एते पञ्चमहायज्ञाब्रह्मणानिर्मितापुरा । ब्राह्मणानांहितार्थायइतरेषांच तन्मुखाः ॥ इतरेषांचवर्णानांब्राह्मणैः कारिताः शुभाः ॥ एवंकृत्वानरो भुक्त्वाऽन्नंहरिशीविशुद्ध्यति । अन्यथाऽन्नीयोऽप्यतएकोऽन्नगर्दभिणः ॥ मन्तव्यादाद्यभोक्तॄणांमहामांसंतु तद्भवेत् ॥ इ० वराहपुराणे ॥

महायशाः । पुं० भूताङ्कविशेषे ॥ न० काव्यभेदे ॥ त्रि० लोकेवेदेच प्रसिद्धविभवे ॥ अतिशययशोयुक्ते ॥

महायशस्कः । त्रि० अतिशययुक्ते ॥

महायोगी । पुं० अद्रिकूटपीठस्थे शिवे ॥

महारजतम् । न० स्वर्णे । धुस्तूरे ॥ बृहद्रौप्ये ॥ महच्चतद्रजतंच । सन्महदितिसमासः । आन्महतइत्यात्वम् ॥

महारजनम् । न० कुसुम्भे । कसूंभा० इ० भा० ॥ शातकुम्भे । स्वर्णे ॥ रज्यतेऽनेन । रञ्जरागे ।

ल्युट्। रजकरजनरञ्जनरजस्सु प सङ्ख्यानान्नलोप :॥ रञ्जे : क्युन् वा ॥ महच्चतद्रञ्जनंच। सन्महदिति समास : ।।

महारण्यम्। न॰ घरण्यान्याम् ॥ महच्चतदरण्यञ्च। सन्महत्परमोत्तमोत्कृष्टा : पूज्यमानैरितिसमास:। चान्महतइत्यात्त्वम् ॥

महारत्नम्। न॰ मुक्तादिनवसु ॥ मुक्ताफलहीरकञ्चवैदूर्यंपद्मरागकम्। पुष्परागञ्चगोमेदंनीलंगारुत्मतं तथा ॥ प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव ॥

महारथ :। पुं॰ रथिकविशेषे । षयुतधन्विभि : सहयोद्धरि ॥ यथा। एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम्। शस्त्रशास्त्रप्रवीणश्चमहारथइतिस्मृत : ॥ अपिच । आत्मानंसारथिञ्चाश्वान्रक्षन्युद्ध्येत योनर :। समहारथसंज्ञ : स्यादित्याहुर्नीतिकोविदा: । शिवे ॥ बिष्णौ । महान्महात्मा॰नन्दी॰गरुडोवारथोयस्यस : ॥

महारक्षम्। न॰ गडलवणे । सांभर॰हू॰भा॰ ॥

महारस :। पुं॰ खर्जूरे ॥ कोशकारे। इक्षुविशेषे। कौसिआर॰हू॰ भा॰ ॥ कशेरुणि ॥ पारदे। रसेन्द्रे ॥ न॰काञ्जिके ॥

महारसाष्टकम्। न॰ हिङ्गुलाद्यष्टकम् ॥ यथा। दरदंपारदः सस्यैवे आम्लंकान्तमभ्रकम्। माक्षिकंविमलश्चेतिस्युरेतेष्टौमहारसा : ॥

महाराज :। पुं॰ बुद्धभेदे। मञ्जुघोषे ॥ असपत्नराज्यइति । नृपश्रेष्ठे ॥

महाराजचूत :। पुं॰ उत्तमाम्रे । मन्मथानन्दे ॥

महाराजद्रुम :। पुं॰ आरग्वधे

महाराजिक :। पुं॰ गणदेवताविशेषे ॥ सत्यसुधन्वसवनाद्योविंशत्यधिकशतद्वयसङ्ख्यातागौरवाग्रदर्शिता :। महाराजिकनामानो द्विशतेविंशतिस्तथा ॥ महतीराजि: पङ्क्तिर्येषामितिविग्रहेशैषादिभाषेतिकञ् ॥

महारात्रि :। स्त्री॰ महाष्टम्याम् ॥ अर्द्धरात्रात्परंमुहूर्त्तद्वये ॥ ब्रह्मलयोपलक्षितायांमहाप्रलयरात्राम् ॥ ब्रह्मणस्तुनिपातेचमहाकल्पो भवेन्नृप। प्रकीर्त्तितामहारात्रि : साएवचपुरातनैरितिब्र॰बै॰पु॰।

महाराष्ट्र :। पुं॰ देशविशेषे ॥ त्रिपञ्चकंसमारभ्यमध्येचोज्जयिनीशिवे। मार्जारतीर्थंराजेन्द्रकोलापुरनिवासिनी ॥ तावद्देशोमहाराष्ट्र : कर्णाटस्वामिगोचर :। इ॰शक्तिसङ्गमे ७ पटल : । अपिच। नैऋतेतु

विडामत्त महाराष्ट्रासुरैवत : । जवन : पह्लव : सिन्धु : पारसीकादयोमता : ॥ इ० ज्योतिषतत्वे कूर्मचक्रं ।
महाराष्ट्री । स्त्री० जलपिप्पल्याम् ॥ शाकविशेषे । मरैठी० इ० भा० । भाषाप्रभेदे ।
महारिष्ट : । पुं० महानिम्बे । गिरिनिम्बे ।
महारुद्र : । पुं० महादेवे ।
महारूप : । पुं० शिवे
महारूपकम् । न० नाटके ॥
महारोग : । पुं० पापरोगे ॥ सचाष्टविधोयथा । उन्माद : १ । त्वग्दोष: २ । राजयक्ष्मा ३ । श्वास: ४ । मधुमेह : ५ । भगन्दर : ६ । उदर : ७ । अश्मरी ८ । इति ॥
महारोगी । त्रि० महारोगयुक्ते ॥
महारौरव : । पुं० नरकान्तरे ॥ महारौरवसंज्ञन्तु अधोर्द्ध्वं ताम्रसम्पुटम् । धम्यते वह्निराशिभिरैर्गुरुदारापनायक : ॥ देवद्रव्यापहारीचपच्यते कालमव्ययम् ॥ महान्रौद्रोरवोऽत्र । शकन्ध्वादित्वाद्रलोप : । यद्वा । रुरुभीरश्रृङ्गाख्योमृग: ० महतोरुरोरयम् । अण् ॥
महार्घ : । पुं० लावकाख्यपक्षी ॥ त्रि० महामूल्ये ॥
महार्णव : । पुं० महासमुद्रे ॥

महार्थ : । पुं० परमार्थे ॥
महार्द्र : । पुं० वृक्षविशेषे । महाजा इ० गौ० दे० भा० ॥
महाद्रुम् । न० चन्दने ॥
महाद्र्रकम् । न० वनार्द्रके ॥
महार्बुदम् । न० दशार्बुदे । शतकोटि १०००००००००० सङ्ख्यायाम् । अब्जे ॥
महार्ह : । पुं० शिवे ॥ मह : पूजा० तामर्हति । अर्हइतिसूत्रात्त्वर्हते: कर्मण्युपपदेअच्प्रत्यय : ॥ न० श्वेतचन्दने ॥
महालक्ष्मी : । नारायणशक्त्याम् । राधायाम् ॥ यन्मायया मोहिताश्च ब्रह्मविष्णुशिवादय : । वैष्णवास्तां महालक्ष्मींपरांराधांवदन्तिते ॥ यद्वाङ्गामहालक्ष्मी : प्रियानारायणस्यचेति ब्र० वै० पुराणम् ॥
महालय : । पुं० विहारे ॥ तीर्थमहाभागादेव्यास्थेचे ॥ परमात्मनि ॥ पितृणामुत्सवाश्रयेकन्यागतापरपक्षे कन्यागत० इ० भा० ॥
महालसा । स्त्री० देवीविशेषे ॥ दक्षिणदेशे० महादिस्थानमितिविख्याते० देवीस्थाने ॥
महालिकटभी । स्त्री० श्वेतकिणिही वृक्षे ॥
महालीलसरस्वती । स्त्री० तारादेव्या : प्रभेदे ॥ लीलयावाक्प्रदाचेतितेन

लीलसरस्वती ॥

महालोध्र: । पुं० लोध्रे । पटियालो ध० हू० भा० ॥

महालोल: । पुं० काके ॥ त्रि० अतिचञ्चले ॥

महालोहम् । न० अयस्कान्ते ॥

महावनम् । न० महारण्ये ॥ वृन्दावनस्यचतुरशीतिवनान्तर्गतवनविशेषे ॥

महावप्र: । पुं० महामेदे ॥

महावरा । स्त्री० दूर्वायाम् ॥

महावराह: । पुं० आदिवराहे ॥ महांश्चासौवराहश्च । महत्त्वञ्चास्यातिविपुलशरीरधारणात्पृथिव्युद्धरणाय ॥

महावरोह: । पुं० प्लक्षवृक्षे ॥

महाबलि: । पुं० नरबलौ ॥

महावल्ली । स्त्री० माधवीलतायाम् ॥

महावस: । पुं० शिशुमारे ॥

महावाक्यम् । न० परमार्थबोधकेवैदिकोपदेशवाक्यविशेषे । सङ्ख्यापरपर्यायेप्रतिष्ठादावुत्सर्गवाक्ये ॥ योग्यताकांक्षासत्तियुक्तवाक्यसमूहे ॥

महावारुणी । स्त्री० तिथिविशेषे ॥ सायथा । शनिवारसमायुक्तासामहावारुणीस्मृता । गङ्गायांयदिलभ्येतकोटिसूर्यग्रहै: समा ॥ सा० वारुणीत्यर्थ: ॥ महामहावारुणी तु । यथा । शुभयोगसमायुक्ताशनौशतभिषायदि । महामहेतिविख्याताभिषकोटिकुलमुद्धरेत् ॥

महावाहु: । पुं० स्कन्दे ॥ श्रीरामे ॥ महाबाहुश्रीविष्णुर्यस्य । अस्यवाहीर्मह्त्त्वंचोक्तंयुद्धकांडे । पिशाचान्दानवान्यक्षान्पृथिव्यांचैवराक्षसा: अङ्गुल्यग्रेणतान्हन्यामिच्छन्हरिगणेश्वरेति ॥

महाविद्या । स्त्री० देवताविशेषे ॥ यथा । कालीतारामहाविद्याषोडशीभुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावतीतथा । वगलासिद्धविद्याचमातङ्गीकमलात्मिका । एतादशमहाविद्या: सिद्धविद्या: प्रकीर्त्तिता: ॥ तासांदशावतारत्वं यथा । प्रकृतिर्विष्णुरूपाचपुंरूपश्चमहेश्वर: । एवंप्रकृतिभेदेनभेदास्तुप्रकृतेर्दश । कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । वगलाकूर्ममूर्तिस्यान्मीनोधूमावतीभवेत् ॥ छिन्नमस्ता नृसिंह: स्याद्वराहश्चैवभैरवी । सुन्दरीयामदग्न्य: स्याद्वामनोभुवनेश्वरी ॥ कमलावौद्धरूपास्याद्दुर्गास्यात्कल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयञ्चभगवान्कृष्ण: कालीरूपोभवद्व्रजे ॥

महाविराट् । पुं० महाविष्णौ ॥

महाविलम् । न० नभसि वृहच्छिद्रे ॥

महाविष: । पुं० द्विमुखसर्पे । काल

सर्पे ॥
महाविषम् । न॰ मेषसङ्क्रान्तौ ॥
मसूरं निम्बपत्राभ्यां योऽत्तिमेषग
तेरवौ । अपिरोषान्वितस्तस्य तक्षकः
किं करिष्यति ॥
महाविष्णुः । पुं॰ महाविराजि ॥
महावीचिः । पुं॰ नरकविशेषे ।
महावीचियं वमहाकल्लोलमतुमीय
ते ॥
महावीध्यम् । न॰ विटपे । मुष्कव
ङ्क्षणयोरन्तरे ॥
महावीरः । पुं॰ गरुडे ॥ शूरे ॥
सिंहे ॥ महानले । यज्ञाग्नौ ॥
वज्रे ॥ श्वेततुरङ्गे । अन्तिमजि
ने ॥ कोकिले ॥ लक्ष्मणे । हनुम
ति ॥ एकवीरवृक्षे ॥ सन्धानविह
गे । जराटके ॥ कामदेवे । मारे ॥
महावीरा । स्त्री॰ क्षीरकाकोल्याम् ॥
महावीर्य्यः । पुं॰ ब्रह्मणि । महदु
त्पत्तिकारणमविद्यालक्षणं वीर्यम
स्य ॥ बुद्धभेदे । वाराहीकन्दे ॥
त्रि॰ महाप्रभावे । अतिशयबलयुक्ते ॥
महावीर्य्या । स्त्री॰ संज्ञायाम् । सूर्य
पत्न्याम् ॥ वनकार्पास्याम् ॥ महा
शतावर्य्याम् ॥
महावृक्षः । पुं॰ स्नुहीद्रुमे ॥
महावृहती । स्त्री॰ वार्ताक्याम् ॥
महावेगः । त्रि॰ अधिकवेगवति ॥
महाव्याधिः । पुं॰ कुष्ठादिमहारोगे ॥

महाव्रणम् । न॰ दुष्टव्रणे ॥
महाव्रतम् । न॰ द्वादशवार्षिकव्रते ॥
यथा । ते नवधकालादूर्ध्वं विंशक
ऽधिकशतस्य यावदवदिष्टं तावत्प
रिमाणमहाव्रतानुरूपार्धे नवोदात
व्याः शरत्कालिकदुर्गापूजने ॥ य-
था । महाव्रतं महापुण्यं शङ्कराद्यै
रनुष्ठितम् । कर्त्तव्यं सुरराजेन्द्र दे
वीभक्तिसमन्वितैः ॥ अरुणोदय
कालिकमाघस्नाने ॥ अस्तिप्रयोग
शास्त्रे ऽत्रविशेषः । सयथा । अहिं
सासत्यास्तेयब्रह्मचर्य्यापरिग्रहाय
माः ॥ ३० ॥ एते जातिदेशकाल
समयाऽनवच्छिन्नाः सार्वभौमाम
हाव्रतम् ॥ ३१ ॥ येचाहिंसाद्याः
पंचयमाउक्तास्तएवजात्याद्यनवच्छे
देन॰दृढभूमयोमहाव्रतशब्दवाच्याः
तत्राहिंसाजात्यवच्छिन्नायथा॰ मृग
योमृगातिरिक्तान्नहनिष्यामीति
॰ सैवकालावच्छिन्नायथा॰ नचतु
र्दश्यांनपुण्येऽहनीतिसैवप्रयोजन
विशेषरूपसमयावच्छिन्नायथा॰ च-
त्रियस्यदेवब्राह्मणप्रयोजनव्यतिरे
केणनहनिष्यामीति॰युद्धंविनानह
निष्यामीतिच । एवंविवाहादिप्र
योजनव्यतिरेकेणानृतं नवदिष्या
मीति । एवमापत्कालव्यतिरेकेण
सुहृदयादृव्यतिरिक्तः स्तेयं नकरि
ष्यामीति । एवमृतुकालव्यतिरिक्त

कालेपत्नींनगमिष्यामीति । एवं गुर्वादिप्रयोजनमन्तरेणनपरिग्रहीष्यामीति॰यथायोग्यमवच्छेदोद्रष्टव्य: । एतादृगवच्छेदोपरिहारेण यदासर्वजातिसर्वदेशसर्व्वकाल सर्वप्रयोजनेषुभवा: सार्वभौमा अहिंसादयोभवन्तिमहताप्रयत्नेन परिपाल्यमानत्वात्॰तदातेमहाव्रतशब्देनोच्यन्ते । एवंकाष्ठमौनादिव्रतमपिद्रष्टव्यम् । एतादृशव्रतदार्ढ्येच॰कामक्रोधलोभमोहानांचतुर्णामपिनरकद्वारभूतानांनिवृत्ति:। तत्राहिंसयाक्षमयाचक्रोधस्य॰ब्रह्मचर्य्येणवस्तुविचारेणचकामस्य॰अस्तेयापरिग्रहरूपेणसन्तोषेणलोभस्यसत्येनयथार्थज्ञानरूपेणविवेकेनमोहस्य॰तन्मूलानाञ्चसर्वेषांनिवृत्तिरितिद्रष्टव्यम् । इतराणिचफलानिसकामानांयोगशास्त्रेकथितानि॥

महाव्रती । पुं॰ शिवे ॥ उरस्कटे ॥ त्रि॰महाव्रतयुक्ते ॥

महाशक्ति: । पुं॰ कार्त्तिकेये ॥ हरौ ॥ महतीशक्ति:सामर्थ्यमस्य॥ अतिशयपराक्रमे ॥ स्त्री॰मायाशबलब्रह्मरूपिण्याम् । निर्गुणायाम् ॥ त्रि॰ तद्युक्ते ॥

महाशङ्ख: । पुं॰ नरास्थनि । कर्णनेत्रयोर्मध्यगतास्थ्नि ॥ कर्णनेत्रान्तरालास्थिमहाशङ्ख: प्रकीर्त्तित: ॥ दशनिखर्वे १०००००००००००० । निधिप्रभेदे ॥ अलिके । ललाटे ॥ वृहच्छङ्खे ॥ याज्ञायोगान्तरे । यथा । स्त्रीस्वस्थेलाभगेशुक्रेत्रिकष्टेदेवपूजिते । महाशङ्खाख्ययोग: प्रतिपद्यापमानद: ॥

महाशठ: । पुं॰ राजधत्तूरे ॥ त्रि॰ अतिधूर्त्ते ॥

महाशणपुष्पिका । स्त्री॰ वृहच्छणपुष्प्याम् । वृत्तपर्ण्याम् । श्वेतपुष्पायाम् ॥

महाशता । स्त्री॰ महाशतावर्याम् ॥

महाशतावरी । स्त्री॰ सहस्रवीर्यायाम् । सुरसायाम् । शतवीर्यायाम् । महाशतावरीमेध्याहृद्यावृष्यारसायनी । शीतवीर्यानिहन्त्यर्शोग्रहणीनयनामयान् ॥

महाशन: । पुं॰ विष्णौ ॥ कल्पान्ते सर्वंग्रसनात्महत्अशनंसंहार्य्यमस्य । महाभैरवे ॥ कामे ॥ महदशनंविषयजातंयस्य स: ॥ असुरे ॥ त्रि॰अतिभक्षणशीले ॥

महाशफर: । पुं॰ पफसाख्यमत्स्ये ॥ महाशफरसंज्ञस्तुतिक्त: पित्तकफापह: । शिशिरोमधुरोरुच्योवातसाधारण: स्मृत: ॥

महाशय: । त्रि॰ महेच्छे ॥ महान्आशयोयस्य ॥ पुं॰समुद्रे ॥

महाशय्या । स्त्री० राजतल्पे ॥ बृह-च्छय्यायाम् ॥

महाशर : । पुं० स्थूलशरे ॥

महाशल्क : । पुं० चिङ्गटमत्स्ये ॥

महाशाक : । पुं० शाकवृक्षे ॥

महाशाखा । स्त्री० नागवलायाम् ॥

महाशाल : । पुं० महागृहस्थे । विस्तीर्णाभि : शाखाभिर्युक्ते । सम्पन्ने ॥ महतीविस्तीर्णाशाला०गृहंयस्यस : ॥

महाशालि : । पुं० स्थूलशालौ । सुगन्धिके ॥ महान्श्रेष्ठ : शालि: ॥

महाशिव : । पुं० महादेवे ॥

महाशीता । स्त्री० शतमूल्याम् ॥

महाशुक्ति : । पुं० मुक्तामातरि ॥

महाशुक्ला । स्त्री० सरस्वत्याम् ॥ त्रि० अतिशुक्लवर्णयुक्ते ॥

महाशुभ्र : । त्रि० अतिशुभ्रवर्णयुक्ते ॥ न०रजते ॥

महाशूद्र : पुं० आभीरे ॥

महाशूद्रा । स्त्री० महत्यांशूद्रायाम् ॥ महतीशूद्रेतिविग्रह : ॥

महाशूद्री । स्त्री० आभीर्याम् ॥ महाशूद्रस्यस्त्री०जातीयावा । पुं०योगादिति०जातेरितिवाङीष् ॥

महाशोण्डी । स्त्री० श्वेतकिणिहीवृक्षे ॥

महाशौषिर : । पुं० दंतरोगविशेषे ॥ दन्ताश्चलन्तिवेष्टेभ्यस्तालुचाप्यवदीर्यते । दन्तमांसानिपच्यंतेमुखञ्चपतुद्यते ॥ यस्मिन्ससर्वजोव्याधिर्महाशौषिरसंज्ञित : ॥

महाश्मशानम् । न० आनन्दवने । काश्याम् ॥ महांत्यपिचभूतानिप्रलयेसमुपस्थिते । शेरतेऽत्रशवाभूत्वाश्मशानन्तुततोभवेत् ॥ वाराणसीतिविख्याताऽरुद्रावासइतिद्विज : । महाश्मशानमित्येवंप्रोक्तमानन्दकाननम् ॥

महाश्यामा । स्त्री० शिंशपावृक्षे ॥ श्यामलतायाम् ॥

महाश्रम : । पुं० तीर्थविशेषे ॥

महाश्रमण : । पुं० बुद्धभेदे । शाक्यमुनौ ॥

महाश्रावणिका । स्त्री० कदम्बपुष्प्याम् । महामुण्डाम् ॥

महाश्री : । स्त्री० बुद्धशक्त्यन्तरे । तारायाम् ॥

महाश्रोत्रिय : । पुं० महत्त्वेसतिश्रुताऽध्ययनवृत्तसम्पन्ने ॥ महांश्चासौश्रोत्रियश्च ॥

महाश्वेता । स्त्री० शुक्लभूकूष्माण्डे । क्षीरगन्धिकायाम् ॥ कृष्णभूमिकूष्माण्डे ॥ सरस्वत्याम् ॥ श्वेतापराजितायाम् । सितायाम् ॥ मधुजायाम् । श्वेतकिणिहीवृक्षे ॥ दुर्गायाम् ॥ महतीचासौश्वेताच ॥

महाषष्ठी । स्त्री० दुर्गायाम् ॥

महाष्टमी । स्त्री० आश्विनशुक्लाष्टम्याम्

। शरत्कालोद्भवायातुसैवप्रोक्ताम हाष्टमी। मद्दारात्रिरितिख्यातातस्या मम्बांयजेत्सुधी :॥ अष्टम्यांरुधिरैर्मांसैर्मद्दामांसे : सुगंधिभि :। पूजयेद्बहुजातीयैर्बलिभिर्भोजनै : शिवाम् । सिन्दूरै: पट्टवासोभिर्नानाविधविलेपनै :। पुष्पैरनेकजातीयै: फलैर्बहुविधैरपि॥ उपवासंमद्दाष्टम्यां पुत्रवान्नसमाचरेत् । यथातथैवपूतात्माव्रतीदेवींप्रपूजयेत् ॥ पूजयित्वामद्दाष्टम्यांनवम्यांबलिभिस्तथा । विसर्ज्जयेद्दशम्यान्तुश्रवणे तांवरोत्सवै : तत्रार्द्धरात्रपूजा यथा । कन्यासंस्थेरवाविषे शुक्लाष्टम्यांप्रपूजयेत् । सोपवासोनिशार्द्धेतुमद्दाविभवविस्तरै :। पूजांसमारभेद्द्व्यानत्वर्चेबारुणेपिवा । पशुघातश्चकर्त्तव्योगवलावधस्तथेतिदेवीपुराणे वारुणपदेनपूर्वाषाढोच्यत इतिरघुनन्दन :॥ मद्दाष्टम्युपवासे पारणन्तु । अष्टम्यांसमुपोष्यैव नवम्यामपरेऽहनि। मत्स्यमांसोपहारेणदद्यान्नैवेद्यमुत्तमम् ॥ तेनैवविधिनान्नन्तुस्वयंभुञ्जीतनान्यथेति ॥

मद्दासन्न :। पुं॰ कुवेरे ॥ त्रि॰ अतिनिकटे ॥

मद्दासमङ्गा। स्त्री॰ वृहद्वलायाम् । खिरहिट्याम् । बलायाम् । कगहियाकंघी॰ खरैटी॰ इ॰भा॰ ॥

मद्दासर्ज्ज :। पुं॰ असनवृत्ते ॥ पनसे ॥

मद्दासह :। पुं॰ कुब्जकवृत्ते ॥ त्रि॰ अतित्तमे ॥

मद्दासहा। स्त्री॰ माषपर्ण्याम् । अम्लाने। कठसरैय्या॰इ॰भा॰ ॥ मद्दतीचासौसहाच। सन्महदितिसमास :। आत्महतद्दत्याात्वम् ॥

मद्दासन्तापनम्। न॰ व्रतविशेषे ॥ अत्रयाज्ञवल्क्य :। कुशोदकञ्चगोत्तीरंदधिमूत्रंशकृत्घृतम् । जग्ध्वापरेऽह्न्युपवसेत्कृच्छ्रंसान्तपनंचरन् ॥ द्व्यहसाध्यसान्तपनमुक्त्वाह। पृथक्सान्तपनद्रव्यै : षडह : सोपवासक :। सप्ताहेनैवकृच्छ्रोयंमद्दासान्तपनंस्मृतम् ॥ मद्दासान्तपनंधेनुषट्कदानसमम् ॥

मद्दासार :। पुं॰ दुष्खदिरे ॥ त्रि॰ युक्तियुक्ते ॥

मद्दासाहसम्। न॰ अतिबलात्कारकृतकार्ये ॥ अतिशयदण्डे ॥

मद्दासाहसिक :। त्रि॰ अतिसाहसयुक्ते ॥ प्रसह्यापहारिणि ॥ मद्दांश्चासौसाहसिकश्च ॥

मद्दासिंह :। पुं॰ शरभे ।पर्वताश्रये ॥ देव्या : सिंहे ॥ यथा। तीक्ष्णदंष्ट्र : करालास्य : शटाशोभितकन्धर :।

चतुरङ्गिर्वञ्चनखोमहासिंह : प्रकीर्त्तितइति ॥

महासुख : । पुं॰ बुद्धे ॥ न॰ क्रीडारले । प्रचुरसुखे ॥ त्रि॰ तद्दति ॥

महासुगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥ त्रि॰ अतिसुगन्धयुक्ते ॥

महासूक्ष्मा । स्त्री॰ वालुकायाम् ॥ त्रि॰ अतिशयसूक्ष्मे ॥

महासेन : । पुं॰ कार्त्तिकेये ॥ महासैन्यपतौ ॥ बौद्धभेदे ॥ महतीसेनाऽस्य ॥

महास्कन्ध : । पुं॰ शरभे ॥ त्रि॰ उच्चतस्कन्धयुक्ते ॥

महास्कन्धा । स्त्री॰ जम्बूवृक्षे ॥

महास्कन्धी । पुं॰ शरभे ॥

महास्थली । स्त्री॰ पृथिव्याम् ॥ श्रेष्ठस्थाने ॥

महास्नायु : । पुं॰ काण्डरायाम् ॥

महास्रग्वी । पुं॰ शिवे ॥

महास्वन : । पुं॰ वाद्यप्रभेदे । महातूर्ये ॥ विष्णौ ॥ महानूर्ज्जित : स्वन : नादोऽस्य । यद्वा । महान् स्वन : श्रुतिलक्षणोनादोऽस्य ॥ सम्महदितिसमासे॰आत्वम् । उच्चशब्दे ॥ त्रि॰ तद्दति ॥

महाहनु : । पुं॰ शिवे ॥ हनूमति ॥ त्रि॰ उच्चहनुयुक्ते ॥

महाहवि : । न॰ गोघृते ॥ ब्रह्मणि ॥ महच्चतद्धविश्च॰ब्रह्मात्मनिसर्वंजगत्तदात्मतयाहूयतेइतिमहाहवि : । यद्वामहाग्निहवींषिचाज्यपुरोडाशपशुसोमादिरूपाण्यस्य॰ इन्द्रादिदेवतारूपस्ययजमानरूपस्यवेतिमहाहवि : ॥

महाह्रास : । पुं॰ अट्टहासे ॥

महाहिगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥

महाह्रस्वा । स्त्री॰ कपिकच्छ्वाम् । शूकशिम्ब्याम् ॥ त्रि॰ अतिखर्वे ॥

महि । अ॰ महिमनि ॥

महि : । स्त्री॰ भूमौ ॥ मह्यते । मह पूजायाम् । चुरादिरदन्त : । सर्वधातुभ्य इन् । ण्यन्तादचाद्यङ् : ॥

महिका । स्त्री॰ हिमे ॥ मह्यते । मह॰ । क्वुन्शिल्पिसंज्ञयो : ॥

महित : । त्रि॰ पूजिते ॥ मह्यतेस्म ॥ मह॰ । मतिबुद्धिपूजार्थेभ्यश्चेतिक्त : ॥

महिनम् । न॰ राज्ये ॥ त्रि॰ पूजनीये ॥ मह्यते । मह॰ । महेरिनण्चेतिपक्षेइनन् ॥

महिमा । पुं॰ शिवैश्वर्ये । ऐश्वर्यातिशये । भूतिप्रभेदे ॥ महान्भवति॰येनसमस्तब्रह्माण्डेपिनसमवैति । विभूतिविस्तारे । आत्मन : कर्मनिमित्तवृद्धिचयराहित्ये । महतोभाव : । पृथ्वादित्वादिमनिच् । उत्कर्षे ॥

महिमभृत् । त्रि॰ ऐश्वर्यवति ॥

महिर : । पुं॰ पौषे । मिहिरे । सूर्ये ॥

दूतिविकाण्डशेषः॥

महिला। स्त्री० फलिन्याम्। गुन्द्रायाम्। प्रियङ्गौ॥ स्त्रियाम्। योषिति॥ रेणुकानामगन्धद्रव्ये॥ मदमत्तायाम्योषायाम्॥ महति० मह्यतेवा। मह०। सलिकल्यौति०इलच्। टाप्॥

महिलाह्वया। स्त्री० श्यामायाम्। प्रियङ्गौ॥ महिलायाआह्वयोयस्याः॥

महिषः। पुं० लुलाये। कासरे। यमवाहने। भैंसा० हि० भा०॥ महिषस्यामिषंस्वादुस्निग्धोष्णंवातनाशनम्। निद्राशुक्रबलस्तन्यतनुदार्ढ्यकरंगुरु॥ हष्यस्वेष्टिविण्मूत्रंवातपित्तास्रनाशनम्॥ महति० मह्यतेवा। मह०। अविमह्योष्टिषच्। यद्वामंहतेमहिषइतिटिषच्। आगमशासनस्यानित्यत्वान्नलुम्॥ अर्हध्वजविशेषे॥ असुराधिपविशेषे। महिषासुरे॥ श्मश्रुधारिणिस्वजातिविशेषे॥ पुरायंचक्षियआसीत्सगरेणास्यवेदाध्ययनधिकारोविशान्यत्वंधर्मनाशश्चकृतः॥

महिषकन्दः। पुं० महाकन्दविशेषे। शुभ्रालौ॥

महिषघ्नी। स्त्री० दुर्गायाम्॥

महिषध्वजः। पुं० यमे॥ अर्हद्विशेषे॥ महिषोध्वजोयस्य॥

महिषमर्द्दिनी। स्त्री० दुर्गायाम्॥

महिषवल्ली। स्त्री० लताविशेषे। सौम्यायाम्॥

महिषवाहनः। पुं० यमे॥

महिषाक्षः। पुं०)

महिषाख्यः। पुं०) गुग्गुलौ। भृङ्गाञ्जनसमप्रभे॥

महिषाक्षादि। न० महिषाक्षादिपञ्चाङ्गणे॥ यथा। महिषाक्षस्तथा रालंनिर्यासः सर्जकस्यच। कृष्णागुरुःकदम्बश्चमहिषाक्षादिपञ्चकम्॥

महिषासुरः। पुं० महासुरविशेषे। रम्भासुरात्मजे॥

महिषासुरसम्भवः। पुं० भूमिजगुग्गुलौ॥

महिषासुरहन्त्री। स्त्री० दुर्गायाम्॥

महिषी। स्त्री० कृताभिषेकायांराज्ञः पत्न्याम्॥ मह्यते। मह०। अविमह्योष्टिषच्। टित्वान्ङीप्॥ औषधीभेदे॥ सैरिभ्याम्। मन्दगमनायाम्। महाक्षीरायाम्। भैंस० हि० भा०॥

महिषीगोष्ठम्। न० महिषीशालायाम्। भैंसवाडा० हि० भा०॥ महिषीणांस्थानम्। गोष्ठच्॥

महिषीदुग्धम्। न० महिषीक्षीरे। सैरिभ्याःस्तन्ये॥ माहिषंमधुरंगव्यात्स्निग्धंशुक्रकरंगुरु। निद्राकरमभिष्यन्दिक्षुधाधिक्यकरंहिमम्॥

महिषीप्रिया। स्त्री० तृणविशेषे। शूल्यायाम्। शूलपत्न्याम्। जलाश्रयायाम्॥
महिष्मान्। पुं० देशविशेषे॥ महिषाः सन्त्यस्मिन्। महिषाश्चेति वक्तव्यमिति०ड्मतुप्॥
मही। स्त्री० भूमौ। पृथिव्याम्॥ मह्यते। मह०। चुरादावदन्तः। अजन्तादचः। कृदिकारादिति ङीष्॥ यद्वा। महीयते। महीङ् पूजायाम्० कण्ड्वादियगन्तः। क्विप्चेतिक्विप्। यलोपयलोपौ। कृदिकारादितिङीष्। तदभावे विसर्गवृत्त्यर्थाः मालवदेशविहारियमालयाम्॥ महीजलकुसुमस्वादुवल्यं पित्तहरं गुरु॥ गवि॥ छिलमीजिकायाम्॥ वर्णवृत्तव्यक्त्याप्रभेदे॥ यथा। लघुगुरुः। महोस्मृता॥ यथा। हरोऽस्तुमे। मनोमुदे॥
महीचित्। पुं० नृपे। राजनि॥ महीं० चयते० ईष्टे। चिनिवासगत्योः। मह्यांचयतिवा। चिघयैश्वर्ययोः। क्विप्। तुक्॥
महीजः। पुं० भौमे। मङ्गलग्रहे॥ न० आर्द्रके॥ त्रि० भूमिजाते॥
महिदुर्गम्। न० मृदापाषाणैरिष्टकैर्वाविस्ताराद्द्विगुणोच्छ्रायेणद्वादशहस्तादुच्छ्रितेनयुद्धार्थमुपरिभ्रमणयोग्येनसौवर्णगवाक्षादियुक्तेनप्राकारेणवेष्टितेराज्ञांवासस्थाने॥
महीधरः। पुं० विष्णौ॥ महींगिरिरूपेणधत्ते। धरति। धृञ्०। मह्याधरः॥ अच्॥
महीध्रः। पुं० शिखरिणि। पर्वते॥ महींधरतिधारयतिवा। धृञ्०। मूलविभुजादित्वात्कः॥
महीपालः। पुं० राजनि॥ महींपालयति। पाल०। कर्मण्यण्॥
महीप्राचीरम्। न० समुद्रे॥
महीभृत्। पुं० पर्वते॥ नृपे॥
महीमयः। त्रि० मृत्तिकानिर्मिते मह्याविकारे॥
महीयान्। त्रि० महत्तरे॥
महीरुहः। पुं० शाखिनि। पादपे। वृक्षे॥ शाकवृक्षे॥ मह्यांरोहयति। रुहबीजजन्मनिप्रादुर्भावे। इगुपधेतिकः॥
महीलता। स्त्री० किञ्चुलुके। केंचुवा० इतिख्याते॥ लताशब्ददीर्घत्वात्म्यांमह्यालतेव॥
महीसुतः। पुं० मङ्गलग्रहे। लोहिताङ्गे॥ मह्याः सुतः॥
महेच्छः। त्रि० महाशये। महाभिलाषे॥ महतीइच्छाऽस्य॥
महेन्द्रः। पुं० कलिङ्गदेशस्थेकुलपर्वतविशेषे॥ सिद्धपीठोयमद्रिः। यथा। महान्तकोमहेन्द्रेचपार्वतीचमहान्तकेति॥ निसामास्वपिवुल्याद्यामहेन्द्रप्रभवाः स्मृताः॥

इन्द्रे ॥ महांश्चासौ॰इन्द्रश्चमहान्वा चयमभूद्योवृत्रमवधीदितिश्रुते : । ईश्वरे । विष्णौ ॥
महेन्द्रकदली । स्त्री॰ कदलीप्रभेदे ॥
महेन्द्रतनया । स्त्री॰ सरिदन्तरे ॥
महेन्द्रनगरी । स्त्री॰ अमरावत्याम् ॥
महेन्द्रपर्वत : । पुं॰ तीर्थविशेषे ॥
महेन्द्रमदभित् । पुं॰ श्रीकृष्णे ॥
महेन्द्रवारुणी । स्त्री॰ लताविशेषे । चित्रवल्ल्याम् । महाफलायाम् । वडीमाकाल्॰ इ॰ गौ॰ दे॰ भा॰ ॥
महेन्द्राणी । स्त्री॰ इन्द्रयोषिति । पुलोमजायाम् ॥ महेन्द्रस्यस्त्री । महतीचासाविन्द्राणीचेतिवा ॥
महेन्द्रियम् । त्रि॰ माहेन्द्रे ॥ महेन्द्रो देवताऽस्य।महेन्द्राद्घाणौचेतिघ:॥
महेन्द्रीयम् । त्रि॰ माहेन्द्रे॰ हविरादौ ॥ महेन्द्रोदेवताऽस्य । महेन्द्राद्घाणौचेतिचकाराच्छ : ॥
महेरणा । स्त्री॰ कुन्दुरुक्याम् । शल्लकीवृक्षे ॥ महदीरणमस्या : ॥ महमुत्सवमीरयतिवा। ईर॰। ल्यु : ॥
महेला । स्त्री॰ महिलायाम् ॥ वामायाम् ॥ महस्यउत्सवस्य॰ इला भूमि: ॥ यद्वा । महति॰ मह्यतेवा । सलिकलीतीलच् । पृषोदरादि: । माया : ईलाक्रीडावा । परमहेलारतोप्यपारदारिकइतिदमयन्ती काव्यम् ॥

महेलिका । स्त्री॰ महेलायाम् ॥ स्वार्थेकन् ॥
महेश : । पुं॰ शिवे ॥ महेशान्नापरो देव : ॥
महेशबंधु : । पुं॰ श्रीफलवृक्षे । बिल्वे । महेशस्यबन्धुरिव ॥
महेशिता । त्रि॰ परमेश्वरे । परदेवतायाम् ॥ महांश्चासावीशिताच । सन्महदितिसमास : ॥
महेश्वर : । पुं॰ शिवे । महादेवे ॥ महेश्वरस्त्र्यम्बकएवनापरइतिरघु : ॥ विश्वस्यानाथसर्व्वेषांमहतामीश्वर : स्वयम् । महेश्वरइतिनेमंप्रवदन्तिमनीषिण : ॥ महांश्चासावीश्वरश्च । सन्महदितिसमास : ॥ त्रि॰ अधीश्वरे ॥
महेश्वरी । स्त्री॰ महेश्वरपत्न्याम् । भगवत्याम्परदेवतायाम् ॥ अपराजितायाम् ॥ पित्तलप्रभेदे । कपिलायाम् । ब्रह्मरीत्याम् ॥ राजरीत्याम् । महतीचासावीश्वरीच ॥
महेष्वास : । पुं॰ हरौ ॥ शिवे॥ महानविततइष्वासइषुचेपोयस्य स : ॥ त्रि॰ उत्तमधानुष्के ॥
महैरण्ड : । पुं॰ स्थूलैरण्डे ॥
महैला । स्त्री॰ स्थूलैलायाम् ॥
महोक्ष : । पुं॰ वृहद्वृषे । वृषभे ॥ महांश्चासावुक्षाच । अचतुरेति साधु : ॥

महोटिका । स्त्री० )
महोटी । स्त्री० ) बृहत्याम् ॥

महोत्पलम् । न० पद्मे । नलिने । अरविन्दे ॥ महच्चतत्‌उत्पलञ्च ॥

महोत्सवः । पुं० अतिशयितसुखजनककर्म्मणि ॥ यथा । दुर्गातन्त्रेणमन्त्रेणकुर्य्याद्दुर्गामहोत्सवम् । महानवम्यांशरदिवलिदानंन्टपादयः ॥

महोत्साहः । पुं० राज्याङ्गप्रामराजपुरुषे ॥ अतिशयोद्यमे ॥ त्रि० अतिशयोत्साहयुक्ते । महोद्यमे ॥ दुःसाध्यकार्य्येपिसाधनपरे ॥ महान् उत्साहोऽस्य ॥ परदेवतायाम् ॥ जगदुत्पादनाद्यर्थंमुद्युक्तत्वात् ॥

महोदधिः । पुं० समुद्रे ॥

महोदधिशयः । पुं० नारायणे ॥ प्रलयेसर्वभूतानिसंहृत्यैकार्णवंजगत्‌ । कृत्वाऽधिशेते । शीङ् स्वप्ने । घः ॥

महोदयः । पुं० कान्यकुब्जदेशे ॥ आधिपत्ये ॥ अपवर्गे । मोक्षे ॥ सदाकृतयुगञ्चास्तुसदाचास्तूत्तरायणम् । सदामहोदयश्चास्तुकाश्यांनिवसतांसताम् ॥ महात्मनि ॥ स्वामिनि ॥ दध्यक्तमधुनि ॥ न० पुरविशेषे । कान्यकुब्जे । गाधिपुरे । कनौज० इतिमहोवाइतिचभाषा ॥ महानुदयोवैभवंयस्य० यद्वा ॥

महोदया । स्त्री० मेरोश्चक्रवाटाख्योर्द्ध्वमेखलायाउदग्दिशिसोमस्यपुर्य्याम् । यथोक्तम्मृगेन्द्रसंहितायाम् । महोदयाचन्द्रमसः श्वेतायुक्तादिनिर्मिता । द्विजसङ्घस्तुताभातिपुरैर्हिमगिरिप्रभैरिति ॥ नागवलायाम् ॥

महोदरः । पुं० बृहदुदरे ॥ त्रि० तद्वति ॥

महोदरी । स्त्री० रवेः सङ्क्रमणविशेषे कुजाह्निचरर्क्षेयदासङ्क्रमः स्यान्महोदर्य्यसौतस्कराणांसुखाय ॥ महाशतावर्य्याम् ॥

महोद्यमः । त्रि० महोत्साहे । दुःसाध्यकार्य्येपिसाधनपरे ॥ महानुद्यमोऽस्य ॥

महोन्नतः । पुं० तालागमे ॥ त्रि० महोन्नतिविशिष्टे ॥

महोन्नतिः । स्त्री० अतिशयवृद्धौ ॥ यथा । भूयात्तेमहदैश्वर्य्यंपुत्रादीनां महोन्नतिः । अव्याधिनाशरीरेणचिरञ्जीवसुखीभव ॥

महोन्मदः । पुं० फलक्याम् । फलुइ० माचइ० गौ० दे० भा० प्र० मीने ॥

महोपसर्गः । पुं० मार्य्यादिषु ॥

महोरगः । पुं० वासुकिसर्पे ॥ बृहत्सर्पे ॥ महांश्चासावुरगश्च ॥ न० तगरमूले ॥

महोल्का । स्त्री० क्रूरग्रहे ॥ उल्काविशेषे ॥ उल्कालक्षणन्तु । बृहच्छिखाप्रसूक्ष्माग्रारक्तनीलशिखोज्ज्वलाघ्नौ

हणीयप्रभावो महत्त्वानानाविधास्मृता ॥

महौजा: । त्रि० वीर्यवति ॥ महानुभावे ॥ महत्योजोयस्येतिविग्रहः ॥

महौषधम् । न० शुण्ठ्याम् ॥ विषायाम् । अतिविषायाम् । अतीस० इ० भा० ॥ लशुने ॥ भूम्याहुल्यां ॥ वाराहीकन्दे ॥ वत्सनाभे ॥ पिप्पल्याम् ॥ सुरायाम् ॥ महौषधंयत्सौवानांदु:खविस्मारकंमहत् । आनन्दजनकंयच्चतदाद्यातस्वलक्षणम् ॥ महच्चतत्औषधञ्च ॥

महौषधि: । स्त्री० दूर्वायाम् ॥ लज्जालुक्षुपे ॥

महौषधिगण: । पुं० पृश्निपर्ण्यादिषु ॥ यथा । पृश्निपर्णीश्यामलताभृङ्गराजशतावरी । गुडूचीसहदेवाचमहौषधिगण: स्मृत: ॥

महौषधी । स्त्री० हिलमोचिकायाम् ॥ श्वेतकण्टकार्याम् ॥ कटुकायाम् ॥ अतिविषायाम् ॥

महौषध्यष्टकम् । न० महास्नानीयद्रव्यविशेषे ॥ यथा । सहदेवीतथाव्याघ्रीबलाचातिबलातथा । शङ्खपुष्पीतथासिंहीअष्टमीचसुवर्चला॥ महौषध्यष्टकंप्रोक्तंमहास्नानेनियोजयेत्॥

मा । अ० वारणे ॥ विकल्पे ॥

मा । स्त्री० लक्ष्म्याम् । प्रमाणयायाम् ॥ विद्यायाम् ॥ माने ॥ मातरि ॥

मासम् । माधातो: सम्पदादित्वात्क्विप् ॥

मांसम् । न० पिशिते । तरसे । पललि । आमिषे । प्रव्रजे । रक्तजधातौ । मांस० इ० भा० ॥ मांसंवातहरंसर्वंबृंहणंबलपुष्टिकृत् । प्रीणनंगुरुहृद्यञ्चमधुरंरसपाकयो: ॥ मांसवर्गोद्विधाज्ञेयोजाङ्गलाऽनूपभेदत: ॥ तत्रसद्योहतादिमांसेषुविशेषगुणा: सचोच्यते । यथा । सद्योहतस्यमांसंस्याद्व्याधिघातियथामृतम् । वयस्यंबृंहणंसात्म्यमन्यथातद्विवर्जयेत् ॥ स्वयंमृतस्यचाबल्यमतीसारकरंगुरु ॥ वृद्धामांदोषलं मांसंबालानांबलदंलघु ॥ त्रिदोषकृद्व्यालकुष्टंशुष्कंशूलकरंगुरु ॥ विषाम्बुरुङ्मृतस्यैतन् मृत्युदोषरुजाकरम् ॥ क्लिन्नमुत्क्लेदजनकंक्लामंवातप्रकोपनम् ॥ तोयपूर्णशिराजालंमृतमप्युचिदोषकृत् ॥ त्रिहृज्जुपुमान्श्रेष्ठ: स्त्रीचतुष्पदजातिषु । पराद्धंलघुपुंसांस्यात्स्त्रीणांपूर्वांर्धमादिशेत् ॥ देहमध्यंगुरुप्राय: सर्वेषांप्राणिनांस्मृतम् । पक्षोत्क्षेपादिहङ्गानांतदेवलघुकथ्यते ॥ गुरूण्यङ्गानिसर्वेषांगुर्वीग्रीवाचपक्षिणाम् । उरस्कन्धोदरंमूर्धापाणौपादौकटिस्तथा । पृष्ठत्वग्यकृद

धामिगुरूणीह्ययोत्तरम् ॥ लघुवा
तहरं मांसं खगानांधान्यचारिणा
म् । मत्स्याशिनांपित्तकरं वातघ्नं
गुरुकीर्त्तितम् ॥ फलाशिनांश्लेष्म
हरं लघुरूक्षमुदीरितम् । हृद्यं
गुरुवातघ्नं तेषामेवफलाशिनाम् ॥
तुल्यजातिष्वल्पदेहामहादेहेषुपूजि
ता: । स्वल्पदेहेषुप्रशस्तास्तथैवस्थू
लदेहिन: ॥ स्त्रीणांपुरुषतांपरं मांसं
हृद्यं रुच्यं लघुस्मृतम् ॥ येमृताबि
हगायेचदूरावासप्रचारका: । ते
षामभिष्यन्दिन: सर्वेविपरीतम
तोन्यथा ॥ जलानूपचरा: सर्वेत
थाप्युलचरास्तये । गुरुमुक्तागुरुत
रं तेषांमांससमुदीरितम् ॥ धान्योत्प
त्तिप्रकाराणां लघुस्याल्लघुपक्षिणा
म् ॥ ग्राम्यं मांसं वनजमथवानूपजं
वाबिलोत्थंप्रश्वेतं पीतं हरितमरुणं
पाचितं सूपकारै: । तत्त्वं गुल्यं
सरसमधुरंस्वेदितं बह्नितं वायस्य-
प्रायोयदभिरुचितं स्मृयतेतेनतद्वि॥
षपिच । मांसन्तुत्रिविधं ज्ञेयं मृदु
लंकठिनंघनम् ॥ पारावतालचट
काशशूकरटिट्टिभा: । क्षुद्रमत्
स्यादिका: सर्वेमांसेषुमृदुला:
स्मृता: ॥ मृगरोहितकाद्याश्चमत्
स्या: मल्लकिशम्बरा: । एतेकठि
नमांसा: स्यु: पक्षिणोजलचारि
ण: ॥ गजकुम्भीरखड्गाद्या: सग



स्थावर्कराद्य: । गोधागोखालुला
याद्या:घनमांसा: प्रकीर्त्तिता: ॥ एकत्र
सर्वमांसानिबिरुद्ध्यन्ते परस्परम्॥
वेदशास्त्रोक्तविधिनामांसस्योक्तागु
णाइमे । मनूक्तविधिनावक्ष्येविधिं
भक्षणवर्जने ॥ प्रोक्षितंभक्षयेन्मांसं
ब्राह्मणानाञ्चकाम्यया । यथाविधि
नियुक्तस्तुप्राणानामेवचात्यये ॥ प्रा
णस्यान्नमिदंसर्वंप्रजापतिरकल्पयत् ।
स्थावरंजङ्गमञ्चैवसर्वंप्राणस्यभोजन
म् ॥ चराणामन्नमचरादंष्ट्रिणाम-
प्यदंष्ट्रिण: । अहस्ताश्चसहस्तानां-
शूराणांचैवभीरव: ॥ नात्तादुष्य-
त्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि
। धात्रैवसृष्टाह्याद्याश्चप्राणिनोऽत्ता
रएवच ॥ यज्ञायजग्धिर्मांसस्येत्ये
षदैवोविधि: स्मृत: । अतोन्यथा
प्रवृत्तिस्तुराक्षसोविधिरुच्यते ॥ क्री
त्वास्वयंवाप्युत्पाद्यपरोपकृतमेववा।
देवान्पितॄंश्चार्चयित्वाखादंमांसंन
दुष्यति ॥ नाद्यादविधिनामांसंवि
धिज्ञोऽनापदिद्विज: । जग्ध्वाह्यवि
धिनामांसंप्रेत्यतैरद्यतेऽवश: ॥
नताहृशंभवत्येनोमृगहन्तुर्धनार्थिन:
। याहृशंभवतिप्रेत्यवृथामांसानि-
खादत: । नियुक्तस्तुयथान्यायंयो
मांसंनात्तिमानव: । सप्रेत्यपशुतां
यातिसम्भवानेकविंशतिम् ॥ अस
स्कृतान्पशून्मन्त्रैर्नाद्याद्विप्र: क

दाचन । मन्त्रैस्तु संस्कृतानद्यात्छा
श्वतंविधिमास्थित :॥ कुर्याद्घृतप
शुंसङ्गे कुर्यात्पिष्टपशुंतथा । नत्वे
वतुवृथाहन्तुं पशुमिच्छेत्कदाचन-
॥ यावन्तिपशुरोमाणितावत्कृत्वोह
मारणम् । वृथापशुघ्न : प्राप्नोति
प्रेत्यजन्मनिजन्मनि ॥ यज्ञार्थंप
शव : सृष्टा : स्वयमेवस्वयम्भुवा ।
यज्ञोऽस्यभूत्यैसर्वस्यतस्माद्यज्ञेवधो
ऽवध: ॥ ओषध्य : पशवोवृक्षास्ति
र्य्यञ्च : पक्षिणस्तथा । यज्ञार्थंनिधनं
प्राप्ता : प्राप्नुवन्त्युच्छ्रती : पुन: ॥
मधुपर्केचयज्ञेचपितृदैवतकर्म्मणि।
अत्रैवपशवोहिंस्यानान्यत्रेत्यब्रवी
न्मनु :॥ एष्वर्थेषुपशून्हिंसन्वेद
तत्वार्थवद्द्विज: । आत्मानञ्चपशुञ्चै
वगमयत्युत्तमांगतिम् ॥ गृहेगुरा-
वरण्येवानिवसन्नात्मवान्द्विज : ।
नवेदविहितांहिंसामापद्यपिसमा-
चरेत् ॥ यावेदविहिताहिंसानि
यतास्मिंश्चराचरे । अहिंसामेवतां
विद्याद्वेदाद्धर्मोहिनिर्बभौ॥ योऽहिं
सकानिभूतानिहिनस्त्यात्मसुखेच्छ
या । सजीवंश्चमृतश्चैवनक्कचित्सु
खमेधते ॥ योबन्धनवधक्लेशान्प्रा
णिनांनचिकीर्षति । ससर्वस्यहित
प्रेप्सु : सुखमत्यन्तमश्नुते यद्ध्या
यतियत्कुरुतेधृतिंबध्नातियत्रच ।
तदवाप्नोत्ययत्नेनयोहिनस्तिनकिं-

मांसम्

ञ्चन नाकृत्वाप्राणिनांहिंसांमांस
मुत्पद्यतेक्कचित् । नचप्राणिवध:
स्वर्ग्यस्तस्मान्मांसंविवर्ज्जयेत्॥ स
समुत्पत्तिञ्चमांसस्यवधबन्धौचदेहि
नाम् । प्रसमीक्ष्यनिवर्त्तेतसर्वमां
सस्यभक्षणात् ॥ नभक्षयतियोमां-
संविधिंहित्वापिशाचवत् । सलोके
प्रियतांयातिव्याधिभिश्चनपीड्यते॥
अनुमन्ताविशसितानिहन्ताक्रयवि
क्रयी । संस्कर्त्ताचोपहर्त्ताचखाद-
कश्चेतिघातका :॥ स्वमांसंपरमां
सेनयोवर्द्धयतुमिच्छति। अनभ्यर्च्य
पितृन्देवान्ततोन्योनास्त्यपुण्यकृ
त् ॥ वर्षेवर्षेश्वमेधेनयोयजेतशतंस
मा : । मांसानिचनखादेद्यस्तयो :
पुण्यफलंसमम् ॥ फलमूलाशनैर्मे
ध्यैर्मुन्यन्नानाञ्चभोजनै : । नतत्-
फलमवाप्नोतियन्मांसपरिवर्ज्जना-
त् ॥ ५४ ॥ मांसभक्षयितामुत्रयस्य
मांसमिहाद्म्यहम् । एतन्मांसस्य-
मांसत्वंप्रवदन्तिमनीषिण :॥ न-
मांसभक्षणेदोषोनमद्येनचमैथुने ।
प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहा-
फला ॥ अपिच । श्रीमहानिर्वाणत
न्त्रे । मांसन्तुत्रिविधंप्रोक्तंजलभूच
रखेचरम् । यस्मात्तस्मात्समानी
तंयेनकेनविघातितम् ॥ तत्सर्वंदे-
वताप्रीत्यैभवेदेवनसंशय : । साध
केच्छाबलवतीदेयेवस्तुनिदैवते ॥ य

द्रात्मप्रियंद्रव्यंततत्तदिष्टायकल्पयेत्॥ बलिदानविधौदेविविहितः पुरुषःपशुः। स्त्रीपशुर्नचहन्तव्यस्तत्रशांभवशासनात्॥ मन्यतेदेवादिप्रीत्यर्थम्। मनस्माने। मेदोर्थंचेतिसः॥

मांसः। पुं॰ काले। कीटे॥

मांसकारि। न॰ रक्ते। रुधिरे॥

मांसच्छदा। स्त्री॰ मांसरोहिणीविशेषे। मांसाम्। सुलोमायाम्॥

मांसजम्। न॰ मेदसि॥

मांसतेजः। न॰ मेदसि॥

मांसदलनः। पुं॰ ग्रीष्मवृक्षे॥

मांसद्रावी। पुं॰ अम्लवेतसे

मांसपचनम्। न॰ मांसपाके॥

मांसपेशी। स्त्री॰ गर्भस्यावयवविशेषे॥ यथा। बुद्बुदः सप्तरात्रेणमांसपेशीभवेत्ततः। द्विसप्ताहात्भवेत्पेशीरक्तमांसचिताढ्ढा॥ बीजस्येवाङ्कुराः पेश्याः पञ्चविंशतिरात्रतः॥

मांसप्रलेहः। पुं॰ प्रलेहविशेषे॥ पथ्यप्रलेहम्।

मांसफला। स्त्री॰ वार्त्ताक्याम्॥

मांसभक्षः। त्रि॰ मांसभक्षणकर्त्तरि॥

मांसमाषा। स्त्री॰ माषपर्ण्याम्॥

मांसरसः पुं॰ झोल॰ रसा॰ इति ख्यातेमांसजले॥ सिद्धमांसरसो रुच्यः श्रमश्वासक्षयापहः। प्रीणनोवातपित्तघ्नः क्षीणानामल्परेतसाम्॥ विश्लिष्टभग्नसन्धीनांशुद्धानांशुद्धकाङ्क्षिणाम्। स्मृत्योजोबलहीनानांज्वरक्षीणक्षतोरसाम्॥ शस्यतेस्वरहीनानांदृष्ट्यायुःश्रवणार्थिनाम्॥

मांसरोहिणी। स्त्री॰ सुगन्धिद्रव्यविशेषे। अग्निरुहायाम्। चर्मकषायाम्। विकषायाम्॥ स्यान्मांसरोहिणीवृष्यासरादोषत्रयापहा॥

मांसलम्। न॰ काव्यस्यगौडीरीत्यन्तर्गतस्यौजोगुणस्याङ्गविशेषे॥ यथा। ओजः समासभूयस्त्वंमांसलंपदडम्बरम्॥ त्रि॰ अंसले। बलवति॥ स्थूले॥ यथा। निस्त्रासवक्त्रैर्द्विषः स्युर्निद्रव्याविलपक्षैः कृशैः। मांसलैस्सघनोपेतास्तवक्रैरघनैर्नृपाः॥ मांसमस्त्यस्य। सिध्मादित्वाल्लच्॥ पुं॰ माषे॥

मांसलफला। स्त्री॰ वृन्ताक्याम्॥

मांसविक्रयी। त्रि॰ वैतंसिके। कौटिके॥ सकृदपिमांसविक्रयकारिणि॥ सद्यः पततिमांसेनलाक्षयालवणेनच॥

मांसव्यध। त्रि॰ मांसव्यधके॥ मांसस्यव्यधनम्॥ व्यधजपोरनुपसर्गे॰ इत्यप्॥

मांसशृङ्गाटकम्। न॰ मांसप्रकारवि

ग्रंथे । मांसकाचिखूंट० इतिभाषा ॥ शुद्धमांसंतनूकृत्यकर्त्तितंखेदितं जले । लवङ्गहिङ्गुलवणमरिचार्द्रकसंयुतम् ॥ एलाजीरकधान्याकनिम्बूरससमन्वितम् । घृतैसुगन्धेतक्रष्टपूरणं प्रोच्यतेबुधैः ॥ शृङ्गाटकं समितयाकृतंपूरणपूरितम् । पुनः सर्पिषसम्भृष्टं मांसशृङ्गाटकंवदेत् ॥ मांसशृङ्गाटकंरुच्यं दृष्यं बलकृद्गुरु ॥ वातपित्तहरं हृद्यंकफघ्नं वीर्यवर्द्धनम्

मांससारः । पुं० मेदसि ॥ मांसस्य सारः ॥

मांसस्नेहः । पुं० मेदसि ॥

मांसहासा । स्त्री० चर्मणि ॥

मांसिकः । त्रि० मांसविक्रयजीविनि । वैतंसिके ॥ मांसंपण्यमस्य । तदस्यपण्यमितिठक् ॥ यद्वा । मांसं नियुक्तंदीयतेऽस्मै । श्रवणामांसौदनादितिठिठन् । टित्वान्ङीप् ॥ इकारउच्चारणार्थः ॥

मांसिका । स्त्री० मांस्याम् ॥ मन्यते । मनज्ञाने । मनेर्दीर्घश्चेतिसः । गौरादिः । स्वार्थेकन् ॥

मांसिनी । स्त्री० जटामांस्याम् ॥

मांसी । स्त्री० कक्कोल्याम् ॥ मांसच्छदायाम् ॥ तपस्विन्याम् । जटामांस्याम् ॥ मांसीतिक्ताकषायाचमेध्याकांतिबलप्रदा । स्वाद्वीहिमाचिदोषास्रदाहवीसर्पकुष्ठनुत् ॥ मन्यते । मन० । मनेर्दीर्घश्चेतिसः । गौरादिः ॥

मांसेष्टा । स्त्री० पक्षिप्रभेदे । वल्गुलायाम् । दिवांधायाम् वादुड इ०भा० ॥

मांसौदनम् । न० मांससंयुक्तौदने । पलौदने ॥

मांसौदनिकः । त्रि० मांसौदनार्हे ॥ मांसौदनंनियुक्तंदीयतेऽस्मै । श्रामांसौदनाट्टिठन् । टोङीबर्थः । इकारउच्चारणार्थः ॥

मांस्यादिः । पुं० जटामांस्यादिसप्तांगणे ॥ जटामांसीनखंपत्रीलवङ्गंतगरंरसः । शिलयागन्धपाषाणः सप्तमांस्यादिकाश्रमी ॥

माकन्दः । पुं० सहकारे ॥

माकन्दी । स्त्री० आमलकीफले ॥ नगरविशेषे ॥ बहुमूल्याम् । मादन्याम् । गन्धमूलिकायाम् । माद्राणी०मांगनी०इ०भा० ॥ पीतचन्दने ॥

माकरी । स्त्री० माघशुक्लसप्तम्याम् ॥ यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु । तन्मेरोगश्चशोकश्चमाकरीहन्तुसप्तमीतिपठित्वास्नायात् ॥ रथसप्तमीतिनामान्तरम् ॥ रोकंपिद्रम् ॥

माकिम् । अ०)
माकिर् । अ०)वर्ज्जने ॥

माक्षीम् । अ॰ वल्कने ॥
माकोट : । पुं मुकुटश्लक्ष्णस्थाने ॥ माकोटे मुकुटे श्लरीतिदेवीगीता ॥
माक्षिकम् । न॰ मधुनि ॥ मक्षिकाभि : कृतम् । संज्ञायामित्यण् ॥ तैलवर्णमधुनि ॥ मक्षिका : पिङ्गवर्णास्तु : महत्यो मधुमक्षिका : । ताभि : कृतं तैलवर्णं माक्षिकं परिकीर्त्तितम् ॥ माक्षिकं मधुषु श्रेष्ठं नेत्राम यहरं लघु । कामलार्श : क्षतश्वास कासक्षयविनाशनम् ॥ धातुमाक्षिके । स्वर्णमाक्षिके ॥ तापिच्छे । पीतमाक्षिके माक्षिकं द्विविधं प्रोक्तं हेमाख्यं तारमाक्षिकम् । भिन्नवर्णविशेषत्वाद्रसवीर्यादिकं पृथक् ॥ तारपादादिकेतारमाक्षिकं सुप्रशस्यते । देहे हेमाभकं शस्तं रोगहृद्बलपुष्टिदम् ॥
माक्षिकजम् । न॰ सिक्थके ॥
माक्षिकधातु : । पुं॰ माक्षिके । स्वर्णमाक्षिके ॥
माक्षिकफल : । पुं॰ मधुनालिकेरके ॥
माक्षिकशर्करा । स्त्री॰ सिताखण्डे ॥
माक्षिकाश्रयम् । न॰ सिक्थके ॥
माचीकम् । न॰ मधुनि ॥
माचीकशर्करा । स्त्री॰ सिताखण्डे ॥
मागध : । पुं॰ वैश्यत : क्षत्रियायामुत्पन्ने वर्णसङ्करजातिविशेषे । भाट इतिख्याते । शुक्लजीरके ॥ जरासन्धनृपे ॥ कीकटदेशान्तर्वर्त्ति देशविशेषे । मगधे ॥ पार्थिवखनके ॥ वंशक्रमेणमहत्त्ववेदिनि राजाग्रस्तुतिकारिणि । मधुके । वन्दिनि । स्तुतिपाठके । तस्योत्पत्तिर्विष्णु पुराणे यथा । ततोऽस्य दक्षिणं हस्तं ममन्थुस्ते तदा द्विजा : । मथ्यमाने च तस्माभूत् पृथुर्वैण्य : प्रतापवान् ॥ तस्य वै जातमात्रस्य यज्ञे पैतामहे शुभे । सूत : सूत्यां समुत्पन्न : सौत्येऽहनि महामते ॥ तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोथ मागध : । प्रोक्तौ तदा मुनिवरैस्तावुभौ सूतमागधौ ॥ स्तूयतामेष नृपति : पृथुर्वैण्य : प्रतापवान् ॥ सूत्यामिति॰ सूति : ॰ अभिषूति : ॰ अभिषूयते कण्डातेस्मात् सोऽस्यामितिसूति : सोमाभिषवभूमिस्तस्याम् । सौत्येऽहनि॰ तस्मिन्नेवाहनि॰ इत्यर्थ : ॥ वंशपरंपराशंसको भवम् ॥ मगध्यतिया चते । मगधपरिवेष्टने कण्ड्वादिर्यगन्त : । अच् । यस्य हलइतियलोप : । प्रज्ञाद्यण् ॥ मागधा वंशशंसका : । वंशोदीरणमयेयाचन्ते ॰ तेमागधाइत्यर्थ : ॥ त्रि॰ मगधोद्भवे ॥
मागधादेवी । स्त्री॰ राधिकायाम् ॥
मागधी । स्त्री॰ कणायाम् । पिप्पल्याम् ॥ यूथ्याम् ॥ भाषाप्रभेदे ॥

उक्तं हि भरतसूत्रे । भिक्षु कच्छपथा कराचसान्त : पुरावासिचेटकादीनांमागधीति मगधे देशेभवा । तत्रभवइत्यण् ॥

मागमा । स्त्री० कर्कट्यां ॥

माघ : । पुं० मासविशेषे । तपसि ॥ मघजातस्यफलम् । यथा । विद्याविनीतस्वकुलप्रधानसदासदाचारयुत:प्रवीण:।योगानुरक्तोविषयेषुसक्तो माघेयमासे मघवानिवेश : इति॥ माघीपौर्णमास्यस्मिन्पौर्णमासौत्यण् ।। श्रीदत्तकसूनौशिशुपालवधमहाकाव्यकर्त्तरि ॥ तस्यनाम्नैवख्याते महाकाव्ये ॥ यथा। पुष्पेषुजातीनगरेषुकाशी नारीषुरम्भा पुरुषेषुविष्णु : । नदीषुगङ्गानृपतौचराम : काव्येषुमाघ : कविकालिदास : ॥ इत्याधुनिक : कश्चित्

माघवती । स्त्री० पूर्वदिशि ॥

माघवनम् त्रि० इन्द्रसम्बन्धिनि ॥ मघवतइदम् । अण् ॥

माघी । स्त्री० तपोमासस्यपूर्णिमायाम् ॥ मघयायुक्तापौर्णमासी । नक्षत्रेणयुक्त इत्यण् । ततोङीप् ॥

माघोनी स्त्री० पूर्व्वदिशि ॥

माघ्यम् न० कुन्दपुष्पे ॥ माघेसाधु । तत्रसाधुरितियत् ॥ माघेभवम् । दिगादित्वाद्यत् ॥

माङ् । अ० निषेधे ॥ आशङ्कायाम् ॥

माङ्गलिक : । पुं० प्रणवे अथशब्दे ॥ प्रणवश्चाथशब्दश्चद्वावेतौब्रह्मण : पुरा । कण्ठंभित्त्वाविनिर्यातौतस्मान्माङ्गलिकावुभौ ॥ मङ्गलायक्रियमाणे तूर्यादिवाद्ये ॥ अर्गर्भिलाभीष्टार्थसिद्धिर्मङ्गलम् । मङ्गलंप्रयोजनमस्य । प्रयोजनमितिठक् ॥ यथा माङ्गलिकआचार्य्य इति ॥

माङ्गल्यम् । न० मङ्गलक्रियायाम् ॥ मङ्गलार्यद्धिते ॥ यथा । माङ्गल्ये षुविवाहेषुकन्यासंवरणेषुच । दशमासा : प्रशस्यन्ते चैत्रपौषविवर्जिता : ॥ इतिराजमार्त्तण्ड : ॥ मङ्गलस्यभाव : । भावेष्यञ् ॥

माङ्गल्यार्हा । स्त्री० त्रायमाणायांलतायां ॥

माच : । पुं० पथि ॥

माचल : । पुं० बन्दिचौरे । रुजि । ग्राहे ॥

माचिका । स्त्री० मक्षिकायाम् ॥ अम्बष्ठायाम् । मोइया० इ० पश्चिमदेशप्रसिद्धायामौषधौ ॥ माचिकाम्लारसे पाकिकषायाशीतलालघु : । पक्वातीसारपित्तास्रकफकण्ठामयापहा ॥

माचिरम् । अ० शीघ्रे ॥

माचीपत्रम् । न० सुरपर्णे ॥

माजल : । पुं० चाषपक्षिणि ॥

माञ्जिष्ठम् । न० लोहितवर्णे ॥ त्रि० तद्वति ॥ मञ्जिष्ठयारक्तम् । तेनरक्तं रागादित्यण् ॥

माटाम्बक : । पुं० वृक्षविशेषे ॥

माठार : । पुं० चण्डांशो : पार्श्विके । सूर्यानुगे ॥ व्यासे विप्रे ॥ मठत्यनेन । मठमदनिवासयो : । पुंसीतिघ : । मठं राति । रा० । क : । मठस्यापत्यम् । शिवादित्वादण् ॥ गर्गादित्वात् माठर्य : ॥

माण्ड : । पुं० वृक्षविशेषे । भूजवृक्षे । वितानवृक्षे । मयद्रुमे । माण्डवे नौ० ड्र० कोकणे प्रसिद्धे ॥

माण्डव : । पुं० वर्ण सङ्करजातिविशेषे यथा । लेटक्तो वरकन्यायांजनयामासषण्नरान् । माल्लं मह्नंमाण्डवञ्च भण्डं कोलं कलन्दरं ॥

माडुक : । पुं० माडुकिके ॥ मडुकवादनं शिल्पमस्य । मडुकझर्भराद-न्यतरस्यामित्यण् ॥

माडुकिक : । पुं० माडुके ॥ मडुकवादनंशिल्पमस्य मडुकझर्झरा-दितिपक्षे ठक् ॥

माढि : । स्त्री० पत्रभङ्गे ॥ पत्रशिरायाम् ॥ दैन्यप्रकाशने ॥ देशविशेषे ॥ अर्चायाम् ॥ मह्नमनयाचा । मह० । क्तिन् । ढत्वष्टुत्वढलोपदीर्घा : ॥

माढी । स्त्री० दन्तशिरायाम् ॥

माणक : । पुं० वृक्षविशेषे । स्थलपद्मे । वृहच्छदे ॥ न०कन्दविशेषे । मानकचू० ड्र० गौ० दे० भा० ॥

माणव : । पुं० वालके ॥ अपत्येकुत्सितेमूढे मनोरौत्सर्गिक : स्मृत : । नकारस्य चमूर्द्धन्यस्तेनसिद्ध्यतिमाणव : ॥ मनोरयम् । तस्येदमित्यण् । ब्राह्मणमाणवेतिनिपातनाण्णत्वम् ॥ षोडशयष्टिकहारे ॥

माणवक : । पुं० विंशतियष्टिकाभिर्निर्मितेहारविशेषे ॥ बालके । षोडशवर्षपर्यन्तप्रथमवयस्के ॥ कुपुरुषे ॥ माणवोबाल : । स्वल्प । स्वल्पप्रतिक्रुतावितिकन् ॥ यथा । अल्पोमाणव : ॥ अल्पद्रुतिक : ॥ न०अनुष्टुप्प्रभेदे ॥ मात्तलगामाणवकम् ॥ यथा । चञ्चलचूडं चपलैर्वत्सकुलै : केलिपरम् । ध्यायसदागोपरमुखं नन्दसुतं माणवकम् ॥

माणवकक्रीडम् । न० अनुष्टुप्छन्दो विशेषे । माणवके ॥ भादिगणं कर्णधरं साम्बमिदं वृत्तवरम् । पन्नगराजेमक्तं माणवकक्रीडमिदम् ॥ यथा । कोकवधूशोकहरं पद्मवनीबोधकरम् । गाढतमोनाशकरं मौमितरामुष्णकरम् ॥

माणवीनम् । त्रि० माणवसम्बन्धिनि ॥ माणवायहिते ॥ माणवचरकाभ्यां-

खञ् ॥

माणव्यम् । न० माणवह्वन्दे ॥ माण-वानांसमूहः । ब्राह्मणमाणववाडवाद्यन् ॥ माणवत्त्वे ॥ माणवस्यकर्म्मभावीवा । ब्राह्मणादित्त्वात्ष्यञ् ॥

माणिका । स्त्री० अष्टपलपरिमाणे ॥

माणिक्यम् । न० रत्नविशेषे । शोणरत्ने । रत्नराजि । रविरत्नके । पद्मरागे । कुरुविन्दे । माणिक०माणक०इतिभाषा ॥ तस्यलक्षणंयथा स्निग्धंगुरुगात्रयुतंदीप्तंस्वच्छंसुरङ्गंसमाङ्गम् । इतिजात्यंमाणिक्यंकल्याणंधारणात्कुरुते ॥ तस्य-दोषायथा । द्विच्छायमभ्रपिहितंकर्कशमाकीरिलंभिन्नधूम्रञ्च । विरूपं रागविमलंलघुमाणिक्यंनधारयेद्धीमान् ॥ तस्यचतुर्विधाजातिर्यथा तद्रक्तंयदिपद्मरागमथतत्पीतातिरक्तंद्विधाजानीयात्कुरुविन्दकंयदरुणंस्यादेषसौगन्धिकम् । तन्नीलं यदिनीलगन्धिकमितिज्ञेयंचतु-र्धाबुधैर्माणिक्यंकषघर्षणेप्यविकलंरागेणजात्यंजगुः ॥ विशेषोन्यच युक्तिकल्पतरौद्रष्टव्यः ॥ मणिक-मेव । चतुर्वर्णादीनांस्वार्थेउपसङ्ख्यानमितिष्यञ् ॥

माणिक्या । स्त्री० ज्येष्ठ्याम् । मुसल्याम् । गृहगोधायाम् । पलल्याम् ॥

माणिमन्थम् । न० सैन्धवलवणे ॥ मणिमन्थाख्येपर्वतेभवम् । तत्रभव इ० अण् ॥

माण्डलिकः । पुं० ग्रामस्यराज्ञि ॥ मण्डलस्येव । अङ्गुल्यादिभ्यष्ठक् ॥

माण्डूक्यम् । न० उपनिषद्विशेषे ॥

मातङ्गः । पुं० श्वपचे । गजे । हस्तिनि । अर्हदुपासकविशेषे ॥ मतङ्गस्याय-म् । तस्येदमित्यण् ॥ मतङ्गस्याप-त्यम् । शिवाद्यण्वा ॥

मातङ्गनक्रः । पुं० मातङ्गाकारेग्राहे ॥

मातङ्गमकरः । पुं० महामत्स्यप्रभेदे । मातङ्गाकारेनक्रे ॥

मातङ्गी । स्त्री० महाविद्याविशेषे ॥ मतङ्गस्यमुनेःकन्यामातङ्गीसाप्रकीर्त्तिता ॥

मातरपितरौ । पुं० द्विवचनान्तोयम् । सहोक्त्यामातापित्रोः ॥ माताच पिताच । मातरपितरावुदीचामिति पूर्वपदे० ऋकारस्यारङादेशोनिपातनात् ॥

मातरि । अ० अन्तरीक्षे ॥ सप्तम्यन्तप्रतिरूपकमव्ययम् ॥

मातरिश्वा । पुं० वायौ । सर्वप्राणभृतांक्रियाहेतुभूते ॥ मातरि० अन्त-रिक्षेश्वयतिवर्द्धतेगच्छति । टुओश्वि गतिवृद्ध्योः । यद्वा । मातरि०

जनन्याम्० श्वयतिवर्द्धते० सम्प्रसारणत्वात्० गर्भस्थएवायंशक्तोयोनपञ्चाशद्भागः क्रमदृश्यपाख्यायते। श्वन्नुक्षन्निति सूत्रेण० कनिप्रत्ययोधातोरिकारलोपश्चनिपातनात्० सप्तम्याश्चलुक्च॥ मातरीतिसप्तम्यन्तप्रतिरूपकमव्ययंवा॥

मातलिः। पुं० इन्द्रस्यसारथौ॥ मतंलाति। आतोनुपेतिकः। मतलस्यापत्यम्। अतइञ्॥

मातापितरौ। पुं० द्विवचनान्तीयम्०० पित्रोः। मातरपित्रोः॥ माताचपिताच। आनङ्ऋतोद्वन्द्वे॥ अभ्यर्हितत्वात्पूर्वनिपातः। चतुर्दशगुणंमातागौरवेणातिरिच्यते॥

मातापुरम्। न० सह्याद्रौरेणुकाधिष्ठितेअम्बिकास्थाने॥

मातामहः। पुं० मातुः पितरि॥ मातुः पिता। मातृपितृभ्यांपितरिडामहच्॥

मातामही। स्त्री० मातुर्जनन्याम्॥ मातुर्माता। मातरिषिच्चेतिडामहच्। षित्वात्ङीष्॥

मातिः। स्त्री० मानि॥ अवच्छेदे॥ मानम्। माङ्०। क्तिन्॥

मातुलः। पुं० मातुर्भ्रातरि। पितृव्याणि॥ मातुर्भ्राता। पितृव्यमातुलेतिनिपातनात्० मातुर्डुलच्। व्रीहिप्रभेदे॥ मदनद्रुमे॥ सर्पविशेषे॥ धूस्तूरे॥ मास्ति० नास्तितुलाअस्य॥ मा० स्त्री: तुलाऽस्येतिवा० कनकनामकत्वात्॥

मातुलकः। पुं० धूस्तूरवृक्षे॥

मातुलपुत्रकः। पुं० धतूरस्यफले॥ मातुलस्यपुत्रएव। कन्॥ मातुलस्यसुते॥

मातुला। स्त्री० मातुलान्याम्॥

मातुलानी। स्त्री० मातुलस्यस्त्रियाम्॥ मातुलस्य स्त्री। इन्द्रवरुणेत्यादिनामातुलशब्दात्पुंयोगे० मातुलोपाध्याययोरानुक्० ङीष्च॥ कलाये॥ भंगायाम्॥ मायास्तुला० मातुलामानयति। अनप्राणनेगतौवा। कर्मण्यण्। ङीप्॥ मातुलस्यधत्तूरस्यस्त्रीवा। पूर्ववत्ङीषानुकौ॥ शणे॥ प्रियङ्गुवृक्षे॥

मातुलाहिः। पुं० चित्रसर्पे। मालुधाने॥ मातुलयति। मूलविभुजादित्वात्कः। मातुलश्चासावहिश्च। मालुयासांप० फेयुयाटी० इतिचयस्यगौडदेशेप्रसिद्धिः। अयंखट्वाकृतिरायतदेहोदीर्घलांगूलश्चतुष्पादितिकेचित्॥

मातुली। स्त्री० मातुलान्याम्॥ मातुलस्यस्त्री। मातुलोपाध्याययोरानुग्वेत्यानुगागमाभावे० इन्द्रवरुण

तिर्व्वीष् ॥ भञ्जायाम् ॥

मातुलुङ्ग: । पुं॰ बीजपूरे । च्छोलङ्ग । टाबालिंबुड़॰ गौ॰ दे॰ भाषा ॥ मिमात्यरुचिम् । मीञ्‌हिंसायाम् । बाहुलकात्तुन् । लुञ्ज्यते । लुजिर्भाषार्थ: । घञ् । चजोरिति कुत्वम् । न्यङ्क्वादित्वाद्वा । मातु श्चासौलुङ्गश्च ॥

मातुलुङ्गक: । पुं॰ च्छोलङ्गवृक्षे । फलपूरे । बीजपूरे । रुचिके ॥ स्वार्थेकन् ॥

मातुलुङ्गा । स्त्री॰ मधुकुक्कुट्याम् ॥ यथा । मातुलुङ्गासुगन्धान्यागिरि आपूतिपुष्पिका । अन्यस्त्वादिवदूतीच साक्षचिन्मधुकुक्कुटी ॥ इतिरत्नमाला । मखुर॰ इ॰ महूर॰ इ॰ गौ॰ देशभाषा॰ ॥

मातुलुङ्गिका । स्त्री॰ वनबीजपूरे ॥

मातुलेय: । पुं॰ स्त्री॰ मातुलस्यापत्ये । शुभ्रादित्वात् ढक् ॥

माता । त्रि॰ प्रस्थादिनाधान्यादिमातरि ॥ मिनोति । डुमिञ्॰ तृच् पुं॰ साधिष्ठानबुद्धिस्थचिदाभासरूपेप्रमातरि ॥

माता । स्त्री॰ जनयित्र्याम् । प्रसूम् । जनन्याम् । सवित्र्याम् । मा॰ इ॰ भाषा । आपदिमातैवशरणम् ॥ षोडशप्रकारामातरो यथा । स्तनदात्रीगर्भधात्रीभक्ष्यदात्रीगुरुप्रिया । अभीष्ट देवपत्नीचपितु: पत्नीचकन्यका ॥ सगर्भजायाभगिनीपुत्रपत्नीप्रियाप्रसू: । मातुर्मातापितुर्मातासोदरस्यप्रिया तथा ॥ मातु: पितुश्चभगिनीमातुलानी तथैवच । जनानांवेदविहितामातर: षोडशस्मृता: तत्रागौरवं यथा । जनकोजन्मदानत्वात्पालनाच्च पितास्मृत: । गरीयान्जन्मदातुश्च योन्नदातापितामुने ॥ विनान्नाद्वस्वरोदेहोननित्य: पितुरुद्भव: । तयो: शतगुणंमाताप्ज्यामान्या चवन्दिता ॥ गर्भधारणपोषाभ्यां साचताभ्यांगरीयसी । इतिब्र॰ वै॰ पु॰ ॥ अत्रमनुर्यथा । उपाध्यायान् दशाचार्यआचार्याणांशतं पिता । सहस्रन्तुपितृन्मातागौरवेणाति रिच्यत इति ॥ नपितुर्वचनं कार्यं यथा । मातु: सुतेनहि । पिताच पतितस्त्याज्योनमातासत्सुतैर्नहि ॥ गर्भधारणपोषाभ्यांततोमातागरीयसी । इत्यविप्रादुपाध्यायोगौरवेणातिरिच्यते ॥ तेभ्य: पितादशभ्यश्चमाताचैवगरीयसी । मातृतोन्योनदेवोस्तितस्मात्पूज्यासदासुतै: ॥ मातुश्चवचितं किञ्चितकुरुते भक्तित: पुमान् । तद्धर्मं हिविजानीयादेवंधर्मविदोविदु: ॥ पितुर्भगिन्यां मातुश्च ज्यायस्याञ्चस्वसर्यपि

मातृवत्तृप्तिमातिष्ठेन्मातातातावभ्यो गरीयसीतिमनुः ॥ त्वमाद्येजगतां मातापितात्रह्मपरात्परम् । युवयोः प्रीणनंयस्मात्तस्मात्किंरुच्छिथांतपः ॥ स्वभावतोभवेन्माताप्रुच्चे तिकरुणावती। तेनभक्तोस्तता यान्तुवक्तव्यं किंततः परम् । धिगस्तुजन्मतेषांवैकृतघ्नानान्तुपापिनाम् । येसर्वमातरंदेवींत्वोपास्यांभजन्तिवै ॥ नशिवोपासनानित्यानविष्णूपासनातथा । नित्योपास्तिः पुरादेव्यानित्यामुक्त्यैवचोदिता ॥ किंमयावहुवक्तव्यंत्यामेसंशयवर्ज्जिते । सेवनीयापदाम्भोजंभगवत्यानिरन्तरम् ॥ गवि ॥ भूमौ ॥ दुर्गायाम् ॥ लक्ष्म्याम् ॥ रेवत्याम् ॥ आखुकर्ण्याम् ॥ इन्द्रवारुण्याम् ॥ महाश्रावण्याम् ॥ जटामांस्याम् ॥ गौर्यादिषु ॥ यथा । गौरीपद्माशचीमेधासाविचीविजयाजया । देवसेनास्वधास्वाहाशान्तिःपुष्टिर्धृतिः क्षमा । आत्मनोदेवताचैवतथैवकुलदेवता ॥ ब्राह्म्यादिषु ॥ यथा । ब्राह्मीमाहेश्वरीचैन्द्रीवाराहीवैष्णवीतथा । कौमारीचैवचामुण्डाचर्चिकेत्यष्टमातरः ॥ सप्तमातरोयथा । ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा । वाराहीचतथेन्द्राणीचामुण्डासप्तमातरः ॥ मान्यंते॰ पूज्यन्तेलोकमातृत्वादितिमातरः । मानपूजायाम् । नप्तृनेष्टृ॰ इत्यादावुणादिसूत्रेनिपातितः ॥ मान्तिशिवपरिवारत्वेनसमाविशन्तीतिवा ॥ मातिगर्भोऽस्यांवा ॥ विभूतौ ॥

मातृकम् । त्रि॰ मातुरागते ॥ ततआगतइत्यधिकारे॰ ऋतठञ् ॥

मातृका । स्त्री॰ धात्र्याम् । उपमातरि ॥ मातरि । जनन्याम् ॥ देवीप्रभेदे ॥ वर्णमालायाम् । आदिवान्तवर्णे ॥ करणे ॥ स्वरे ॥ ईश्वर्य्याम् ॥ गणाधरे ॥ मातैव । स्वार्थेतद्धितः ॥

मातृकेशट: । पुं॰ मातुले ॥

मातृतुल्या । स्त्री॰ । मातुः समानासु ॥ तायथा । मातृष्वसामातुलानीपितृव्यस्त्रीपितृस्वसा । श्वश्रूःपूर्वजपत्नीचमातृतुल्याः प्रकीर्त्तिताः ॥ मात्रातुल्या ॥ मातृशब्दसमाख्यामातृतुल्यस्त्वयथा । मातरित्येवशब्देनयाश्चसमाख्यतेनरः । सा मातृतुल्यासत्येनधर्म्मः साचीसतामपि ॥

मातृनन्दन: । पुं॰ कार्त्तिकेये । महासेने ॥

मातृबान्धव: । पुं॰ मातुर्माद्यादिषु ॥ मातुर्मातापिताभ्रातामातुर्भ्रातुःसुतास्तथा । मातुः पितुःसोदरा

स्वमिस्त्रयामातृबान्धवाः

मातृभोगीणः । त्रि॰ मातुर्हिते ॥ मातुर्भोगः शरीरम् । तस्मै हितः । आत्मविश्वजनेत्यादिनाखः ॥

मातृमुखः । त्रि॰ जडे ॥ इतिचिकाद्यशेषः ॥

मातृयोगः । पुं॰ याचायोगान्तरे ॥ यथा । अधिमात्रांशगैसौम्यैसिशैवाप्यसुरार्चिते । लग्नगेमातृयोगोयंशचूर्णांसम्बिलसदा ॥

मातृवाहिनी । स्त्री॰ वल्गुलायाम् । मांसीष्टायाम् । पक्षिविशेषे ॥

मातृशासितः । पुं॰ मूर्खे ॥

मातृष्वसा । स्त्री॰ मातुर्भगिन्याम् ॥ मातुःस्वसा । मातृपितृभ्यांस्वसेतिषत्वं ॥

मातृष्वस्रेयः । पुं॰ मातृष्वस्सुते । मातृष्वस्रीये ॥ मातृष्वसुरपत्यम् । ढकिलोपः । अतएवज्ञापकाड्ढक् ॥

मातृष्वस्रेयी । स्त्री॰ मातुर्भगिनीसुतायाम् ॥ ङीप् ॥

मातृष्वस्रीयः । पुं॰ मातृष्वस्सुते ॥ मातृष्वसुरपत्यम् । मातृष्वसुश्चेतिछण् ॥

मातृष्वस्रीया । स्त्री॰ मातुर्भगिन्याः कन्यायाम् ॥ टाप् ॥

मातृसिंही । स्त्री॰ वासक्के ॥

मात्रम् । न॰ कात्स्न्र्ये ॥ यथा । जीवमात्रंनहिंसित ॥ अवधारणे ॥ यथा । पयोमात्रंभुङ्क्ते ॥ मीयते॰ अनयावा । मति॰ मिमीतेवा । मामाने । माङ्माने वा । हुयामाशुभसिभ्यस्त्रन् ॥ स्वार्थे ॥

मात्रा । स्त्री॰ कर्णभूषणे ॥ वित्ते । द्रव्ये ॥ माने ॥ हस्वदीर्घप्लुतादीपरिच्छेदे ॥ अक्षराऽवयवे ॥ स्वल्पे ॥ काले । अकारादिलघ्वक्षरकाले ॥ इत्ते ॥ कालविशेषे ॥ यथा । कालेनयावतापाणिः पर्येतिजानुमण्डलं । सामात्राकविभिः प्रोक्ताह्रस्वदीर्घप्लुतेमता ॥ अपिच । वामजानुनितम्बस्यभ्रमणंयावताभवेत् । कालेनमात्रासाप्रोक्तायामुनिभिर्वेदपारगैः ॥ पुनश्च । स्वजानुमकराबर्त्तकुर्याच्छोटिकयायुतम् । एषामात्राभवेदेकासर्वत्रैवैषनिश्चयः ॥ याथात्म्ये ॥ विषयेषु ॥ मीयन्ते॰ इ॰ मात्राः विषयाः ॥ उपभोगयोग्यविशेषे ॥ इन्द्रियवृत्तिषु ॥ इन्द्रियेषु ॥ मीयतेऽनया॰ इतिमात्रा॰ परिच्छित्तिः ॥ मियन्ते विषयाभिरितिमात्राः॰ इन्द्रियवृत्तयः ॥ मीयते॰ अनयावा । माति॰ मिमीतेवा । मामाने॰ माङ्मानेवा । ष्ट्रन् । अनित्यःषित्तां ङीष् । टाप् ॥ हुयामेतिवाष्ट्रन् ॥ पञ्चलघ्वक्षरेकाले ॥ अंशे ॥ यथा । नयोर्भिन्नाःपृथग्दद्यादवसानदिनादृते । स्वभर्तृपिण्डमात्राभ्यस्

मिरासांयत : स्मृतैति ॥ पिण्डेभ्य स्त्वल्पिकांमाचामितिच ॥

माचाकाल : । पुं० कालविशेषे । निमेषानन्तरंयावताकालेनस्वभावत-उन्मेषोभवतितावतिकाले ॥ निमेषोन्मेषणेमात्राकालोलघ्वक्षरंतथे-तिपुराणम् ॥

मात्रायाम् । अ० अल्पपरिमाणे ॥

मात्रीय : । त्रि० मात्रेहिते ॥ तस्मैहितमितिच्छ : ॥

मात्सर्यम् । न० अन्यशुभद्वेषे ॥ मत्सरएव । ष्यञ् ॥

मात्स्यिक : । त्रि० मत्स्यघातिनि ॥ मत्स्यान्हन्ति । पक्षिमत्स्यमृगान्हन्तीतिठक् । मत्स्यस्यङ्यामिति-परिगणनात्० सूर्यतिष्येतियलो-पोन ॥

माथ : । पुं० अध्वनि । पथि ॥

माथुर : । त्रि० मथुरायांजाते ॥ तत्रजातइत्यण् ॥ शैषिकेष्वर्थेष्वणेव ॥

माद : । पुं० दर्पे ॥ हर्षे ॥ मदे ॥ मदनम् । मदोहर्षे । सधमादयोरिति ज्ञापकात्० क्वचिदपवादेनित्याया वा० घञ् ॥

मादक : । पुं० दात्यूहेपक्षिणि ॥ त्रि० मत्ताजनके ॥

मादन : । पुं० कामदेवे ॥ मदनवृक्षे ॥ धत्तूरे ॥ न० लवङ्गे ॥ त्रि० हर्षकारयितरि ॥

मादनी । स्त्री० भङ्गायाम् । विजयायाम् ॥ माकन्द्याम् ॥

मादृश : । त्रि० मत्सदृशे ॥ अहमिवदृश्यते । त्यदादिष्विस्यादिनाकञ् । आसर्वनाम्न : ॥

माद्री । स्त्री० अतिविषायाम् ॥ नकुलसहदेवयोर्मातरि । मद्रपुत्र्याम् ॥ भर्गादित्वात्तद्राजस्यनलुक् ॥

माद्रीपति : । पुं० पाण्डुनृपे ॥

माद्रीसुत : । पुं० नकुले ॥ सहदेवे ॥

माधव : । पुं० विष्णौ । नारायणे । लक्ष्मीपतौ ॥ मधुविद्ययाऽवबुध्यते० इतिमाधव : । शैषिकोऽण् । आदिवृद्धि : गुणावादेशौ ॥ मायालक्ष्म्या : ० विद्यायावा० धव : पति : ॥ यद्वा । यदोर्ज्येष्ठ : पुत्रोमधु : ० तस्यापत्यंमाधवस्तद्वंश्यत्वात् ॥ मधोर्हन्तेतिवा । शेषे० तस्यण् । ॥ माधवब्रह्मस्वरूपायामूलप्रकृतिरीश्वरी । नारायणीतिविख्याताविष्णुमायासनातनी ॥ महालक्ष्मीस्वरूपावेदमातासरस्वती । राधावसुन्धरागङ्गातासांस्वामीचमाधव : ॥ मधौ । वसन्ते ॥ राधे । वैशाखे ॥ मधुमकरन्द : ० सोस्मिन्नस्ति । मधोर्श्चेतिञ : ॥ यादवे ॥ मधूकवृक्षे ॥ कृष्णामुद्गे ॥

माधवक : । पुं० मधूकपुष्पमद्ये । म

ध्वासवे ॥ मधूकपुष्पंमधु । मधुना क्वत : सञ्चित :। कुलालादिभ्यो-वुञ् ॥

माधवद्रुम :। पुं॰ आम्रवृक्षे ॥ माधवस्यवसन्तस्यद्रुम : ॥

माधवप्रियम् । न॰ पीतचन्दने ॥

माधवि :। पुं॰ प्रद्युम्ने ॥ माधवस्यापत्यम् । अतइञ् ॥

माधविका । स्त्री॰ माधवीलतायाम् ॥ सङ्कृतिवृत्ति २४ प्रभेदे ॥ यथा । भवन्तिपुरोजगणावदिसप्ततोयगणोहिलदाकरयन्त : प्रकाममतीवमुदेननुमाधविकामितितांकथयन्त्यभिसन्त :। तुषारधराधरराजसुतापरिचारकभूमिपतेयवन्तमानयमानयन्तमदोतिमदोद्धतगर्वहरस्वकमन्त : ॥

माधवी । स्त्री॰ मिसी ॥ मधुशर्करायाम् । सिताखण्डे ॥ कुट्टन्याम् ॥ मदिराया : प्रभेदे ॥ यथा । पीत्वा द्यामाधवींमिष्टांशातयामिरषादृष्ये॰ वृतिमहिषं प्रमिददेवैनमय भागवते ॥ गोमहिष्यादिसम्पत्तौ ॥ दुर्गायाम् ॥ तुलस्याम् ॥ सुभद्रायाम् ॥ पुष्पलताविशेषे । अतिमुक्ते । पुण्ड्रके । वासन्त्याम् । लतायाम् ॥ माधवीमधुरामीताजव्वीदोषचयापहा ॥ मधौपुष्प्यति । कालात्साधुपुष्प्यत्पच्यमानेष्विति पुष्प्यदर्थेऽ-ण् । ङीप् ॥ उर्व्याम् । भूमौ ॥ त्वन्मयाहंत्वदाधारात्वत्सृष्टात्वामुपाश्रिता । माधवीतिचलोकोयमभिधत्तेततोहिमामितिविष्णुपुराणम् ॥

माधवेष्टा । स्त्री॰ वाराहीकन्दे ॥

माधवोचितम् । न॰ कक्कोलके ॥

माधवोद्भव :। पुं॰ राजादन्याम् ॥

माधुक :। पुं॰ वर्णसङ्करजातिविशेषे ॥

माधुपर्किकम् । न॰ मधुपर्कदानकाले पूज्यतयालब्धे धनादौ ॥

माधुमत :। पुं॰ काश्मीरदेशे ॥ काश्मीरास्तुमाधुमता: सारस्वतास्तुविकर्णिका: ॥ इतिहेमचन्द्र : ॥ मधुमदभिजनोस्य । सिन्धुतक्षशिलादिभ्योण् आविस्यण् ॥

माधुरम् । न॰ मल्लिकायाम् ॥ त्रि॰ मधुरसम्भवे ॥

माधुरी । स्त्री॰ मद्ये ॥ माधुर्ये ॥ चित्तंकृष्णपदारविन्दरसिकंसामाधुरी माधुरी ॥

माधुर्य्यम् । न॰ निसर्गसौम्यत्वे ॥ रामणीयके ॥ रसिकतायाम् ॥ काव्यगुणभेदे ॥ यथा । आल्हादकत्वं माधुर्यंशृङ्गारेद्रुतिकारणम् । शृङ्गारे॰ अर्थात्सम्भोगेद्रुतिर्गलितत्वमिव । श्रव्यत्त्वंपुनरोज : प्रसादयोरपि । करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् । अत्यन्तद्रुतिहेतु

स्यात् ॥ मधुरस्यभाव:। दृढादित्वा त्ष्यञ् ॥

माधूकम्। त्रि० मधूकस्यावयवे ॥ तद्विकारे कोपधाच्चे त्यण् ॥ मधुरभाषिणि ॥

माध्यन्दिन:। पुं० यजुर्वेदीयशाखाविशेषाध्यायिनि ॥ त्रि० मध्यमे ॥ मध्येभव:। मध्यमध्यन्दिनण्चास्मादितिवृत्ति: ॥

माध्यमम्। त्रि० मध्यमीये ॥ मध्येभवम्। मध्यान्मण्•इतिवृत्ति: ॥

माध्यमिक:। पुं० बौद्धावान्तर्भेदेशून्यवादिनि ॥ विज्ञानंक्षणिकंनात्माविद्युदभ्रनिमेषवत्। अन्यस्यानुपलब्धत्वाच्छून्यंमाध्यमिकागुः ॥

माध्यस्थम्। न० मध्यस्थत्वे ॥ अत्रैगुण्यात्पुरुषस्यमाध्यस्थ्यम् ॥ मध्यस्थस्यभाव:। ष्यञ् ॥ मध्यस्थकरणे ॥

माध्याह्निक.। पुं० बन्धूके ॥ त्रि० मध्याह्नभवे ॥ ठञ् ॥

माध्वकम्। न० माध्वीके ॥

माध्वी। स्त्री० मद्ये ॥ मध्वादिकृतसुरायाम्। मधुरकण्टकमत्स्ये ॥

माध्वीकम्। न० मधूकपुष्पै: कृतेमद्ये। मध्वासवे। माधवके ॥ मृद्वीका•द्राक्षा•तस्याविकार:। तस्यविकारइत्यण्। अनुदात्तादेश्चेत्यञ् वा। पृषोदरादि: ॥ मधुन: प्रभेदे ॥

माध्वीकफल:। पुं० मधुनालिकेरके ॥

माध्वीमधुरा। स्त्री० मधुखर्जूरिकायां ॥

मान:। पुं० चित्तसमुन्नतौ ॥ चित्तस्यसमुन्नतिरक्षुद्रतामान:। धनाद्युत्कर्षेणात्मनिचित्तोन्नतिर्मान:। मत्समोनान्योस्तीतिमननंमान: ॥ गर्वे। अपूज्यत्वेपिपूज्यत्वख्यापने ॥ आत्मनिपूज्यत्वाध्यासे ॥ पूज्यत्वे ॥ यथा। अधमा: कलिमिच्छन्तिसन्धिमिच्छन्तिमध्यमा: । उत्तमामानमिच्छन्तिमानोहिमहतांधनम् ॥ मानोहिमूलमर्थस्यमानेम्लानेधनेनकिम्। प्रभ्रष्टमानदर्पस्यकिंधनेनकिमायुषा। सत्कारे ॥ आत्मन्यविद्यमानगुणारोपेणोत्कर्षबुद्धौ ॥ प्रत्युत्थानाभिवादनादौ ॥ गुणवतिनिर्गुणत्वधीरूपस्मयोपिमानेन्तर्भवति ॥ यद्दे ॥ आदरे। सम्माने ॥ कोपविशेषे ॥ स्त्रीणामीर्ष्याकृत: कोपोमानोन्यासङ्गिनिप्रिये। प्रियापराधसूचिकाचेष्टामान: ॥ अनुरक्तयोर्दम्पत्योर्भावविशेषे ॥ यथा। दम्पत्योर्भावएकवसतोरप्यनुरक्तयो:। स्वाभीष्टाश्लेषवीक्षादिनिरोधीमानउच्यते ॥ न०प्रमाणे। प्रस्थादौ ॥ अवुद्ध

बोधकप्रमाणमितिप्रमाणलक्षणम् । प्रमा नाम्नविषयावभासकत्वंनिरपेक्षमिति तार्किकाः । आत्मसापेक्षमिति वैदिकाः । मानाधीनामेयसिद्धिर्मानसिद्धिश्चलक्षणादिभ्याहुः ॥ प्रस्थादौ परिमाणे । पौतवे । द्रवये । याप्ये । तत्तु तुलाङ्गुलिप्रस्थैस्त्रिविधं भवति । तत्रतुलायद्दणे मोप्मानाद्युपलच्यते । अङ्गुल्याहस्तादि । प्रस्थेनद्रोणादि ॥ ऊर्द्ध्वमानंकिलोन्मानंपरिमाणन्तु सर्वत: । आयामस्तुप्रमाणं स्यात्सङ्ख्यावाह्यातुसर्वत: ॥ मननम् । मनुअवबोधने । घञ् ॥

मानक: । पुं० न०कच्चीप्रभेदे । महापत्रे । मानकचू०मानसागर०हू० भा०प्रसिद्धकन्दे ॥ मानक: शोथघ्नच्छीत: पित्तरक्तहरोलघु: ॥

मानग्रन्थि: । पुं० अपराधे ॥

मानधन: । त्रि० अभिमानवति ॥

मानधानिका । स्त्री० कर्कट्याम् ॥

मानना । स्त्री० हनने ॥ माने ॥ मनसम्बेचुरादि: । ततोयुच् । त्रिलोलुक् ॥

माननीय: त्रि० मान्ये पूजनीये ॥

मानफलम् । न० अज्ञातार्थप्रकाशने ॥

मानभाक् । त्रि० अभिमानवति ॥ मान्ये ॥ यथा । तेषाम्तुसमवेतानांमान्यौस्नातकपार्थिवौ । राजस्नातकयोश्चैवस्नातकोनृपमानभागिति ॥

मानरम्या । स्त्री० ताम्बूम् । तांबी० हू० गौ० दे० भा० प्र० वाद्यविशेषे ॥ यथा । यामघोषोऽप्यताम्रीस्याम्मानरम्याधिकालिकेति० त्रिकाण्डशेष: ॥

मानव: । पुं० मनुष्ये । मनुजे ॥ मनोरयम् । तस्येदमित्यण् । यद्वा । मनोरपत्यम् । ब्राह्मणमाणवेतिज्ञापकादण् ॥ त्रि० मनुप्रोक्ते ॥ न० उपपुराणविशेषे ॥

मानवक: । पुं० बाले ॥

मानवर्ज्जित: । त्रि० मानरहिते ॥ नीचे ॥

मानवान् । त्रि० सत्कारवति ॥ कोपवति । मानोविद्यतेऽस्य । मतुप् ॥ स्त्री० उगितत्वान्ङीपि० मानवती ॥

मानवी । स्त्री० मनो: कन्यायाम् ॥ मानुष्याम् ॥ शासनदेवीविशेषे ॥ मनुप्रोक्तायाम् ॥ मनोरियम् । तस्येदमित्यण् । ङीप् ॥ विद्यादेवीविशेषे ॥

मानस: । पुं० जपविशेषे ॥ यचजिह्वौष्ठं मनागपिनचलतिसमानस: विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गुणै: । उपांशु: स्याच्छतगुण: साहस्रोमानस: स्मृतइतिमनूक्ते: ॥

न० स्वान्ते । मनसि ॥ अस्यगुणा यथा । परापरत्वं सङ्ख्याद्या : प त्ववेगश्चमानसे । इति० भा० प० ॥ मानसतापोयथा । कामक्रोध भयद्वेषलोभमोहविषादज : । शो कासूयावमानेर्ष्यामात्सर्यादिभयस्त था मानसोपिद्विजश्रेष्ठतापोभ वतिनैकधा । इ०वि०पु० ॥ मा नसंत्रिविधंकर्म यथा । परद्रव्येष्व भिध्यानंमनसाऽनिष्टचिन्तनम् । वितथाभिनिवेशश्चत्रिविधंकर्ममा नसम् ॥ सरोविशेषे ॥ यथोक्तमा र्षे रामायणे । कैलासपर्वते राम मनसानिर्मितंपरम् । ब्रह्मणानरशा र्दूल तेनेदंमानसंसर : ॥ तस्मात् सुस्राबसरस : सायोध्यामुपगूहते । सर : प्रवृत्तासरयू : पुण्याब्रह्मस रश्च्युता ॥ इति॥ मृगेन्द्रसंहिता यान्तु०मेरोर्याम्ये गन्धमादनोनाम विष्कम्भशैलस्तस्यमूलेनन्दनाख्यमु पवनमस्ति०तत्रमानसंनामसरइत्यु क्तं यथा । यामाद्रिमूलेगन्धर्वसुरसि द्धाप्सरोवृतम् । नन्दनंमानसंतत्रस रोमानसतस्करम् ॥ इति ॥ त्रि० मनोभवे ॥ यथा । विषयेष्वतिसं रागोमानसोमलउच्यते ॥ अनूढा नङ्गपीडेवममेयं मानसीव्यथा ॥ सङ्कल्प : कर्म मानसमिति ॥ न० गिरिविशेषे ॥ मन्यतेऽनेन । मन स्यागे । असुन् । तत : प्रज्ञाद्यण् ॥

मानसतीर्थम् । न० रागादिरहिते मनसि ॥ मनोनिर्मलतीर्थंस्थरागा दिभिरनाविलमिति ॥

मानसपूजा । स्त्री० मनोरचितद्रव्यक रणकसपर्यायाम् ॥

मानसयाग : । पुं० यागेषुप्रथमे ।' अ० कृत्वामानसंयागंयोन्यंयागंसमा- रभेत् । अशिव : सतुविज्ञेयोनमो वायविधीयते ।। आत्मयागेकृतेचै- वदेहशुद्धि : प्रजायते ॥

मानसवासना । स्त्री० कामक्रोधदम्भ दर्पाद्यासुरसम्पदि ॥ काम्यमानत्व दशाजन्यसंस्कारे ॥

मानसव्रतम् । न० अहिंसादौ ॥ यथा । अहिंसासत्यमस्तेयंब्रह्मचर्यमक ल्पता । एतानिमानसान्याहुर्व्रता नितुधराधरे ॥ इ० वराहपुराण म् ॥

मानसालय : । पुं० हंसे ॥ मानस मालयोऽस्य ॥

मानसिकम् । न० मन : कल्पिते ॥

मानसी । स्त्री विद्यादेवीविशेषे ॥ म- न : कल्पितासाम् ॥

मानसूत्रम् । न० स्वर्णादिनिर्मितेक टिसूत्रे ॥

मानसोत्तर : । पुं० मेरो : प्राकारवत् परित : स्थितेमहापर्वते ॥

मानसौका : । पुं० हंसे ।। मानसंसर

भोकोऽस्य ॥
मानाथ : । पुं० लक्ष्मीकान्ते । नारायणे ॥
मानार्थकम् । न० यौतवे ॥ मानमर्थोयस्यतत् ॥
मानास : । त्रि० पराहङ्कारद्वारिणि ॥ मानमस्यति । असु० । कर्म्मण्यण् ॥
मानिका । स्त्री० मद्ये ॥ शरावे । सेर० इतिभाषा ॥ इतिवैद्यकपरिभाषा ॥
मानित : त्रि० पूजिते ॥ मान : सञ्जातोऽस्य । तारकादित्वादितच् ॥
मानिता । स्त्री० अभिमानितायाम् । मानिनोभाव : । तल् ॥
मानित्वम् । न० विद्यमानैरविद्यमानैर्वागुणैरात्मन : श्लाघने ॥ भावेत्व : ॥
मानी । पुं० सिंहे ॥ त्रि० मानविशिष्टे ॥ अहङ्कारिणि ॥ मननशीले ॥ मानोस्यास्ति० अस्मिन्वा । इनि : । अनात्मवस्तुष्वात्माभिमानोमान : । सोऽस्यास्तीतिमानी ॥
मानिनी । स्त्री० फल्याम् । प्रियङ्गौ ॥ मानवत्याम् । स्त्रीविशेषे ॥ उत्तमयोषिति । मानश्चित्तोन्नतिरस्त्यस्या : । इनि : । ङीप् ॥ कोपनायाम् ॥ स्त्रीणामीर्ष्याकृत : कोपो मानोन्यासङ्गिनिप्रिये० इतिलक्षणात् ॥
मानिषाद : । पुं० श्रीरामे ॥ मा० लक्ष्मीरस्मिन्विष्णौनिषीदति० तिष्ठति । षद्लृ० । इलश्चेतिघञ् । सदिरप्रतेरितिषत्वम् ॥
मानुष : । पुं० मनुष्ये ॥ मनोरपत्यम् । मनोर्जातावञ्यतौषुक्च ॥ आसुरविवाहे ॥ शुल्केनासुरइति हारीतसूत्रात् ॥ त्रि० मनुष्यसम्बन्धिनि ॥ मनुष्यस्यायम् । तस्येदमित्यण् । आपत्यस्येतियलोप : ॥ येऽब्धामन्दमतयोविधिनामुषिताश्चये । तेप्राप्यमानुषंजन्मपुनर्बन्धं विशन्त्युत ॥
मानुषतीर्थम् । न० तीर्थविशेषे ॥
मानुषवित्तम् । पुं० शरीरपाटवे ॥ गोभूहिरण्यादिसाधनसम्पत्तौ ॥ मानुषञ्चतद्वित्तञ्च ॥
मानुषी । स्त्री० नरभार्यायाम् ॥ मनोरपत्यंस्त्री । मनोर्जातावञ्यतौषुक्च । टिड्ढेतिङीप् ॥ जातिविवक्षायापरत्त्वान्ङीन् ॥ पुंयोगेतुङीष् ॥ चिकित्साप्रभेदे ॥ यथा आसुरीमानुषीदैवीचिकित्सासाविधामता ॥
मानुष्य: । पुं० त्रिविधभौतिकसर्गे ॥ सर्वैकविध: ० ब्राह्मणाद्यवान्तरजातिभेदाविवक्षया० संस्थानस्य

चतुर्ष्वपि वर्णेष्वविशेषात् । चैतन्योत्कर्षनिष्कर्षतारतम्याभ्यामूर्ध्वाधोमध्यभाविनश्चैविध्यंबोध्यम् ॥ न० मनुष्यत्वे ॥ मनुष्यशरीरे ॥ मानुष्ये वाइलीसम्भनि : सासरीरमार्गणम् ॥

मानुष्यकम् । न० मानुषस्य घे । मनुष्याणांसमूह : । गोभोखोष्टोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् । प्रकृत्याशीराजन्यमनुष्ययुवानइतियलोपोन ॥ मनुष्याणांभावेयोपधाद्गुरूपोत्तमाद्वुञ् ॥

मानोज्ञकम् । न० मनोज्ञतायाम् ॥ मनोज्ञस्यभाव : । द्वन्द्वमनोज्ञादिभ्यश्चेतिवुञ् ॥

मान्त्रर्षिकम् । न० मन्त्रर्षौ ० व्रह्मर्षि ॥

मान्द्यम् । न० मन्दत्वे । मन्दस्यकर्मभावयो : ॥ पत्यन्तपुरोहितादिभ्योयक् ॥ रोगे ॥

मान्धाता । पुं० युवनाश्वनृपात्मजे । सौवमार्ग्ये राजनि ॥ मामयंधास्यतीतिदेवराज्ञवचनात् । मान्धाता नामतोऽभवत् । यावत्सूर्यउदेति सयावच्चप्रतितिष्ठति । सर्वंतद्यौवनाश्वस्यमान्धातु : क्षेत्रमुच्यते ॥

मान्य : । त्रि० पूज्ये । सम्मान्ये । मानार्हे ॥ मानपूजायामस्माद्बुरादिण्यन्तादर्हार्थे यत्प्रत्यय : ॥

मान्यस्थानम् । न० पूज्यत्वकारणे ॥ ॥ यथा । वित्तंबन्धुर्वय : कर्मविद्याभवतिपञ्चमी । एतानिमान्यस्थानानिगरीयोयद्यदुत्तरम् ॥ पञ्चानांत्रिषुवर्णेषुभूयांसिगुणवन्ति च । यत्रस्यु : सोऽत्रमानार्ह : शूद्रोपिदशमींगत : ॥

मान्या । स्त्री० पृक्कायाम् । मरुन्मालायामौषधौ ॥

मापक : । पुं० प्रमापके । प्रमाजनके । शब्दे ॥

मापत्य : । पुं० कामदेवे ॥

मापन : । पुं० तूले ॥ न० परिमाणे ॥

मापित : । त्रि० परिच्छिन्ने ॥ मातेर्माङोवा० ण्यन्तात्कर्मणिक्त : । अर्तिह्रीव्लीर्यादिनापुगागम : ॥

माभी : । स्त्री० अभये ॥ नञर्थंमाशब्दस्यभीशब्देन सुप्सुपेतिसमास : ॥

माभैद : । त्रि० अभयप्रभेदे ॥ माभैं ददाति । बुदाञ् । आतश्चोलिक : ॥

मामक : । पुं० मातुले ॥ कृपणे ॥ त्रि० मदीये ॥ ममतायुक्ते ॥ ममायम् । अण् । ममकादेश : ॥

मामकीन : । त्रि० मदीये । मामके ॥ ममाऽयम् । युष्मदस्मदोरन्यतरस्यां खञ्चेति खञ् । तवकममकावेक

वचनेइतिममकादेश : ॥

मामिका । स्त्री॰ ममसम्बन्धिन्याम् ॥ ममेयम् । युष्मदस्मदोरन्यत० । तवकममकावितिममकादेश : । आदिवृत्ति : । केवलममकेत्यादिनासंज्ञाछन्दसोरितिनियमात् ङीप् । मामकनरकयोरुपसङ्ख्यानादित्वम् ॥

माय : । पुं॰ पीताम्बरे । पीतवस्त्रे ॥ असुरे इ॰ मेदिनी ॥ अम्बरेइतिहेमचन्द्र : ॥ माति॰ मिमीते वा । मामाने॰ माङ्मानेशब्देच । माच्छासिसिभ्योय : ॥

माया । स्त्री॰ इन्द्रजालादौ । शाम्बर्याम् ॥ शम्बरदैत्येनप्राङ्निर्मितत्वात् ॥ बुद्धौ । कृपायाम् ॥ दम्भे ॥ शठतायाम् ॥ यथा । मायातुशठताशाठ्यंकुसृतिर्निकृतिश्चसेति ॥ राज्ञांक्षुद्रोपायविशेषे ॥ यथा । मायैवेन्द्रजालानिचक्षुद्रो । उपायाइमे त्रय : । इति ॥ लक्ष्म्याम् । बुद्धमातरि ॥ दुर्गायाम् । यथा । दुर्गेशिवेऽभयेमायेनारायणिसनातनि । जयेमेमङ्गलंदेहिनमस्तेसर्वमङ्गले ॥ राजन्श्रीवचनोमाश्चयाश्चप्रापणवाचक: । तांप्रापयतियासद्य: सामायापरिकीर्त्तिता ॥ माश्चमोहार्थवचनोयाश्चप्रापणवाचक : । तांप्रापयतियानित्यंसामायापरिकीर्त्तिता ॥ इ॰ ब्र॰वै॰पु॰ ॥ अपिच । विचित्रकार्यकारणाअचिन्तितफलप्रदा । स्वप्नेन्द्रजालवल्लोकेमायातेनप्रकीर्त्तिता ॥ इतिदेवीपुराणम् ॥ सगुणानिर्गुणामायाशक्ति : शास्त्रेषुविश्रुता । तत्रसगुणा॰एकैकगुणविशिष्टमहाकाल्यादिरूपा । निर्गुणागुणत्रयसाम्यावस्थारूपेतिविवेक : । तत्रसाम्यावस्थाश्रयब्रह्मणोऽपिनिर्गुणपदेनागतंशक्तिशक्तिमतोरभेदात् ॥ विसदृशप्रतीतिसाधनंमायेतिनागोजीभट्ट: ॥ युक्तिहीनविचारत्वसंज्ञामायेतिकथ्यते ॥ अघटनघटनापटीयस्याम् ॥ विपरीतदर्शने ॥ इहयैऽन्यथाज्ञानवैशिष्ट्यंव्यवहरणे । कपटे । परवञ्चनेच्छायाम् ॥ ईश्वरशक्तौ । प्रकृतौ । अविद्यायाम् ॥ अज्ञाने । प्रधाने । शक्तौ । अजायाम् ॥ शुद्धसत्त्वप्रधानामाया॰मलिनसत्त्वप्रधानाअविद्येतिभेद : ॥ सृष्टिकालेभगवानादौमायांप्रकाशयामास । साद्रष्टृदृश्यानुसन्धानरूपा॰कार्यकारणरूपाच । सत्त्वरजस्तमोगुणमयी॰तस्या : शक्तिद्वयम् । आवरणशक्तिर्विक्षेपशक्तिश्च । तस्मामायायामहत्तत्त्वंजातम्॰तस्मादहंकार : ॰तस्मात्पञ्चभूतानि॰तेभ्योब्रह्माण्डम् ॥ विष्णुमायास्वरूपन्तुवाराहपुराणेद्रष्टव्यम् ॥ तत्त्व

प्रतिभासप्रतिवर्म्भनातत्त्वप्रतिभास
हेतुरावरणविक्षेपशक्तिद्वयवत्यविद्या
॰सर्वप्रपञ्चप्रकृतिः । विद्यमानंवस्तु
रूपमावृणोति॰अविद्यमानञ्चकिञ्चि
द्दर्शयति॰या॰सा॰माया ॥ निस-
त्त्वाकार्यगम्यास्यशक्तिर्मायेतिविश्रु-
ता ॥ निखिलप्रपञ्चं प्रतिमायायाः
कारणत्वम् । मूलोच्छेदंविनाक्वा-
चित्प्ररोहन्तिपुनः पुनः । यथा-
लतातथाविभ्रमज्ञानप्रशमं विना ॥
अतोस्य मूलमज्ञानमेव । अतएव ।
पूर्णशतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्त
का: । दशमन्वन्तराणीहतिष्ठन्ती-
न्द्रियचिन्तका: ॥ भौतिकास्तुशतं
पूर्णं सहस्रं त्वाभिमानिका: ॥ बौ
द्धादशसहस्राणितिष्ठन्तिविगतज्व-
रा: ॥ पुरुषं निर्गुणं प्राप्यकालस-
ङ्ख्यानविद्यते । इतिपुराणेऽव्य-
क्तादीन् पुरुषबुद्ध्योपासितवतांपुनर्ज
न्माभिधाय॰ पुरुषं निर्गुणमित्या-
दिनामूल ज्ञाननिवर्त्तितवतः पु
रुषसाक्षात्कारेणपुनर्जन्माभाव
प्रतिपादितः ॥ तुच्छाऽनिर्वचनी-
याचवास्तवीचेत्यसौत्रिधा । ज्ञेया
मायात्रिभिर्बोधैः श्रौतयौक्तिकलौ
किकैः ॥ अस्यस्वरूपं स्पष्टमुक्तं श्री
देवीभागवतस्यसप्तमस्कन्धे देवीगी-
तायांभगवत्या । यथा । तस्यका-
चित्स्वतः सिद्धाशक्तिर्मायेतिविश्रु



ता ॥ ॥ काचित्॰अनिर्वचनीया॰
तस्यममात्मरूपस्य॰स्वतः सिद्धा॰
अनादिभूताशक्तिरस्ति॰सामायेत्या
दिपदैः सर्वश्रुतौविश्रुताप्रसिद्धा-
स्ति । मायान्तुप्रकृतिंविद्यात्॰मा-
यांवाएषानारसिंहीत्यादिश्रुतिषु ॥
साकीदृशीवर्त्ततेतदाह । नसती॰
सानासती॰ सा॰ नोभयात्माविं-
रोधतः ॥ एतद्विलक्षणाकाचिद्
वस्तुभूतास्तिसर्वदा ॥ अत्रविरो-
धतइत्यावृत्त्या॰ स्थानत्रयेपियोज्य
म् । ब्रह्मवत्कालत्रयाबाध्यास-
ती॰नवर्त्तते॰ ब्रह्मज्ञानेनबाध्यत्व
रूपविरोधात् । नापिवन्ध्यापुत्रवत्॰
असती॰व्यावहारिकसत्तावत्त्वविरो
धात् । नाप्युभयात्मा॰सत्त्वासत्त्व-
विशिष्टविरुद्धधर्मयोः सत्त्वासत्त्व
योरेकत्रसहावस्थानविरोधात् । अ
तएतत्त्रयविलक्षणाकाचिदनिर्वच
नीयावस्तुभूतास्तिसर्वदा॰अनादि-
र्यावन्मोक्षस्थायिन्यस्तीत्यर्थः ।
तथाचतापनीयश्रुतिः । मायाचत
मोरूपानुभूतेस्तदेतज्जडं मोहात्मक
मनन्तंतुच्छमिदंरूपमस्यास्यव्यञ्जि-
कानित्यनिवृत्ताविमूढैरात्मैवदृष्टा-
स्यसत्त्वमसत्त्वञ्चदर्शयति । त-
त्रदृष्टान्तमाह । पावकस्येति ॥
॥ पावकस्योष्णतेयमुष्णांशोरिवदी-
धितिः । चन्द्रस्यचन्द्रिकेवेयंममे

यंसच्छजाध्रुवा ॥ सच्छजाऽमादि: ॰ श्रुशायावन्मोचस्थायिनीमायाशक्ति र्ममास्तीत्यर्थ: । एतेन मायाशक्त्या सद्वितीयत्त्वं ब्रह्मणोस्तीति॰ कथंजगत्सृष्टे :पूर्वंब्रह्मसजातीयभेदशून्य मितिशङ्कापरास्ता॰ शक्ते : श-क्तानतिरेकात्॰ नहिवह्निशक्तिर्व-ह्ने : पृथक्त्वे न॰ क्वचित्कदाचि दृश्यते । किन्त्वद्वितीय: सत्यपदा र्थोनास्तीत्यर्थे वैकमेवाद्वितीयंब्रह्मेति श्रुतेरर्थ : । तथाचासत्यामायया सद्वितीयत्वे पिदोषाभावात्॰ इति ॥ विश्वं माव्यस्याम्॰ मिमीतेवा । मामाने॰ माङ् मानेवा । माच्छा ससिभ्योय: । मांयातिवा । चातो युपेतिक : ॥ वर्णवृत्तान्तरे ॥ तल्ल क्षणम् । कृत्वाकर्णौकुण्डलयुक्तौकु रुतंद्त्वापादंनूपुरयुक्तंकुरुहारम् । मायावृत्तंपिङ्गलनागोदितमेतज् जानीताऽदः पण्डितवक्त्राम्बुजसारम् ॥ यथा । उद्यद्वाधासम्प्रतिराधामधुमासे॰ शक्के सक्के । तत्प्रतियातांकिमुदासे । कलीकुञ्जं शून्यमवेत्यास्तरचस्याप्राणधाया भाविकथं वावदतस्या : ॥

मायाकार : । चि॰ ऐन्द्रजालिके । प्रातिहारिके । मायां॰ स्थलजला दीजलस्थलादिज्ञानंकरोति । कृञ्‌ अ॰ । कर्म्मण्यण् ॥

मायाकृत् । पुं॰ मायाकारे । प्रातिहारिके ॥

मायाजीवी । पुं॰ प्रातिहारिके । वाजीकर इ॰ भा॰ प्रसिद्धे ॥

मायाति : । पुं॰ मरवके ॥

मायाद : । पुं॰ कुम्भीरे ॥

मायादेवी । स्त्री॰ शाक्यमुनेर्जनन्याम् ॥

मायादेवीसुत : । पुं॰ शाक्यमुनौ । शाक्यसिंहे । गौतमे । पर्व्वबन्धौ । बुद्धभेदे ॥ मायानामासोदेवीच । तस्या : सुत : ॥

मायाधमन : । पुं॰ मायाशमने॰ भगवति ॥

मायाफलम् । न॰ फलविशेषे । छिद्राफले । मायिफले । माजूफल॰ इ॰ गौ॰ भा॰ ॥

मायामय : । चि॰ मायाविनाकृते ॥ न॰ जगति ॥ नमिरूपयितुं शक्या विस्पष्टं भासतेचया । सामायेती न्द्रजालादौलोका: सम्प्रतिपेदिरे ॥ स्पष्टं भातिजगच्चेदमशक्यंतन्निरूपणम् । मायामयंजगत्तस्मादीक्षस्वापक्षपातत : ॥

मायामोह : । पुं॰ सर्व्वधर्म्मप्रवर्त्तके॰ भगवदंशेऽसुराणांमोहायोत्पन्ने ॥

मायारसिक : । चि॰ परप्रतारके ॥ मायायांरसिक : ॥

मायावान् । चि॰ मायासंयुक्ते । मा

यात्विनि । मायास्त्यस्यास्मिन्वाम तुप् ॥

मायावती । स्त्री० कामदेवपत्न्याम् । रत्याम् । उगित्त्वान्ङीप् ।

मायावी । पुं० कंसासुरे । विडाले ॥ त्रि० मायाकारे । व्यंसके । ऐन्द्र जालिके । मायास्यास्ति० अस्मि-न्वा । अस्मायामेधास्रजोविनिः ॥

मायाविनोदः । पुं० दैत्यदानवादौ ॥ मायायामायायांवाविनोदश्चमत्का-रविशेषः क्रीडावाऽस्येतिविग्रहः ॥

मायाशक्तिः । स्त्री० आवरण विक्षेप शक्तिसम्पन्नायाम् ॥

मायासीता । स्त्री० योगेनाग्निकृत सीताप्रकृतौ ।

मायासुतः । पुं० बुद्धे ॥ मायायाः सुतः ॥

मायिकः । पुं० मायाकारे ॥ माया-स्त्यस्य । व्रीह्यादिपाठाट्ठन् ॥ न० मायाफले । त्रि० मृषात्मके ॥

मायी । पुं० मायाकारे । धूर्त्ते । जालि के ॥ मायाविनि । मायाशक्तिम-ति० महेश्वरे । मायायाः प्रकृते र्नियामके ॥ मायान्तुप्रकृतिंविद्या-न्मायिनन्तुमहेश्वरम् । समाख्यन्ह जतेत्याहुः श्वेताश्वतरशाखिनः ॥ मायाऽस्त्य० अस्मिन्वाऽस्ति । व्रीह्यादिपाठादिनिः ।

मायुः । पुं० पित्ते ॥ मिनोति० प्र-क्षिपतिदेहेजप्राणम् । डुमिञ्प्र-क्षेपणे । कृवापाजिमीत्युण् ॥

मायुराजः । पुं० कुबेरात्मजे । वर्ण कवौ ॥

मायूरम् । न० मयूरसमूहे । मयूराणां समूहः । अनुदात्तादेरञ् ॥ मयू-रमांसे । मयूरस्यावयवोविकारो-वा । प्राणिरजतादिभ्योऽञ् ॥ मायू रंपाचितंमांसंघृतेचोपस्करान्विते । ईषल्लवणसंयुक्तंमरिचैलासमन्वित-म् ॥ कषायमुष्णंमायूरंकफानिल-हरंगुरु । वर्षाकालेनतत्सेव्यंदुष्ट-कीटादिभक्षणात् ॥

मायूरिकः । पुं० मयूरग्राहिणिशाकु-निके ॥ मयूरान्हन्तिपक्षिमत्स्यमृ-गान्हन्तीतिठक् ॥

मायूरी । स्त्री० अजमोदायाम् ॥

मारः । पुं० अनङ्गे । स्मरे । मारय-ति०विरहिणम् । पचाद्यच् । मृ-तौ ॥ विघ्ने ॥ धत्तूरे ॥ मारणे ॥ म्रियतेऽनेन । मृङ्० । करणे-घञ् ॥

मारकः । पुं० मरके । उत्पाते ॥ प-क्षिविशेषे । घातपक्षिणि । वाज०-डु०भा० ॥ त्रि०मारणकर्त्तरि ॥

मारजित् । पुं० जिने । बुद्धे ॥ मारं-कामंजयति । जि० । सत्सूद्विषेति क्विप् । तुक् ॥

मारणम् । न० प्रतिघातने । वधे ॥

अभिचारविशेषे ॥ प्राणिनांप्राणहरणं मारणं समुदाहृतम् ॥ मृहिंसायाम् । स्वार्थे णन्तः । ल्युट् ॥
मारिः । स्त्री० मारणे । वर्षे ॥ जनक्षये । मरके ॥
मारिचिकम् । त्रि० मरिचैः संस्कृते ॥ संस्कृतमितिठक् ॥
मारितः । त्रि० नष्टीकृते ॥ भस्मीकृते ॥
मारिव्यसनवारकः । पुं० राजर्षिविशेषे ॥
मारिषः । पुं० नाट्योक्त्या० आर्ये । मान्ये । श्रेष्ठे ॥ मर्षणात् ०सहनात्मारिषः । पृषोदरादिः ॥ मर्ष० हु० प्र० शाकविशेषे ॥ श्वेतरक्तप्रभेदेनद्विविधोमारिषः स्मृतः ॥ मारिषोमधुरः शीतोविष्टम्भीपित्तनुद्गुरुः । वातश्लेष्मकरोरक्तपित्तनुद्विषमाग्निजित् ॥ रक्तमार्षोगुरुर्नातिसक्षारोमधुरः सरः । श्लेष्मलः कटुकः पाकेस्वल्पदोषउदीरितः । रक्तनाडादयश्चान्ये तज्जातीयाश्च तद्गुणाः ॥
मारिषा । स्त्री० दक्षाम्बायाम् । वार्क्ष्याम् । प्रचेतसांभार्यायाम् ॥
मारी । स्त्री० चण्डाम् ॥ जनक्षये ॥ मारीनामयुगपदनेकलोकक्षयहेतुरुत्पातोविशिष्टदेवताधिष्ठानः । साचदेवताप्रे तपतिनाज्ञप्तायथकर्तव्यकार्यंकरोति ॥ मारीश्वर्यांश्यामौ ॥
मारीचः । पुं० राक्षसविशेषे । ताडकाराक्षसीपुत्रे । रावणानुचरे ॥ अयञ्चसीताहरणकालेमायामृगरूपः श्रीरामेणहतः ॥ कक्कोले ॥ याजकद्विपे ॥ याजकद्विजइतिपाठः ॥ राज्ञोगजे ॥ काश्यपे ॥ मरीचेरपत्यम् । तस्यापत्यमित्यण्० इतिकाशिका । वस्तुतस्तु० बाह्वादिभ्यश्चेति० इञाभाव्यम् । तथाच० मिद्चोन्त्यात्परइतिसूत्रेभाष्यम् । मरीचिशब्दोबाह्वादिषुपठ्यतइति। न० मरीचानांवने ॥
मारीची । स्त्री० देवताविशेषे । मायादेव्याम् । पोत्रिरथायाम् । विमुखायाम् ॥
मारुण्डः । पुं० भुजङ्गाण्डे ॥ पथि । मार्गे ॥ गोमयमण्डले ॥
मारुतः । पुं० श्वसने । स्पर्शने । वायौ ॥ म्रियन्तेऽनेनमृतेन० विना वा । मृङ्० । मृग्रोरुतिः । मरुदेव० प्रज्ञाद्यण् ।
मारुतव्रतम् । न० राज्ञोव्रतविशेषे ॥ यथा । प्रविश्यसर्वभूतानियथाचरतिमारुतः । तथाचारैः प्रवेष्टव्यंव्रतमेतद्धिमारुतम् ॥
मारुतात्मजः । पुं० हनुमति ॥ मरुतस्यात्मजः ॥

मारुतापह : । पुं॰ वरुणवृक्षे ॥ त्रि॰ वायुनाशके ॥

मारुताशन : । पुं॰ पवनाशने । सर्पे ॥ त्रि॰ वायुमात्रभक्षके ॥

मारुति : । पुं॰ हनूमति ॥ भीमसेने ॥ मारुतस्यापत्यम् । अतइञ् ॥

मार्कण्ड : । पुं॰ मार्कण्डेयमुनौ ॥ मृकण्डस्यापत्यम् । अण् ॥

मार्कण्डिका । स्त्री॰ लताविशेषे । मृदुरेचन्याम् । भुञिखखसा॰ इ॰ भा॰ ॥ मार्कण्डिकाकुष्ठहरीऊर्द्ध्वाध : कायशोधिनी । विषदुर्गन्धकासघ्नीगुल्मोदरविनाशिनी ॥

मार्कण्डी । स्त्री॰ मार्कण्डिकायाम् ॥

मार्कण्डीयम् । न॰ भूम्याहुल्ये महौषधे ॥

मार्कण्डेय : । पुं॰ मुनिविशेषे ॥ सप्तकल्पावस्थोप्ययंमुनि : । यथोक्तम् । चतुर्दशेन्द्रावच्छिन्नोब्रह्मणोदिनमुच्यते । तावतीब्रह्मणोरात्रि : साचब्राह्मीनिशानृप ॥ कालरात्रिश्चसाज्ञेयावेदेषुपरिकीर्त्तिता । एवंसप्तकल्पजीवीमार्कण्डेयोमहातपा : ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ मृकण्डस्यापत्यम् ॥ शुभ्रादित्वाड्ढक् । शुभ्रादिषूकारान्तपाठे तु ॰ ढेलोपोबोध्य : ॥ द्विभुजंजटिलंसौम्यंसुवृद्धंचिरजीविनम् । मार्कण्डेयंनरोभक्त्यापूजयेच्चचिरायुषम् ॥ न॰ नवसहस्रश्लोकात्मकेपुराणविशेषे ॥ यथा । चतुर्दशसहस्रञ्चमत्स्यमाद्यंप्रकीर्त्तितम् । तथानवसहस्रन्तुमार्कण्डेयंमहाद्भुतमितिदेवीभागवतम् ॥

मार्क्व : । पुं॰ भृङ्गराजे । भंगरा॰ इ॰ भा॰ ॥ मारयति । क्विप् । मारि॰ केशशौक्ल्यनाशने॰ कूयते । कुङ्शब्दे । ऋदोरप् ॥

मार्ग : । पुं॰ मृगमदे ॥ मार्गशीर्षमासे ॥ अन्वेषणे ॥ सौम्यर्क्षे । मृगशिरोनक्षत्रे ॥ पायौ । गुदे । अपाने ॥ लग्नात्सप्तमभवने ॥ गानप्रकारे । देशविशेषनैरपेक्ष्येण शास्त्रप्रतिपादिते सार्वत्रिकरागप्रकारे ॥ अध्वनि । पथि ॥ तत्परिमाणंयथा । त्रिंशद्धनूंषिविस्तीर्णोदेशमार्गस्तुत : कृत : । विंशद्धनुर्ग्राममार्ग : सीमामार्गोदशैवतु ॥ धनूंषिदशविस्तीर्ण : श्रीमान्राजपथ : कृत : । नृपाजिरथनागानामसम्बाध : सुसञ्चर : ॥ धनूंषिचैवचत्वारि शाखारथ्यास्तुनिर्मिता : । त्रिकरायोपरथ्यास्तु द्विकराप्युपरथ्यका ॥ जङ्घापथश्चतुष्पादस्त्रिपादग्रहान्तरम् । वृतीपादस्त्वर्द्धपाद : प्राग्वंश : पादक : स्मृत : ॥ अवकर : परीवार : पानमात्र : समन्तत : । प्रावृट्कालेतुप्रावृतीकस्

व्याघ्रयथानहि ॥ इतिदेवीपुराणे त्रैलोक्याभ्युदयेगोपुरद्वार लक्षणाध्याय : ॥ मृगेणयुक्तापौर्णमासी मार्गी॰सास्मिन्नस्ति। अण् ॥ मृज्यते विलक्षणीक्रियते पादैः। मृजूशुद्धौ। मार्ग्यते वा। मृगस्य वेषणे। घञ् ॥ मार्गोद्विजाङ्गलानूपाटविकविषयस्ं देनचिाबधोघ्रे य : ॥ सम्प्रदाये ॥ त्रि॰ मृगसम्बन्धिनि ॥

मार्गक : । पुं॰ आग्रहायणे ॥

मार्गण : । पं॰ शरे ॥ न॰ अन्वेषणे । संवीक्षणे ॥ याञ्चायाम् । याचने ॥ त्रि॰ अर्थिनि । याचके ॥ मार्गअन्वेषणे । बहुलमन्यत्रापीतियुच् ॥ मार्ग॰ ल्युट् ॥ मार्गयति । मार्ग्यते वा । ल्युः क्वत्यल्युट इ तल्युट् ॥

मार्गणक : । पुं॰ याचके ॥

मार्गधेनु : । पुं॰ )

मार्गधेनुक ( । न॰ ) योजनपरिमाणे ॥

मार्गव : । निषादादायोगव्यामुत्पन्ने दाशापरनामनि ॥ निषादोमार्गवंसूतेदाशंनौकर्म्मजीविनम् कैवर्त्तमितियंप्राहुरार्यावर्त्तनिवासिन : ॥

मार्गशिर : । पुं॰ मार्गमासे ॥

मार्गशीर्ष : । पुं॰ सहसि । मार्गे । आग्रहायणिके । मंगसिर॰ इ॰ भा॰ ॥ द्वादशमासानांमध्ये॰ अभिनवशालिवास्तूकशाकादिशाली॰ शीतातपशून्यत्वं नचसुखहेतुर्मार्गशीर्षोभगवद्विभूति: । मासानांमार्गशीर्षोहमितिभगवद्वचनात् ॥ अत्रजातस्यफलंयथा । यस्यप्रसूति: खलुमार्गमासितीर्थप्रवासीसततंमति : स्यात् । परोपकारीधृतसाधुवृत्ति : सद्वृत्तियुक्तोललनाभिलाषी । मृगशिरसायुक्तापौर्णमासी । नक्षत्रेणयुक्त : कालइत्यण् । ततो ङीप् । मार्गशीर्षीपौर्णमासीत्यण् ॥ त्रि॰ मृगशिरसिजाते ॥ सन्धिवेलेत्यण् ॥

मार्गिक : । पुं॰ हारिणिके । मृगहन्तरि ॥ मृगान्हन्ति। पक्षिमत्स्येतिठक् ॥

मार्गित : । त्रि॰ अन्वेषिते ॥ मार्ग्यतेस्म । म॰ । क्त : ॥

मार्गीषोधो । स्त्री॰ दक्षिणमार्गेनक्षत्रविशेषाणांसंज्ञाविशेष ॥ यथा । श्रवणाद्यधनिष्ठाचमार्गीति ॥

मार्ज : । पुं॰ विष्णौ ॥ अङ्गादिनिर्मलीकरणे । मार्जने । रजके ॥

मार्जन : । पुं॰ लोध्रवृक्षे ॥ न॰ प्रोञ्छनादिनाऽङ्गनिर्मलीकरणे । मार्ष्टौ । मांजना॰ इ॰ भा॰ ॥ स्नानकालेशरीरमार्जनगुणा: यथा ।

दौर्गन्ध्यं गौरवं कण्डूं कच्छुं मलमरी-चकम् । खेदं बीभत्सतां हन्ति शरीरपरिमार्जनमिति ॥ देवीगृहमार्जनफलं यथा । देव्यागृहन्तु य : शुभ्रं सम्मार्जयति नित्यशः । स भवेद्दलवान् सौख्य सर्वसम्पत्तिसंयुतः इति ॥ मर्द्दनानां ध्वमनार्थं भस्म मृदिताम्भसा पुष्करलेपनी ॥ मार्ष्टि अनेन । मृजू शुद्धौ । ल्युट् ॥

मार्ज्जना । स्त्री० मलस्यापकर्षणे । मार्ष्टौ । मार्जने । मांजना० इ० भा० ॥ मार्जनम् । मृजू० । मृजू शौचालङ्करणयोर्वा । चुरादि । ण्यास श्रन्थोयुच् ॥ मुरजध्वनौ ॥

मार्ज्जनी । स्त्री० सम्मार्जन्याम् । शोधन्याम् । सोहनी० इ० भा० ॥ मार्ज्यतेऽनया । मृजू० । करणे ल्युट् । इवि : । ङीप् ॥

मार्ज्जनीय : । त्रि० सङ्करे अवकरे ॥ मार्ज्जितुंयोग्यः । अनीयर् ॥

मार्ज्जार : । पुं० खट्टाशे । रक्तचित्रके ॥ चोते । विडाले ॥ अस्य-स्पर्शने दोषो यथा । अभोज्यसूतिकाशण्ढमारजाराखु श्वकुक्कुटान् । पतितापविद्धचण्डालमृतहारांश्च धर्मवित् । संस्पृश्य शुध्यते स्नाना दुदक्यायामशूकरौ ॥ मार्ष्टि मुखम् । मृज्० कृञ्मिमृजिभ्यांचिदित्यारन् । मृजेर्वृद्धि : । पारि

भाषिकमार्जारीयथा । दक्षार्थं जपतीयश्च तप्यतीय जतीतथा । मरपचार्थं मुद्यस्तोमार्जार : परिकीर्त्तितः ॥

मार्ज्जारक : । पुं० मयूरे । सिताप-ाङ्गे ॥

मार्ज्जारकरणम् । न० रतबन्धान्तरे ॥ यथा । प्रसारितौ पाणिपादे शय्यायाभिमुखीरसि । उन्नताया : स्त्रियाः कुर्य्यांमार्ज्जारकरणं विदु : ॥

मार्ज्जारकर्णिका । स्त्री० चामुण्डादेव्याम् । चर्म्ममुण्डायाम् ॥

मार्ज्जारकर्णी । स्त्री० चामुण्डायाम् ॥

मार्ज्जारगन्धा । स्त्री० मुद्गपर्णी विशेषे ॥

मार्ज्जारगन्धिका । स्त्री० मुद्गपर्ण्याम् ॥

मार्ज्जारलिङ्गिक : । त्रि० वैडालव्रतिके ॥

मार्ज्जारी । स्त्री० मार्ज्जारस्त्रियाम् ॥ कस्तूर्याम् ॥ जन्तुविशेषे । पूतिकायाम् । गन्धचेलिकायाम् । गन्ध-गोकुला० खाटाशी० इ० गौ० देशभाषा ॥

मार्ज्जारीय : । पुं० मार्जालीये ॥

मार्ज्जाल : । पुं० मार्जारे ॥

मार्ज्जालीय : । पुं० शूद्रे ॥ विडाले ॥ कायशोधने ॥ मार्ष्टि । मृजू० । स्याचतिमृजेरालच् वालञ्चालीयच : वृद्धिमृजेरालयच् ॥

मार्ज्जित : । त्रि॰ कृतमार्जने । मृजेः क्तः ॥

मार्ज्जिता । स्त्री॰ रसालायाम् । शिखरिण्याम् ॥ त्रि॰ शोधिते ॥ मार्ज्यतेस्म । मृजूशौचालङ्कारयोः । क्तः । टाप् ॥

मार्त्तण्ड : । पुं॰ तरणौ । सूर्य्ये ॥ मृताण्डेभवः । शकन्ध्वादिः ॥ क्रोडे । शूकरे ॥

मार्त्तण्डवल्लभा । स्त्री॰ सूर्यपत्न्याम् आदित्यभक्तायाम् ॥

मार्त्ताण्ड : । पुं॰ सूर्य्ये । मृताण्डेभवः । अण् ॥ क्रोडे । भूदारे ॥

मार्त्तिक : । पुं॰ शरावे ॥ त्रि॰ मृत्तिकारचिते । मृत्तिकायाविकारः । तस्यविकारइत्यण् ॥

मार्द्दङ्गम् । न॰ पत्तने ॥

मार्द्दङ्गिक : । त्रि॰ मौरजिके । मृदङ्गवादके । मृदङ्गवादनशिल्पमस्य । शिल्पमितिठक् । अत्र॰मृदङ्गवादने॰प्रकृतिर्लक्षणा । मुख्यार्थवृत्तिस्त्वनभिधानात् ॥

मार्द्दव : । पुं॰ वर्णसङ्करजातिविशेषे । न॰मृदुतायाम् । परदुःखप्रदर्शन तृपीड बुद्धौ ॥ अक्रूरत्वे । इष्टापर्वत्वादिकारिष्वपिशिष्यादिषु॰वाक्यभाषणादिव्यतिरेकेणवोभावत्त्व । चित्ताकाठिन्ये ॥ मृदोर्भावः । इगन्तत्वेत्यण् ॥

मार्द्वीकम् । न॰ मधुनि । द्राक्षामद्ये ॥ मृद्वीकाद्राक्षा॰तस्याविकारः । तस्यविकारइत्यण् ॥ अनुदात्तादेश्चेत्यञ् वा ॥

मार्ष : । पुं॰ मारिषशाके ॥ नाट्योक्त्या आर्य्ये ॥ मर्षणात्सहनात्॰मार्षः ॥

मार्षिक : । पुं॰ मारिषशाके ॥

मार्ष्टि : । स्त्री॰ प्रोञ्छनादिनाङ्गस्य निर्मलीकृतौ । मार्जनायाम् ॥ मार्ज्जनम् । मृजूशुद्धौ । मृजूशौचालङ्कारयोर्वा॰चुरादिः । क्तिन् । तितुत्रेतिनेट् । णिलोप : ॥

माल : । पुं॰ उन्नतभूतले॰क्षेत्रे । म्लेच्छजातिविशेषे ॥ यथा । मालाभिल्ला : किरातास्च सर्वेपिम्लेच्छजातय : ॥ देशविशेषे ॥ सच॰ मेदिनीपुरप्रदेशे मालभूमित्त्वेनख्यात: ॥ न॰ कपटे ॥ वने ॥ उन्नतभूतले ॥ क्षेत्रे ॥ माति । मामाने । ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवल्ला मालाः । इतिरन् । निपातनाल्लत्वम् ॥

मालक : । पुं॰ निम्बवृक्षे । मलते । मलधारयो । ण्वुल् ॥ न॰ स्थलपद्मे ॥

मालका । स्त्री॰ माल्ये ॥

मालकौश : । पुं॰ कौशिके । रागवि

शेषे । षड्गानसमयोराविशेष :

मालचक्रकम्। न॰ सक्थ्यूरुपर्वसन्धौ । मालाद्रुचाकि॰ इ॰ गौ॰ भा॰॥

मालतिका। स्त्री॰ वृत्तविशेषे ॥ यथा । आदिगुरु: पुनरन्त्यगुरुर्यद्विचान्त्यगा : सगणामुनिमाना : मालतिकाकथितावलसन्मतिभिर्विदित श्रुतिभि : क्रतमाना । गौडकुले कधरस्वरहीनदयाकरसत्कविभि : क्रतगानागीयशवन्तनरेशनिशासपश्चामयमानबदानविधाना॥ मालतिका :॥

मालती। स्त्री॰ युवती ॥ कामराल्याम् । निशल्यायाम् ॥ ज्योत्स्नायाम् ॥ निशि ॥ नदीविशेषे ॥ जात्याम् । चवेली॰ इ॰ प्रसिद्धायां पुष्पलतायाम् ॥ वर्णवृत्तान्तरे आदौचत्वारोस्यांकर्णाजायन्ते शेषियत्रांरामाः संराजन्ते । रुद्रैर्वर्णैःपादेपादेविख्यातामालत्येषा भाषाभूषाविख्याता । यथा । पायान्मायामीनोलीन : कल्यान्तेप्रागादिक्षोणीभर्ता : पाथिक्रोडे । व्याप्ताम् भोधौस्तत्तिनकेलीलाभि : सम्यक् सर्वैर्ध्यायत्पृष्ठेतिष्ठन् ॥ जगतीछन्दोभेदेपि ॥ तल्लक्षणं यथा । भवतिनजावथमालतीजरौ ॥ यथा । इहकलयाच्युतकेलिका ननेमधुरसमीरभसारलोलुप : । कुसुमकृतस्मितचारुविभ्रमामलिरपिचुम्बतिमालतींमुहु : ॥ मालतिकाकन्दसि ॥ मालम्मीलतति । लति : सौचोवेष्टनार्थ : । मूलविभुजादित्वात्क : । गौरादि :॥ मालांलतीतिवा। तनु॰ । अन्येभ्योपीतिड :॥

मालतीतीरज:। पुं॰ टङ्कणे । सुहागा॰ इ॰ भा॰ ॥

मालतीतीरसम्भवम् । न॰ पूर्वं तटङ्कणे ॥

मालतीपत्त्रिका। स्त्री॰ जातीपत्याम ॥

मालतीफलम्। न॰ जातीफले ॥

मालय : । पुं॰ चन्दनवृक्षे ॥ त्रि॰ मलयसम्बन्धिनि ॥ न॰ पद्मे ॥

मालव :। पुं॰ अवन्तिदेशे । मालवा॰ इ॰ भा॰ ॥ अवन्तीत : पूर्वभागे गोदावर्यास्तथोत्तरे । मालवाख्योमहादेशोधनधान्यपरायण : ॥ रागविशेषे ॥

मालविका। स्त्री॰ त्रिवृति ।

मालसी। स्त्री॰ केशपुष्टवृक्षे बालाख्ये ॥ रागिणीविशेषे । मालवरागस्यपत्न्याम् ॥ मतान्तरे मेघरागस्यभार्यायाम् । अस्यागानसमयो यथा । इन्द्रोत्थानात् समारभ्य यावद्गामहोत्सवम् । गेयाभवेद्

धनेश्वं मालसीसाममोहरा ॥ अपिच । गान्धारीदीपिकाचैवक र्णाटीपूरवीतथा । अभ्रवरीका नडाचगौरीकेदारप्राह्विडा ॥ माध वीमालसीनाटीभूपालीसिन्धुडात था । सायान्हेरामिणीरेता । प्रगा यन्तिचतुर्द्दश ॥

माला । स्त्री॰ स्रजिपुष्पादिदामनि । माल्ये ॥ मूर्द्धनिन्यस्तपुष्पादिदा मनि ॥ श्रेण्याम् । पङ्क्तौ ॥ गला भरणे ॥ पृक्कायाम् ॥ मल्यते ।॰ मलधारणे । घञ् । टाप् ॥ मां॰ लक्ष्मींशोभांवालाति । ला॰ । आ तोनुपसर्गेकः ॥ यद्वा । माति । मामाणि । चन्द्रेन्द्रायैस्तादिमा॰ रन् । निपातनाल्लत्वम् ॥ माला वृत्तविशेषे ॥ तल्लक्षणोदाहरणे यथा । द्विजवरमवगणमिहकुरुतद नुरगणमपिकलय कमलमुखिभव तिललितमपिकर्णवच्छेषे । अप रदलगाथायामालावृत्तंविचिन्त त् ॥ यथा । खरनखरमुखदलित दितितनयकठिनहृदयरुधिरनिव हभवदभिनवसुखितमानसोऽन्या त् । भवदंशोनरसिंहोदिविषत्सु मङ्गोपसञ्जात : ॥ लघ्वादिचिन्ताले ॰ । ऽ ॥ पुं॰ जपसाधनभूतायाम् । गुणनिकायाम् ॥ साचिविधाय था । मालातुत्रिविधादेविवर्णात्मपर्वं

भेदतस्त्विति मन्त्रसूत्तम् ॥

मालाकण्ठ : । पुं॰ अपामार्गे ॥

मालाकन्द : । पुं॰ कन्दविशेषे । धा विलकन्दे । त्रिशिखदलायाम् ॥

मालाका । स्त्री॰ मालायाम् ॥

मालाकार : । पुं॰ वर्णसङ्करजाति विशेषे । मालिके । वनार्वके । पु ष्पाजीविनि । मालो॰ इ॰ भा॰ ॥ अ यन्तुशूद्रायांविश्वकर्मणोजातइति ब्र॰ वै॰ पु॰ ॥ तैलिक्यांकर्मकारा- न्मालाकारस्यसम्भव : । इ॰ परा॰ शरपद्धति: । मालांकरोति । कृञ् अ॰ । कर्मण्यण् ॥

मालाग्रन्थि : । पुं॰ मालादूर्वायाम् ॥

मालातृणम् । न॰ भूस्तृणे ॥ अति- च्छत्रके ॥ मालाकाराणितृणानि॥

मालादीपकम् । न॰ अर्थालङ्कारविशे षे ॥ तल्लक्षणादिकंयथा । मालादी पकमाद्यञ्चेद्यथोत्तरगुणावहम् । पू र्वेणपूर्वेणवस्तुनोत्तरमुत्तरं चेदुपक्रि यते॰ तन्मालादीपकम् । यथा । स ङ्ग्रामाङ्गणमागतेनभवताचापेस- मारोपितेदेवाकर्णययेनयेनसहसा- यद्यत्समासादितम् । कोदण्डेन शरा : शरैररिशिरस्तेनापिभूमण्ड लम् तेनत्वंभवताचकीर्त्तिरतुला- कीर्त्त्याचलोकत्रयम् ॥

मालादूर्वा । स्त्री॰ दूर्वाविशेषे । ग्रन्थि लायाम् । पर्ववल्ल्याम् । गोंठि-

याद्रूवद्भा० ॥

मालाधर: । पुं० वर्णवृत्तविशेषे ॥ द्विजवरगणान्वितोगजपतिः पुनस्तूर्यवान्० करतलपरिस्फुरत्कनककुण्डलेनान्वितः । सुरपतिगुरुश्रियापरिगतः समंतात्सखे० जयतिभुविवृत्तभूपतिरयन्तुमालाधरः ॥ यथा। क्वचिदपिवयस्ययासहविनोदमातन्वती० कतिपयकथारसैर्मयतिवासरौयांव्रजम् । सुभगतवकामिनीसमधिगम्यसायामिनी मनुभवतिभामिनी मदनवेदना मन्तत: ॥

मालारिष्टा। स्त्री० पाठ्याम्। मरकतपत्र्याम् । हरितलतायाम् ॥

मालालिका । स्त्री० पृक्कायाम् ॥

मालाली । स्त्री० पृक्कायाम् ॥

मालि: । पुं० सुकेशराक्षसपुत्रे ॥

मालिक: । पुं० मालाकारे ॥ पक्षिविशेषे ॥ मालाशिल्पमस्य। शिल्पमितिठक् ॥ मालास्यास्तिवा । व्रीह्यादिभ्यश्चेतिठन् ॥

मालिका । स्त्री० सप्तलायाम् ॥ पुत्र्याम् ।। ग्रीवालङ्करणे ॥ पुष्पमाल्ये ॥ नदीविशेषे ॥ सुरायाम् । मद्ये ॥ टाप् ॥

मालिकी । स्त्री० मालिकयोषिति । मालिन्० इ० भा० ॥ टिड्ढेति ङीप् ॥

माली । पुं० मालावति॥ मालाव्यस्य ।सुखादिषु० मालाक्षेपे० इतिपाठादिनि: ॥ व्रीह्यादित्त्वाद्वा० इनि: । सतुर्चे पादन्यचापि ॥ सुकेशराक्षसपुत्रे ॥

मालिनी । स्त्री० मातृकायाम् ॥ मालिकयोषिति ॥ गौर्याम् । उमायाम् ॥ चम्पानगर्याम् ॥ मन्दाकिन्याम् ॥ नदीविशेषे ॥ मालाअस्ति अस्या: अस्यांवा । व्रीह्यादित्वादिनि: । ङीप् ॥ यद्वा । मलते । मल धारणे । णिनि: । ङीप् ॥ अग्निशिखायाम् ॥ दुरालभायाम् ॥ अतिशक्वरीच्छन्दो १५ भेदे ॥ यथा । ननमयययुतेयं मालिनीभोगिलोकै: ॥ मृगमदकृतचर्चापीतकौशेयवासारुचिरशिखिशिखण्डावद्धधम्मिल्लपाशा । अनृजुनिहितमंसेवंशमुत्क्वाणयन्तीध्रुतमधुरिपुलीलामालिनीपातुराधा ॥

मालिन्यम् । न० मलिनत्त्वे ॥

मालाय: । त्रि० मालायाम्भवे।। तत्राच्छ: ॥

मालु: । स्त्री० पत्रलतायाम् । पत्रवल्ल्याम् ॥ नार्याम् ॥

मालुधान: । पुं मातुलाहौ। चित्रसर्पे ॥ मालुरौषधी० तत्रधानमस्य ॥ महापद्म ॥

मालुधानी । स्त्री० लतान्तरे ॥

मालूक : । पुं० कृष्णार्जके ॥

मालूर : । पुं० शाण्डिल्यवृक्षे । श्रीफले । विल्वे । वेल० इ० भा० ॥ मांसञ्चौर्यपरेषांलुनाति । लूञ्छेदने । बाहुलकाद्रक् ॥ कपित्थवृक्षे ॥

मालेया । स्त्री० स्थूलैलायाम् ॥

माल्यम् । न० कुसुमे । पुष्पे ॥ मालायांसाधुमाल्यंपुष्पमितिविवरणम् यथा । यथाबाल्येनमाल्येनवासितंतिलसर्षपम् । नमुञ्चतिस्वकंगन्धंतद्वत्सूक्ष्मस्यदर्शनम् ॥ पुष्पमालायाम् ॥ मूर्द्धिन्यस्तपुष्पदामनि ॥ केशकलापाद्वहिर्माल्यधारणनिषेधोयथा । नविगर्ह्यकथांकुर्याद्वहिर्माल्यंनधारयेत् । गवाञ्चयानंपृष्ठेनसर्वथैवविगर्हितम् ॥ रत्नमयस्रजि ॥ मालामात्रे ॥ मल्यते । मलधारणे ऋहलोर्ण्यत् ॥ यद्वा । मालेव । चतुर्वर्णादित्वात्ष्यञ् ।

माल्यपुष्प : । पुं० शणवृक्षे ॥

माल्यपुष्पिका । स्त्री० शणपुष्प्याम् ॥

माल्यवान् । पुं० पर्वतविशेषे । मेरुत : प्राच्यामानीलनिषधयास्योत्तरायतो द्विसहस्रयोजनविस्तीर्णकेतुमालेलावृतवर्षयोर्मर्यादाद्री ॥ माल्याकारतास्यास्तिमतुप् ॥ राक्षसभेदे ॥

माल्ल : । पुं० लेटात्तीवरकन्यायामुत्पन्ने० सङ्करजातौ ॥

माल्लवी । स्त्री० मल्लयात्रायाम् ॥

माशब्दिक : । त्रि० प्रतिषेधरि । निषेधके ॥ माशब्द : इतियआहस: । तदाहेतिमाशब्दादिभ्यउपसङ्ख्यानमितिठक् ॥

माष : । पुं० व्रीहिप्रभेदे । कुरुविन्दे । धान्यवीरे । वृषाकरे । मांसले । बलाढ्ये । पित्र्ये । भोजने । माष०उड़द० इ० भा० ॥ माषस्यफलंमाष : । अवयवेचप्राण्योषधिवृक्षेभ्यइत्यण् । तस्यफलपाकशुषामिति लुपि०युक्तवद्भाव : ॥ माषोगुरु : स्वादुपाक : स्निग्धोरुच्योऽनिलापह : । उष्ण : सन्तर्पणोबल्य : शुक्रलोबृंहण : पर : ॥ भिन्नमूत्रमलस्तन्यमेद : पित्तकफप्रद : । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ॥ कफपित्तकरामाषा : कफपित्तकरंदधि । कफपित्तकरामत्स्या वृन्ताकंकफपित्तकृत् ॥ मूलकंमाषसूपेनमधुनाचनभक्षयेत् ॥ रूप्यपरिमाणविशेषे ॥ द्वेकृष्णलेसमधृते विज्ञेयोरूप्यमाषक : ॥ परिमाणविशेषे । माषके ॥ सचमागधमानेसुश्रुतमते ५ गुञ्जाचरकमते ६ ८ गुञ्जापरिमाणम् । कालिङ्गमानेसुश्रुतमते ५ ७ ८ गुञ्जापरिमाणम् । वै

द्यकान्तरे १० गुञ्जापरिमाणम् । यथा । गुञ्जाभिर्दशभिर्माषः शाणो माषचतुष्टयमितिवैद्यकपरिभाषा । मासाइति भाषा॥ ज्योतिःस्मृतिमते १२ गुञ्जापरिमाणम् । यथा । पलन्तुलौकिकैर्मानैः साष्टरक्तिद्विमाषकम् । तोलकत्रितयं च्चेयंज्योतिर्ज्ञैःस्मृतिसम्मतमितितिथ्यादितत्त्वधृतवचनेनपलमष्टरक्तिकाधिकमाषद्वयाधिकतोलकत्रयम् । एतेनमाषकपरिमाणं द्वादशरक्तिकंभवति ॥ मूर्खे ॥ त्वग्दोषभेदे । मस्साइति भाषा ॥

माषकः । पुं॰ पञ्चरक्तिकपरिमाणे ॥ गुञ्जाः पंचाद्यमाषकइत्यमरः ॥ दशार्द्धगुञ्जंप्रवदन्तिमाषंमाषाह्वयैःषोडशभिश्चकर्षमितिलीलावतीच ॥ षड्भिस्तुरक्तिकाभिःस्यान्माषकोहेमधान्यकौ । माषोगुञ्जाभिरष्टाभिःसप्तभिर्वाभवेत्क्वचिद्दितिभावप्रकाशः ॥

माषपर्णी । स्त्री॰ महासहायाम् । इयपुच्छौषधौ । काम्बोज्याम् । वनमाषे । माषाणीति॰ गौ॰दे॰मा॰ ॥ माषपर्णीहिमातिक्तारूक्षाशुक्रबलासकृत् । मधुराग्राहणीशोफवातपित्तज्वरास्रजित् ॥

माषवर्द्धकः । पुं॰ स्वर्णकारे ।।

माषवटी स्त्री॰ वटिकाविशेषे । उडदी॰ बडी॰ इ॰ भा॰ ॥ माषाणांपिष्टिकाहिङ्गुलवणार्द्रकसंस्कृता । तयाविरचितावस्त्रेवटिकासाधुशोषिता ॥ तलितास्तप्ततैलेता अथवासुप्रलेहिताः । वटकस्यगुणैर्युक्ताज्ञातव्यारुचिदाभृशम् ॥

माषशः । अ॰ प्रतिमाषम्॰ इत्यर्थे ॥

माषादः । पुं॰ कच्छपे ॥ त्रि॰ माषभक्षके ।।

माषादिः । पुं॰ शमीधान्यगणे । माषआदिर्यस्यगणविशेषस्यसः । माषोमुद्गोराजमाषः कुलत्थश्चणकस्तिलः । काकाण्डश्चीवरइतिशमीधान्यगणःस्मृतः ॥

माषीणम् । न॰ माषक्षेत्रे । माष्ये ॥ माषाणांभवनंक्षेत्रम् । विभाषातिलमाषोमाभङ्गाणुभ्यइतिपक्षे खञ् ॥

माषोण्डरी । स्त्री॰ इण्डरे॰ इन्दरे॰ सेफ॰ इतिहिमपर्वतप्रसिद्धखाद्यद्रव्ये ॥

माष्यम् । न॰ माषीणे । माषक्षेत्रे ॥ माषाणांभवनम्क्षेत्रम् । विभाषातिलमाषेतिपक्षे यत् ॥ माषेभ्योहितंवा । खलयवमाषेत्यादिना यत् ॥

मा: । पुं॰ चन्द्रे ॥ मासे ॥ मिमीते आनन्दमितिमाः । बाहुलकात्के

बलादप्यसि : ॥

मास : । पुं० श्रामे । वर्षांशे । शुक्लकृष्णपक्षद्वयात्मकेकाले ॥ मासोद्विविध : शुक्लादि : कृष्णादिश्च । तत्र चैत्रशुक्लप्रतिपदमारभ्यामावास्यापर्यन्तंशुक्लादि : । कृष्णपक्षप्रतिपदमारभ्यपूर्णिमापर्यन्तं कृष्णादि : ॥ माश्चन्द्रस्तस्यायम् । अण् । सौरादिषु । यथा । मासश्चतुर्विधःप्रोक्त : सावनादिप्रभेदत: । त्रिंशद्दिनात्मकस्तत्रसावन : परिकीर्त्तित : ॥ एकस्मात्सङ्क्रमाद्दासङ्क्रान्ति: सौरोभिधीयते । शुक्लपक्षादिकृष्णान्तश्चान्द्र : स्यादन्यथापिवा ॥ सर्वनक्षत्रभुक्त्यातुनाक्षत्रोमासउच्यते ॥ तत्र । आब्दिकेपितृकृत्येचमासश्चान्द्रमस: स्मृत: । विवाहादौस्मृत: सौरोयज्ञादौसावनोमतइतिविवेक : ॥ मस्यते परिमीयते चन्द्रवृद्धिक्षयाभ्यांय: । मसीपरिणामे । कर्मणिघञ् ॥

मासजात : । त्रि० जननादूर्द्ध्वं यस्य मासोगतस्तत्र ॥ तत्रैवव्यवहारात् । मासोजातस्ययस्य स : । काला : परिमाणिनेतिसमास : ॥

मासज्ञ: । पुं० दात्यूहे ॥ त्रि० मासविदि ॥

मासतम : । पुं० मासस्यपूरणे ॥ नित्यं शतादौतिडटस्तमडागम : । अतएवज्ञापकाट् डट् ॥

मासनम् । न० सोमराज्याम् ॥

मासमान : । पुं० वत्सरे ॥ न० मासपरिमाणे ॥

मासर : । पुं० निस्रावे । भक्तसमुद्भवे मंडे । मांड० पीच० दू० भा० ॥ मास्यते । मसीपरिणामे० घ्यन्त : । बाहुलकादरन् ॥ यद्वा । मा० श्री : सरत्यत्र । सृ० । पुंसीति घ ।

मासवर्त्तिका स्त्री० सर्षपोपधिविशेषे ॥

मासान्त : । पुं० अमावास्यायाम् ॥ संक्रान्तिदिने ॥

मासिकम् । न० अन्वाहार्ये । दर्शश्राद्धे ॥ पितृणांमासिकं श्राद्धमन्वाहार्यं विदुर्बुधा : । तच्चामिषेणकर्त्तव्यं प्रशस्तेनप्रयत्नत : ॥ मासे भवम् । कालाट्ठञ् ॥ प्रेतस्य० संवत्सराभ्यन्तरे० प्रतिमासं मृताहेक्रियमाणेश्राद्धे ॥ मासोदेवताऽस्यवा । कालेभ्योभववत् ॥ ऋणे ॥ मासेदेयं । देयमृणे । ठक् ॥ त्रि० माससम्बन्धिनि । मासेननिर्वृत्तम् । ठञ् ॥ मासेभवंवा ॥

मासुरी । स्त्री० श्मश्रौ ॥

मासूर : । त्रि० मसूरविकृतौ ॥ मसूरस्यावयवोविकारोवा । बिल्वादाण् ॥

मास्म । अ० अलम् । वारणे ॥ माच स्मच । अनयो: समाहार : ॥

माहाकुल : । त्रि॰ महाकुलीने ॥ महाकुलस्यापत्यम् । महाकुलादञ् खञाविति अञ् ॥

माहाकुलीन : । त्रि॰ महाकुले ॥ महाकुलस्यापत्यम् । महाकुलादिति पक्षे खञ् ॥

माहाजनिक : । त्रि॰ महाजनाय हिते ॥ महांश्चासौ जनश्च । महाजनात् ठञ् बहुव्रीहेस्तु । महाजनीय: ॥

माहात्म्यम् । न॰ महात्मत्वे ॥ प्रभावे । महात्मनोभाव: । ष्यञ् ॥ अनतिशयैश्वर्यं । विश्वसृष्ट्यादिकर्तृत्वेप्यविकारित्वे । शुभाशुभकर्मकारयितृत्वेप्यवैषम्ये । बन्धमोक्षादिफलदातृत्वेप्यसङ्गौदासीन्ये ॥

माहाराजिक : । पुं॰ गणदेवताभेदे । महाराजोदेवतैषाम् । महाराजप्रोष्ठपदाट्ठञिति ठञ् ॥ महाराजो भक्तिरस्य वा । महाराजाट्ठञ् ॥

माहाव्रती । स्त्री॰ पाशुपतव्रतसम्बन्धिन्यांपद्धतौ ॥

माहिनम् । न॰ राज्ये ॥ महन्तेऽस्मिन् । मह॰ महेरिनण्चेतीनण् त्रि॰ महनीये ॥

माहिर : । पुं॰ देवराजे । इन्द्रे ॥

माहिषम् । न॰ महिष्याधर्मे । अण् महिष्यादिभ्य : ॥ त्रि॰ महिषसम्बन्धिनि । महिषोपजीविनि । महिष्या : । महिषस्यवा॰ इदम् । अण् ॥

माहिषमस्तक : पुं॰ शालिग्रभेदे ॥

माहिषिक : । पुं॰ महिषजातके ॥ महिषीपतौ । व्यभिचारिण्यनुरक्तपतौ ॥ यथा । महिषीत्युच्यतेनारी याचस्याद्व्यभिचारिणी । तांदुष्टां कामयतिय : सवैमाहिषिक : स्मृत : ॥ भगद्वारोपार्ज्जितस्त्रीधनोपजीविनि ॥ यथा । महिषीत्युच्यते भार्याभगेनोपार्जितंधनम् । उपजीवतियस्तस्या : सवैमाहिषिक : स्मृतइति ॥

माहिष्मती । स्त्री॰ शिशुपालनगर्याम् ॥

माहिष्य : पुं॰ वर्णसङ्करजातिविशेषे । वैश्यायांक्षत्रियादुत्पन्ने ॥ नक्षत्रजीवनंनृत्यगीतेसस्यरक्षणम् माहिष्याणांशुभावृत्ति : प्रोक्ताशोशनसामयम् ॥

माहेन्द्र : । पुं॰ शुभदण्डविशेषे ॥ रव्यादिशरेषुवायुवरुणयमममहेन्द्राणामेकैकदण्डाभवन्ति॰ तत्रवरुणमहेन्द्रयोर्दण्डौशुभौ । वायुयमयोर्दण्डावशुभौ ॥ यथा । वातंवावय-मासूर्यमावावयकलानिधौ । वयमावाकुजेज्ञेयामावावयसुधांशुजे ॥ गुरौवावयमावैव॰ मावावयतथाभृगौ । सूर्यपुत्रेयमावावघटीयुग्मंशु

माशुभम् ॥ माहेन्द्रेविजयोमिश्च पादयोश्चवनागमः। वारौचक्षमसैनिच्चं धर्मेपिमरणं ध्रुवम् ॥ त्रि० महेन्द्रसम्बन्धिनि ॥

माहेन्द्री। स्त्री० गवि॥ प्राच्याम्॥ च मरावत्याम्॥

माहेय:। त्रि० मङ्गलग्रहे॥

माहेयी। स्त्री० गवि। सौरभेय्याम्। मह्या:० गोस्त्रापत्यम्। स्त्रीभ्योढक्॥ मह्यतेपूज्यते। मह०पुंसीति०घनोघर्चेतिवाघ:। महाया-अपत्यम्। ढक्०इतिस्वामी॥

माहेशी। स्त्री० दुर्गायाम्॥ यथा। महादेवात्समुत्पन्नामहत्ता: प्रेक्ष्यसैयत:। माहेश्वर्यातिमुद्दिश्यामाहेशीतिनसास्मृता॥ (●)॥ ॥

माहेश्वर:। त्रि० कौलिके। जीवन्मुक्ते॥ यथा। धन्यैर्माहेश्वरै: स्वार्थं प्रत्यभिज्ञानशालिभि:। स्वपरिज्ञानमात्रेणजीवन्मुक्ताभवन्तिहि॥ अस्माकमेनं दृतम। नसानांमाहेश्वराणांदिवसा प्रयान्त्वितिच॥ महेश्वरसम्बन्धिनि॥ तस्येदमित्यण्। न०उपपुराणविशेषे॥

माहेश्वरपदम्। न० तीर्थविशेषे॥

माहेश्वरी। स्त्री० दुर्गायाम्॥ मातृभेदे। यवातिक्तायाम्॥ विष्णौ। यथ.ब्राह्मे ४६ ध्याये। अयंनारायणोमाराजगन्मातासनातन:। विष्णुसंस्थितोदेव: साक्षात्परब्रह्मेश्वर:॥ नमेविदु: परंतत्त्वं देवायानमहर्षय:। एकोऽयंवेददेवात्माभवानीविष्णुरेवचेत्यादिवचनात्॥ शिवशक्त्याम्॥ महेश्वरस्येयम्। अण्। ङीप्। तीर्थविशेषे॥

मित:। त्रि० ज्ञाते॥ क्षिप्ते॥ परिच्छिन्ने। मीयतेस्म। मा०माङ्०मेङ्प्रणिदानेवा। क्त:। द्यतिस्यतीतीकारान्तादेश:। (●)॥

मितङ्गम:। पुं० दन्तावले। हस्तिनि॥ मितङ्गच्छति। गम्लृ०। गमे: सुपिवाच्यइतिखच्। खितिमुम्॥ स्त्री० टाप्॥ त्रि० परिमितगामिनि॥

मितद्रु:। पुं० समुद्रे॥ मितं द्रवति। द्रु०। हरिमितयोर्द्रुवङ्तिकु:॥

मितम्पच:। त्रि० किम्पचाने॥ कृपणे॥ दुर्गते॥ मितम्पचति। मितनखे चेतिमितोपपदात्पचे: कर्त्तरिखश्। मुम्॥

मिताशन:। त्रि० युक्ताहारे। परिमितभोजिनि॥ मितमशनंयस्य स:॥

मिति:। स्त्री० ऐश्वर्ये। प्रक्षेपे॥ मानम्। मा०। क्तिन्। द्यतिस्यतीतीत्वम्॥.

मित्र:। पुं० द्युमणौ। सूर्ये॥ न०

मिथ्याध्यवसिति : । स्त्री० मिथ्याध्यवसाये ॥

मिथ्यानिरसनम् । न० अपथे ॥

मिथ्याप्रयुक्त : । त्रि० यदर्थप्रतिपादनायप्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयति । शब्दे ॥

मिथ्याभियोग : । पुं० अभ्याख्याने । शतंमेधारयसीत्यादिमिथ्योद्भावनरूपे० मिथ्यापवादे । मिथ्याचासावभियोगश्च ॥

मिथ्याभिशंसनम् । न० अभिशापे । । स्वर्णंस्तेयंत्वयाकृतमित्यादिमिथ्यास्तेयादिसाधनरूपेमिथ्यारोपवाक्ये ॥ अभिशंसेर्भावेल्युट् ॥

मिथ्याभिशाप : । पुं० मिथ्यापवादे ॥ यथा । शुक्लपक्षेचतुर्थ्यान्तुसिंहेचन्द्रस्यदर्शनम् । मिथ्याभिशापंकुरुतेनपश्येत्तत्ततः ॥

मिथ्यामति: । स्त्री० भ्रान्तौ । भ्रमे ॥ मिथ्याचासौमतिश्च ॥

मिथ्याविनीत : । त्रि० कपटेनविनयिनि ॥

मिथ्यासाक्षी । त्रि० कूटसाक्षिणि ॥ तस्यज्ञानप्रकारमाहयाज्ञवल्क्य : । उक्तेपिसाक्षिभि : साक्ष्येयद्यन्येगुणवत्तमा : । द्विगुणावान्यथाब्रूयु : कूटा : स्यु : पूर्वसाक्षिण : ॥

मिथ्योत्तरम् । न० चतुर्विधोत्तरान्तर्गतोत्तरविशेषे ॥ तल्लक्षणंयथा । अभियुक्तोऽभियोगस्ययदिकुर्यादपह्नवम् । मिथ्यातत्तुविजानीयादुत्तरंव्यवहारत : ॥ तच्चतुर्विधंयथा । मिथ्यैतन्नाभिजानामि ममतत्रनसंनिधि : । अजातश्चास्मितत्काले० इतिमिथ्याचतुर्विधम् । इतिव्यवहारतत्त्वं ॥

मिथ्योपलब्धि : । स्त्री० मायागन्धर्वनगरादिज्ञाने ॥ मिथ्याचासावुपलब्धिश्च ॥

मिद्धम् । न० चिन्ताभिसङ्कोचे ॥ आलस्ये ॥ वित्ते ॥ निद्रायाम् ॥

मिन्मिन : । त्रि० सानुनासिकवाग्विशिष्टे । गुन्गुना० इ० भा० ॥ खोना० इ० गौ० दे० भा० । मीमणा इ० पर्वतीयभाषा ॥ अस्यनिदानन्तु । आवृत्यवायु : सकफोधमनी: शब्दवाहिनी : । नरान्करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ॥

मिमङ्क्षु : । त्रि० मङ्क्तुमिच्छौ ॥ मस्जे : सन्नन्तादुप्रत्यय : ॥

मिमन्थिषु : । त्रि० मथितुमिच्छौ ॥ मथे : सन्नन्तादु : ॥

मिमान : । त्रि० मानङ्कुर्वाणे ॥ माङोलट : शानजादेश : । श्लाघितिद्विर्भाव : ॥

मिम्मिण : । त्रि० )
मिम्मिन : । त्रि० ) मिन्मिने ॥

मिलित : । चि० सङ्गते । युक्ते ॥ मिश्रिते ॥ श्लिष्टे । सम्बन्धविशिष्टे ॥ मिलसंश्लेषे । कर्त्तरि क्त : ॥

मिशि : । स्त्री० जटामांस्याम् ॥ मधुरिकायाम् । धानसौंफ० इ० भा० ॥ मिश्यति । मिश० । इन् ।

मिशी । स्त्री० जटामांस्याम् ॥ मधुरायाम् । धानसौंफइतिभाषा ॥ मिशति । मिश० इन् । कृदिकारादितिङीष् ॥

मिश्र : । पुं० गजजातिविशेषे ॥ यथा । भद्रोमन्द्रोमृगोमिश्रश्चतुर्द्धागजातय : ॥ न० विशेषनक्षत्रसंज्ञायाम् । यथा । द्विदैवाकृत्तिकाचैवमिश्रंसाधारणंबुध : । एषुमिश्राग्निकार्याणिवृषोत्सर्गादिकंतथा ॥ चाणक्यमूलके ॥ मिश्रफले ॥ चि० आर्य्ये । श्रेष्ठे ॥ संयुक्ते । सम्पृक्ते । मिश्रिते ॥ मिश्रयति । मिश्र० । अच् ॥

मिश्रकम् । न० तीर्थविशेषे । देवोद्याने ॥ औषरलवणे ॥

मिश्रकावणम् । न० इन्द्रस्योद्याने । नन्दनवने ॥ मिश्रकाख्यंवनम् । वनगिर्यो : संज्ञायांकोटरकिंशुलुकादीनामितिदीर्घ : । वनंपुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यइतिणत्वम् ॥

मिश्रज : । पुं० अश्वतरे । खेस

मिश्रणम् । न० एकत्रीकरणे । संयोजने ॥ मिश्र० । ल्युट् ॥

मिश्रपुष्पा । स्त्री० मेथिकायाम् ॥

मिश्रफलम् । न० इष्टानिष्टसंयुक्तेमानुष्यलक्षणेपापपुण्ययुगलजन्यफले ॥ मिश्रञ्चतत्फलञ्च ।

मिश्रवर्णम् । न० कृष्णागुरुणि ॥ चि० नानावर्णयुक्ते ॥

मिश्रवर्णफला । स्त्री० वार्त्ताक्याम् ॥

मिश्रशकुनम् । न० शुभाशुभयो : सूचकेनिमित्ते ॥ यथा । वदन्तिवामंरुदितंप्रशस्तमदृष्टदेशेयदिरोदिताख्यात्निम्नन्व्यवामंपथिसर्वकामाम् शुभंविधत्तेरुदितंरजन्यामृत्त्य : सुतामोरुदितेनपृष्ठेलाभोभवेत्तत्रनिवर्त्तनेन । मृत्युस्तथाग्रेरुदितेनगन्तु : सिद्धिंविधत्तेरुदितंरिपूणाम् ॥ उग्रंभवेद्रोदनमग्रभागेभयंभवेद्दक्षिणभागभूते । नैऋत्यकोणेरणमागरोधोवायव्यकोणेरुदितंसखा ॥ पृष्ठांशयोर्दक्षिणवामयोश्च सिद्धि : सदातोरणरोदनेन । शुभोपिसम्यग्यदिरोदमार्गोज्ञातोनिभाव्य : सपुनस्तथापि ॥ यद्वालकैमोक्षमनूदितेनतत्स्यादसत्यंनयुगान्तरेपि । स्तुतंनकार्य्यंक्वचिदेवग्रस्तंगवांस्तुतम्प्राणहरंमतन्तु ॥ निषेधमपेऽप्यविदित्विषं वधनतयंदक्षिण-

कर्णदेशे । तत्पृष्ठभागेकुरुतेऽरिष्ट-
हिंसुतंकन्याख्याशुभमादधाति ॥
भोगायशामश्रवणस्यपृष्ठे कर्णेच
वामेकथितंजयाय । सर्वाय लाभा-
यचवामनेत्रेजातंचुतंस्यात्क्रमतोऽ
र्थएव ॥ क्रमान्निषेधंगमनस्यविघ्नं-
कालंसमृद्धिं घुतमुपरोगम् । करो-
तिरोगक्षयमर्थलाभंदौष्माद्दिशुचु
तमुन्नतंसत् ॥ चौषधेवाङ्गनारोऽविष
वारेशयनेऽशने । विद्यारम्भे बीज-
वापेक्षुतंसम्प्रसुशोभनं ॥
मिश्रशब्द : । पुं॰ अश्वतरे ॥
मिश्रा । स्त्री॰ सङ्क्रान्तिविशेषे ॥ भू
मौमिश्रभेसाभवेदेवमिश्रापशूनांसु-
खं तत्रविद्वद्भिरुक्तम् ॥
मिश्रिका । स्त्री॰ मिश्रायाम् । मिश्रे-
यस्यार्थेक : ॥
मिश्रित : । त्रि॰ गौरविते ॥ मिलिते
। युक्ते । ( * ) ॥ ॥
मिश्रिता । स्त्री॰ सङ्क्रान्तिविशेषे ।
मिश्रायाम् ॥ मिश्रिताचैवविज्ञेया
मिश्रितर्क्षेतुसङ्क्रमे ।
मिश्रेया । स्त्री॰ मधुरिकायाम् । सौं
फ॰धनसौं फ॰धन्साबा॰इ॰भा॰ ॥
शतपुष्पायाम् । तालपर्ण्याम् । व-
नजायाम् । यवाक्पुष्प्याम् । सं-
हितपुष्पिकायाम् । सलुफा॰इ॰-
गौ॰दे॰भा॰ ॥ मिश्रेयातद्गुणाप्रो-
क्ताविशेषाद्योनिशूलनुत् । अग्निमा
न्द्यहरोहृद्याबद्धविट्कृमिशुक्रहृत् ।
रूक्षोष्णापाचनीकासवमिश्लेष्मानि
लान्हरेत् ॥ तद्गुणा॰मधुरिका-
पर्यायशतपुष्पागुणा ॥ मिश्रयति ।
मिश्र॰ । अच् । ङीषते । ङीङ्॰ ।
पचाद्यच् । मिश्राचासावेयाच ।
शकन्ध्वादि : ॥
मिष : । पुं॰ स्पर्द्धने । न॰व्याजे ॥
मिषति । मिष॰ । क : ॥
मिषन् । त्रि॰ पश्यति ॥
मिषि : । स्त्री॰ मधुरिकायाम् । शत
पुष्पायाम् । जटामांस्याम् ॥
मिषिका । स्त्री॰ जटामांस्याम् ॥
मिषी । स्त्री॰ मिस्याम् ॥
मिष्ट : । पुं॰ मधुररसे ॥ नूतनसर्प-
पशाकंनवौदनं पिच्छिलानिचदधी
नि । अल्पव्ययेसुन्दरिग्राम्यजनो-
मिष्टमश्नाति ॥ त्रि॰मधुररसवि-
शिष्टे ॥
मिष्टनिम्बुकम् : न॰ मीठा॰नीम्बू॰
इतिप्रसिद्धे फले । मिष्टनिम्बुफलं
स्वादुगुरुमारुतपित्तनुत् । गरोग्ग-
विषध्वंसिकफोत्क्लेशिचरक्तहृत् ।
शोषारुचितृषाच्छर्दिहरंबल्यश्चबृंह
णम् ॥
मिष्टान्नम् । न॰ मधुरद्रव्ये ॥ मिष्टान्न
पानदाताचसततंश्रद्धयान्वित : । दे
वपूजापरोनित्यंनप्रेतोजायतेस्फु-
त : ॥

मिसि : । स्त्री॰ मधुरायाम् ॥ जटामांस्याम् ॥ शतपुष्पायाम् ॥ अज मोदायाम् ॥ मस्यति । मसीपरिणामे । सर्वधातुभ्यइन् । बाहुलका दत : स्यानेड : ॥ उशीर्याम् ॥

मिसी । स्त्री॰ मिसौ । तपस्विन्याम् । जटामांस्याम् ॥ मस्यति । मसी॰ । इन । क्वदिकारादितिङीष् । पृषोदरादि : ॥

मिहिका । स्त्री॰ अवश्याये । नीहारे । तुषारे । मेहति । मिहसेचने । कुन् शिल्पिसंज्ञयोरितिकुन् ॥

मिहिर : । पुं॰ विकर्त्तने । अर्के । मार्त्तण्डे । सूर्ये ॥ मेघे ॥ वृद्धे ॥ मेहति । मिह॰ । इषिमदिमुदिखिदीतिकिरच् ॥ वायौ ॥ इन्द्रे ॥

मिहिराण : । पुं॰ जगद्योनौ । शिवे ॥

मीढ : । त्रि॰ मूत्रिते ॥ मिह्यतेस्म । मिह॰ । क्त : ॥ सिक्ते ॥

मीढुष्टम : । पुं॰ शिवे ॥

मीढ्वान् । पुं॰ शिवे ॥ मीढ्वांसौ॰मीढ्वांस : इत्यादि ॥

मीत : । त्रि॰ मृते ॥ मीयतेस्म । मी अहिंसायाम् । गत्यर्थेतिकर्त्तरिकर्म्मणिवाक्त : ॥

मीन : । पुं॰ मत्स्ये ॥ राशिविशेषे । अन्त्यभे । अत्रजातस्यफलंयथा । मीनलग्ने समुत्पन्नो रत्नकाञ्चन पूरित : । अल्परोमामहाप्राज्ञोदीर्घकालपरीक्षक : । मीनाति॰मीयतेवा । मञ्॰ फेनमीनावितिनिपातित : ॥ भगवतीविष्णो : प्रथमावतारे ॥ प्रकृतिर्विष्णुरूपाच पुंरूपश्चमहेश्वर : । एवंप्रकृतिभेदेनभेदास्तुप्रकृतेर्दश ॥ कृष्णरूपा कालिकास्याद्रामरूपाचतारिणी । बगलाकूर्ममूर्त्ति : स्यान्मीनोधूमावतीभवेत् । छिन्नमस्तानृसिंह : स्याद्वराहश्चैवभैरवी । सुन्दरीजामदग्न्य : स्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्यान्मातङ्गीकल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयश्चभगवान् कृष्ण : कालीरूपीभवद्व्रजे ॥

मीनकेतन : । पुं॰ प्रद्युम्ने । कन्दर्पे॥ मीनशब्दोजलचरोपलक्षणार्थ : । मीनोमकर : केतनंध्वजोयस्यस: ॥

मीनगोधिका । स्त्री॰ जलाशये ॥

मीनघाती । पुं॰ बके ॥ त्रि॰मत्स्यघातके ॥

मीननेत्रा । स्त्री॰ गण्डदूर्वायाम् ॥

मीनर : । पुं॰ जलरूपे । मकरे । अतिदंष्ट्रके ॥

मीनरंक : । पुं॰ पक्षिविशेषे । मत्स्याशने ॥

मीना । स्त्री॰ उषाकन्यायाम् । कश्यपस्यभार्यायाम् ॥

मीनाक्षी । स्त्री० देवीविशेषे ॥ तत्स्था ने । चिदम्बरे । हालास्ये । मत्स्या क्ष्यायाम् । मच्छेछी० इ० भा० ॥ गण्डदूर्वायाम् ॥ कुवेरकन्यायाम् ॥

मीनाण्डी । स्त्री० शर्करायाम् ।

मीनाधिप: । पुं० वृहस्पतौ ॥

मीनाम्रेश: पुं० । दर्दनाम्रे व्यञ्जनप्र भेदे । सा स्त्रमीनव्यञ्जनेखञ्जने ॥

मीमांसक: । पुं० सिद्धान्तिनि । पू र्वोत्तरमीमांसाशास्त्राभिज्ञे । मी मांसामधीतेवेत्तिवा । क्रमादिभ्यो वुन् ॥ पूर्वमीमांसासूत्रकर्त्ताजैमि नि: । वृत्तिकर्ताकुमारभट्ट: । भा ष्यकर्त्ताशवरस्वामी । प्रभाकर: कु मारभट्टस्यछात्र: । सएवगुरुत्वेन भण्यते । तन्मतंगुरुमतम् । तच्छि ष्या: प्राभाकरा: ॥ उत्तरमीमांसा सूत्रकर्त्तावेदव्यास: । तेषांभाष्यका र्त्ताशङ्कराचार्य: । वार्त्तिककर्त्तासु रेश्वराचार्य: ॥ मीमांसकोजैमिनी शेवेदान्तीब्रह्मवादिनि । वैशेषिके स्याद्दौलुक्य: सौगत: शून्यवादि नि ॥ नैयायिकस्त्वाक्षपाद: स्या- त्स्याद्वादिकआर्हत: । चार्वाकलौ कायतिकौसत्कार्येसाङ्ख्यकापि- लौ ॥

मीमांसा । स्त्री० वेदविचारणे ॥ वि- चारणायाम् ॥ साद्विधा० पूर्वमीमां सा० उत्तरमीमांसाचेतिभेदात् । त त्रपूर्वमीमांसाद्वादशा ध्यायात्मि का० जैमिनिप्रणीता यज्ञादिकर्मकां डनिरूपिका । अस्यामकर्माणि- लोकव्यवहारनियमायैर्मनुयाज्ञव- ल्क्यादिभिर्वहुनिबन्धैर्ग्रन्थाश्चिन्ति तानि ॥ उत्तरमीमांसातु चतुरध्या- यात्मिकावेदव्यासप्रणीता० ब्रह्मनि रूपिकावेदांतशास्त्रत्वेनप्रसिद्धा ॥ धर्मप्रमीयमाणेहिवेदेनकरणात्मना । इतिकर्त्तव्यताभागंमीमांसापूरयि ष्यति ॥ प्रमाणादय: प्रसङ्गाद्द्वा दशपदार्था: क्रमाद्द्वादशानामध्या यानांविषया: । यथा । धर्म्मोद्वाद- शलक्षण्याव्युत्पाद्यस्तत्रलक्षणे: । प्र माणभेदशेषत्वप्रयुक्तिक्रमसंज्ञका: । अधिकारोतिदेशश्चसामान्येनविशे- षत: । ऊहोवादश्चतन्त्रञ्चप्रसङ्गश्चो दित: क्रमात् ॥ द्वादशाध्यायोपेत स्यशास्त्रस्यधर्म्मोविषय: । प्रमाणाद येध्यायानांविषया: तत्रप्रथमाध्या येविध्यर्थवादादिरूपंधर्मप्रमाणंनिरू पितम् । १ । द्वितीयेयागदानादिक र्मभेद: । तृतीयेप्रयाजादीनांदर्शपू र्णमासार्थत्वेनतच्छेषत्वम् । चतुर्थेगो दोहनस्यपुरुषार्थत्वप्रयुक्त्यानुष्ठानंन तुक्रत्वर्थत्वप्रयुक्त्ये त्येवमादय: । पञ्च मेक्रमनियतिविधेयत्वादय: । षष्ठे कर्त्तुरधिकारोमासादेरित्यादय: । सप्तमेसमानमितरच्छ्येनेनेत्यादिप्र

यथावच्चैनाग्निष्टोमादिनाम्नानु-
मितवचनेनचसामान्यतोतिदेशः।
अष्टमेसौर्यंचरुं निर्वपेद्ब्रह्मवर्चसका-
मस्त्वितिनदेवतानिर्द्देशः० एकदै
वतत्त्वमौषधद्रव्यकत्त्वमित्यादिलि
ङ्गैराग्नेयपुरोडाशेतिकर्त्तव्यतानां
न्यस्य त्र्यवमादिर्विशेषतोतिदेशः।
नवमेप्रकृतावग्नयेजुष्टं निर्वपामीति
पठितेमन्त्रे० विकृतौसौर्यंचरावग्नि
पदपरित्यागेनसूर्यपदप्रक्षेपेणसूर्याय
जुष्टं निर्वपामीत्यवमादिरूहः।
दशमेकृष्णलेषुचोदकप्राप्तस्यावघात
स्य वितुषीकरणासम्भवेनलोपइत्य
वमादिर्बाधः। एकादशेबहूनामा-
ग्नेयादीनांप्रधानानांसकृदनुष्ठितेन
प्रयाजाद्यङ्गेनोपकार इत्यादित-
न्त्रम्। द्वादशेप्रधानस्यपशोरुपका-
रायानुष्ठितेनप्रयाजाद्यङ्गेनपश्वङ्गपु
रोडाशेऽप्युपकारइत्यादिप्रसङ्गः॥
विस्तरः शास्त्रे द्रष्टव्यः॥

**मीमांस्यः।** त्रि० विचार्ये॥

**मीरः।** पुं० समुद्रे॥ पानीये॥ सी
मनि॥ पर्वतैकभागे॥ मिनोति।
डु,मिञ् प्रक्षेपणे। शुसिचिमीनां-
दीर्घश्चेतिक्रन्॥ म्लेच्छजातिभे-
दे॥ यथा। पञ्चखानाःसप्तमीरा
नवशाहामहाबलाः॥

**मीलनम्।** न० पक्ष्मभिरावरणे॥ अ
लङ्कारविशेषे॥ मीलनंवस्तुनायत्र

[illegible]कारनिरूपणम्॥

**मीलितः।** त्रि० अप्रफुल्ले। सङ्कुचि-
ते॥ निद्राणे मुद्रिते॥ न० अल
ङ्कारविशेषे॥ यथा। समेनलक्ष्मणा
वस्तुवस्तुनायन्निगूह्यते। निजेनाग-
न्तुनावापितन्मीलितमितिस्मृतम्॥
सहजमागन्तुकंवाकिमपिसाधारणं
यल्लक्षणं तद्द्वारेणकिञ्चित्केनचिद्व-
स्तुस्थित्यैवबलीयस्तयातिरोधीय-
तेतन्मीलितमितिद्विधास्मरन्ति। क्र
मेणोदाहरणम्। अपाङ्गतरलेदृशौ
मधुरवक्रवर्णागिरोविलासभरमन्थ-
रागतिरतीवकान्तंमुखम्। इति
स्फुरितमङ्गकेमृगदृशः स्वतो-
लीलयातदत्रनमदोदयः कृतपदो
ऽपिसंलक्ष्यते। अत्रदृक्तरलतादि-
कमङ्गनानांस्वाभाविकंसाधारण-
ञ्चमदोदयेनतत्राप्यतद्दर्शनात्॥
येकन्दरासुनिवसन्तिसदाहिमाद्रे-
स्त्वत्पातशङ्कितधियोविवशाद्विष-
स्ते। अप्यङ्गमुत्पुलकमुद्वहतांसक-
म्पं तेषामहोवतभियांनबुधोप्यभि-
ज्ञः॥ अत्रतुसामर्थ्याद्वसितस्य-
शैत्यस्यागन्तुकत्वात्तत्प्रभवयोरपि-
कम्पपुलकयोस्ताद्रूप्यम्० समानता
भयेष्वपितयोरुपलक्षितत्वात्

**मीवा।** पुं० वायौ॥ उदरक्रमौ॥ मी
यते। मीञ् हिंसायाम्। शेवयह्व-
जिह्वाग्रीवाप्वामीवाः० इ, तस्य

कीजिपासितः ॥

मीवरः । त्रि० हिंस्रे ॥ मीनाति । मीञ्० । छित्वरछत्वरेत्यादिना ष्वरच् ॥

मु : । पुं० बन्धने ॥ महेशे ॥

मुकुः । पुं० मुक्तौ ॥

मुकुटम् । न० शिरोभूषणे । किरीट ॥ मङ्कतेऽनेनवा। मकिमण्डने । बाहुलकादुटप्रत्ययोधातोरतश्च ॥

मुकुटी । स्त्री० अङ्गुलिमोटने ॥

मुकुटेश्वरी । स्त्री० मार्कोटस्थानस्थायांदेव्याम् ॥

मुकुन्दः । पुं० विष्णौ। गरुडध्वजे ॥ मुकुमव्ययं मोक्षनिर्वाणमोक्षवाचकम् । तद्ददातियतोदेवोमुकुन्दस्तनकीर्त्तितः ब्र० ब्र० वै० पु० निधिप्रभेदे ॥ रत्नविशेषे ॥ पारदे ॥ कुन्दुरौ ॥ मुक्तिं ददाति । आतोनुपेतिकः । पृषोदरादिः ॥

मुकुन्दकः । पुं० षष्टिकव्रीहौ ॥ षष्टिकः शतपुष्पश्चप्रमोदकमुकुन्दकौ। महाषष्टिकइत्याद्याः षष्टिकाः समुदाहृताः ॥

मुकुन्दुः । पुं० कुन्दुरौ ॥

मुकुम् । अ० निर्वाणे ॥ भक्तिरसे ॥ प्रेमणि ॥

मुकुरः । पुं० आदर्शे । दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मुञ्चतिज्योतिः । मुच्० । बाहुलकादुरच् ॥ यद्वा । मङ्कते मकि० । मकुरदर्दुरावित्युरच्० नलोपश्च । बाहुलकात्पर्श्च धातोरुपधायाउकारश्च ॥

मुकुलः । पुं० न० ईषद्विकासोन्मुखकलिकायाम् । कुड्मले । मुञ्चतिकलिकात्वम् । मुच्लृमोचने । बाहुलकादुलक् ॥ आत्मनि ॥ शरीरे ॥

मुकुलितः । त्रि० निमीलिते ॥

मुकूलकः । पुं० दन्तिवृक्षे । निकुम्भे ॥ मङ्कते । मकि० । पिञ्छादित्वादूलच् । स्वार्थेकन् । आगमशासनस्यानित्यत्वान्नुम् । पृषोदरादिः ॥

मुक्तः । त्रि० मोचिते ॥ उत्सृष्टे । त्यक्ते व्यपगतपाशे । विमुक्तमोहादिबन्धने । असक्तोऽद्विष्टमुक्तः ॥ निवृत्ताविद्ये । कर्तृत्वभोक्तृत्वाद्यध्यासशून्ये । कल्पितवियदादिप्रपञ्चनिरासाधिष्ठाने ॥ अस्यलक्षणमपियथा । कपालवृक्षमूलानिकुचैलमसहायता। समताचैवसर्वस्मिन्नेतन्मुक्तस्यलक्षणम् ॥ अस्यनमस्काराभावोभगवत्पूज्यपादैर्दर्शितोयथा । नामादिभ्यः परंभूम्निस्वाराज्येचेत्स्थितोऽद्वये । प्रणमेत्कन्तदात्मज्ञोनकार्यंकर्मवातदेतिविद्यारण्यनामकपाणिनिष्ठे ब्रह्म

चिनिश्चले । परिनिश्चिततत्त्वीय : समुक्त : कर्मबन्धनात् ॥ नमुक्तिर्जपनाद्धोमादुपवासशतैरपि । ब्रह्मैवाहमितिज्ञात्वामुक्तोभवतिदेहभृत् ॥ आत्मासाक्षीविभु : पूर्ण : सत्योऽद्वैत : परात्पर : । देहस्थोपिनदेहस्थोज्ञात्वैवंमुक्तिभाग्भवेत् बालक्रीडनवत्सर्वंरूपनामादिकल्पनम् । विहायब्रह्मनिष्ठोय: स मुक्तोनात्रसंशयइतिश्रीमहानिर्वाणतन्त्रेकुलावधूतवर्णनेचतुर्दशोल्लास: ॥ मुच्यतेस्म । मुच्लृ० । क्त : ॥

मुक्तकञ्चुक : । पुं० निर्मुक्ते । अचिरत्यक्तनिर्मोकेसर्पे ॥ मुक्त : कञ्चुकोयेन ॥

मुक्तचक्षु : । पुं० सिंहे ॥ त्रि० मुक्तनेत्रे ॥

मुक्तबन्धन : । त्रि० त्यक्ताभिमाने ॥ त्यक्तपाशे ॥ मुक्तंबन्धनंयेनयस्य वा ॥

मुक्तरसा । स्त्री० रास्नायाम् ॥ त्रि० त्यक्तरसे ॥

मुक्तसङ्ग : । त्रि० त्यक्तफलाभिसन्धौ ॥

मुक्तस्वाप : । त्रि० त्यक्तनिद्रे ॥

मुक्ता । स्त्री० मौक्तिके । इन्दुरत्ने । शौक्तिके । मोती० इ० भा० प्र० रत्ने ॥ मुच्यतेस्म । मुच्लृ० । क्त: ॥ व्यपगतपापायां ॥ पुंश्चल्याम् ॥

मुक्ताकलाप : । पुं० मुक्ताहारे ॥

मुक्तागारम् । न० शुक्त्याम् ॥ मुक्तायाअगारम् ॥

मुक्तागारा । स्त्री० पुंश्चल्याम् ॥ मुक्तंत्यक्तमगारंययासा ॥

मुक्तापुष्प: । पुं० कुन्दवृक्षे ॥ मुक्तेवपुष्पाण्यस्य ॥

मुक्ताप्रसू : । स्त्री० शुक्तौ ॥ मुक्तायाःप्रसू : ॥

मुक्ताप्रालम्ब : । पुं० मुक्ताहारे ॥

मुक्ताफलम् । न० घनसारे । कर्पूरे ॥ लवलीफले । मौक्तिके ॥ गजेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानिप्रथितानिलोकेतेषान्तुशुक्त्युद्भवमेवभूरि ॥ विशेषोन्यत्रगरुडपुराणादौद्रष्टव्य : । अथवाराह्युक्तंलक्षणादिकंयथा। द्विपभुजगशुक्तिशङ्खाभ्रवेणुतिमिसूकरप्रसूतानि । मुक्ताफलानितेषांबहुसाधुचशुक्तिजंभवति ॥ सिंहलकपारलौकिकसौराष्ट्रिकताम्रपर्णिपारशवा : । कौवेर्यपाण्ड्यवाटकहैमकइत्याकरास्त्वष्टौ ॥ बहुसंस्थाना : स्निग्धाहंसाभा : सिंहलाकरा : स्थूला : । ईषत्ताम्रा : श्वेतास्तमोवियुक्ताश्चताम्राख्या : ॥ कृष्णा : श्वेता : पीता : सशर्करा : पारलौकिकाविषमा : । नस्थूलानात्यल्पानवनीतनिभाश्चसौराष्ट्रा : ॥ ज्योतिष्मन्त : शुभ्रागुरवोऽतिमहागुणाश्चपारशवा :

तापाकेनसंयैाज्यकुर्यात्मुक्तातुमो-दकान् । लघुर्याहीत्रिदोषघ्नः स्वादुः शीतोरुचिप्रदः चक्षुष्यो ज्वरहृद्बल्यस्तर्पणो मुद्गमोदकः॥

मुक्तालता । स्त्री॰ मुक्ताहारे ।

मुक्तावली ।। स्त्री॰ मुक्तामालायाम् मुक्तानामावलीदीर्घा उक्तिः ।।

मुक्तास्फोटः । पुं॰ शुक्तौ । मुक्तोत्पादिकायांशुक्तौ ।। मुक्ताः स्फुटन्त्यस्मात् स्फुट॰ । हलश्चेतिघञ् ।।

मुक्तास्फोटा । स्त्री॰ शुक्तौ ।।

मुक्तिः । स्त्री॰ कैवल्ये । निर्वाणे । श्रेयसि । श्रेयसि । अमृते । मोक्षे । अपवर्गे । स्वरूपावस्थाने । अज्ञाननिवृत्तिलक्षणायांसंसिद्धौ ॥ मुक्तौतमोतिरेकेणनान्तरायोन्यदुच्यते । यतोतोऽज्ञानविध्वस्तौमुक्तः सन्नेवमुच्यते ॥ साचपुण्यैर्विनानलभ्यतेइत्याहुराचार्याः यथा । जन्तूनांनरजन्मदुर्लभमतः पुंस्त्वं ततोविप्रतातस्माद्वैदिकधर्ममार्गपरताविद्वत्त्वमस्मात्परम् । आत्मानात्मविवेचनंस्वनुभवोब्रह्मात्मनासंस्थितिर्मुक्तिर्नोशतकोटिजन्मसुकृतैः पुण्यैर्विनालभ्यतेइति ॥ मोचनम् । मुच्लृमोक्षणे । भावेस्त्रियांक्तिन् ॥ मुक्तिः पञ्चविधेति पौराणिकाः । यथा सालोक्यंचापिसारूप्यंसार्ष्टिसायुज्यमेवच । कैवल्यंचेतितांविद्धिमुक्तिराघवपञ्चधा ॥ अपिच । सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्त्वमप्युत । दीयमानं नगृह्णन्तिविनामत्सेवनंजनाः ॥ इतिभागवताः ॥ मुक्तिस्तुद्विविधासाध्विस्मृत्यन्तसर्वसम्मता । निर्वाणपददात्रीचहरिभक्तिप्रदानृणाम् ॥ हरिभक्तिस्वरूपाञ्चमुक्तिंवाञ्छन्तिवैष्णवाः । अन्येनिर्वाणरूपाञ्चमुक्तिमिच्छन्तिसाधवः । इ॰ब्र॰वै॰पुं॰ ॥ आत्यन्तिकदुःखनिवृत्तिरितिनैयायिकाः ॥ प्रकृतिपुरुषयोर्विवेकदर्शनात्मुक्तिरितिसांख्याः ॥ प्रकृतावुपरतायांपुरुषस्वरूपेणावस्थानंमुक्तिरितिसांख्यसिद्धान्तः ॥

मुक्तिदः । त्रि॰ कैवल्यप्रदे ।

मुक्तिदा । स्त्री॰ गुरुवाचि ॥

मुक्तिभाक् । त्रि॰ मुमुक्षौ । मुक्ताधिकारिणि ॥ ब्रह्मज्ञानादृतेदैविकंकर्मसन्न्यसनंविना कुर्वन्कल्पशतंकर्मनभवेन्मुक्तिभाग्जनः ॥

मुक्तिमण्डपः । पुं॰ काश्यांविश्वेश्वरस्यदक्षिणपार्श्वस्थमण्डपे ॥ यथा । निमिषमात्रंस्थितचित्तवृत्तास्तिष्ठन्ति येदक्षिणमण्डपेच । अनन्यभावाश्च पिगाढमामसानतेपुनर्गर्भदशामुपयान्ति ॥

मुक्तिमुक्तः । पुं॰गन्धद्रव्यविशेषे । तुरुष्के । सिह्लके । सिलारस॰लोबा

म०इ०भा० प्र० ॥

मुक्तियुक्ति: । स्त्री० मुक्तिबोधनप्रकारे ॥

मुख: । पुं० ऋषौ । सक्तुचे । बङ्गल०इ०भा० ॥

मुखम् । न० शरीरावयवविशेषे । वक्त्रे । आस्ये । वदने । तुण्डे । आनने । लपने ॥ तत्स्वरूपंयथा । ओष्ठौचदन्तमूलानिदन्ताजिह्वाचतालु च । गलोगलादिसकलंसप्ताङ्गंमुखमुच्यते ॥ कचयस्तुललाटादिचिबुकान्तसमुदायेप्रयुञ्जते ॥ निर्गमे । नि:सरणे । गृहस्यनिर्गमनप्रवेशनयोर्वर्त्मनि । प्रारम्भे ॥ उपाये ॥ नाटकादे: सन्धिविशेषे ॥ शब्दे । त्रि०श्रेष्ठे ॥ खन्यते । खनुअवदारणे । डित्खनेर्मुट्चोदात्तइत्यच्०आदेर्मुडागम: ।

मुखकमलम् । न० वदनारविन्दे । मखंकमलमिव ।उपमितसमास: ॥

मुखगन्ध: । पुं० मुखामोदे ॥

मुखगन्धक: । पुं० पलाण्डौ ॥

मुखघण्टा । स्त्री० हुलहुल्याम् । मङ्गलकर्मणिस्त्रीणांमुखध्वनिविशेषे । उलूली । हुलु०इ०गौ०भा० ॥

मुखचपला । स्त्री० आर्याप्रभेदे । आर्याद्दलंसमस्तंभजेत् लक्ष्मचपलागतंयस्या: । शेषेपूर्वंजलक्ष्माम् खचपलासोदितामुनिना ॥ यथा । नन्दसुतवक्त्रस्वच्छंनतेप्रिमगच्छतवेव । यत्रभवतितेराग: कापिक्रमादेतिमुखचपला ॥

मुखचीरी । स्त्री० रसनायाम् । जिह्वायां ।

मुखतोय: । त्रि० मुखतोजाताद्दौ ॥ आद्यादित्वात्तसौ०मुखपार्श्वतसीर्लोपश्चेतिष्ठ: ॥

मुखदूषण: । पुं० पलाण्डौ ॥

मुखधावनम् । न० आस्यप्रक्षालने ॥ पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवे: । पञ्चपल्लव: श्रेष्ठ: कषायो मुखधावने ॥

मुखधौता । स्त्री० ब्राह्मणयष्टिकायाम् ॥

मुखनिरीक्षक: । पुं० अलसे ॥

मुखपूरणम् । न० गण्डूषे ॥

मुखप्रिय: । पुं० ऐरावते । नागरङ्गे ॥

मुखभूषणम् । न० ताम्बूले ॥

मुखमण्डनक: । पुं० तिलकवृक्षे । त्रि० आस्यभूषणे ॥

मुखामोद: । पुं० शोभाञ्जने ॥

मुखयन्त्रणम् । न०कविकायाम् । खलीने ॥

मुखयोनि: । पुं० आसेक्ये ॥

मुखर: । त्रि० दुर्मुखे । अबद्धमुखे । अप्रियवादिनि ॥ निन्दितंमुखमस्य । रप्रकरणे खमुखकुञ्जेभ्यश्चपसङ्ख्यानम् । मुखशब्दोचवच

ययावचनपर : ॥ निरन्तरभाषिणि ॥ मुखं वामस्यास्ति । पूर्ववद्रः ॥ शब्दायमाने ॥ यथा । मुखरस्तृणकलकपिं चइति ॥ पुं॰ काके ॥ शङ्खे ।

मुखरता । स्त्री॰ वाचालतायाम् ॥ भावे तल् ॥

मुखरिका । स्त्री॰ वचने ॥

मुखरित : । त्रि॰ कीर्त्तिते ॥ प्रकटिते ॥ यथा । सम्मुखरितम् ॥

मुखरोग : । पुं॰ वक्त्रामये ॥ मुखरोगाणांनिदानं यथा । अनूपपिशितक्षीरदधिमाषादिसेवनात् । मुखमध्यगदान्कुर्युः क्रुद्धादोषाकफोत्तरा : तेषांसङ्ख्यायथा । स्युरष्टावोष्ठयोर्दन्तमूलेतुदशषट् तथा । दन्तेष्वष्टौरसज्ञायांपञ्चस्युर्नवतालुनि । कण्ठे त्वष्टादशप्रोक्तास्त्रय : सर्वसरा : स्मृता : । एवं मुखामया : सर्वे सप्तषष्टिर्मतावुधै : ॥ तक्कुन्नीयकगोक्षुरमूलं पीतं पयोन्वितम् । कामलादिहरं प्रोक्तं मुखरोगहरं तथा । शुष्कमूलकशुण्ठीनांक्षारोहिङ्गुलमागरम् । शुष्कंचतुर्गुणं दद्यात्तेनमेतं विपाचयेत् ॥ बाधिर्यकर्णशूलस्रपूयस्रावश्चकर्णयो : । पूरणादस्यतैलस्यक्रमय : कर्णयो : क्षिपा : ॥ क्षिप्रं विनाशमायान्ति प्रमाह्कृतमीश्वर प्रारते यन्निदं ।

श्चंमुखदन्तामयापहम् ॥

मुखलाङ्गल : । पुं॰ शूकरे । कोले । भूदारे ॥ मुखं लाङ्गलं यस्य ॥

मुखवल्लभ : । पुं॰ दाडिमवृक्षे ॥ त्रि॰ मुखप्रिये ॥

मुखवाचिका । स्त्री॰ अम्बष्ठायाम् ॥

मुखवाद्यम् । न॰ वक्त्रनालवाद्ये । वांकइति गौ॰ भाषाप्रसिद्धे ॥ मुखस्य॰मुखेनचवाद्ये ॥

मुखवास : । पुं॰ गन्धद्रव्ये ॥

मुखवासन : । पुं॰ मुखसुगन्धकारकद्रव्ये । आमोदिनि ॥ मुखंवासयति । वस॰ । नन्द्यादित्वाल्ल्युः ॥

मुखविलुण्ठिका । स्त्री॰ अजायाम् । छाग्याम् ॥

मुखविष्ठा । स्त्री॰ तैलपायिकायाम् ।

मुखशफ : । पुं॰ दुर्मुखे ॥

मुखशुद्धि : । स्त्री॰ वक्त्रशोधने ॥ यथा । अभावेदन्तकाष्ठानांप्रतिषिद्धदिनेतथा । अपांद्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥

मुखशोधन : । पुं॰ कटुरसे ॥ न॰ त्वचे ॥

मुखशोधी । स्त्री॰ जम्बीरे ॥

मुखशील : । त्रि॰ दुर्मुखे ॥

मुखसम्भव : । पुं॰ ब्राह्मणे ॥ मुखात्सम्भवोऽस्य ॥

मुखसिद्ध : । पुं० मुखकर्म्मणिसिद्धे
पूव ॥ यथोक्तं रैवतोत्तरे । स्त्राध
रोष्ठसितर्फ नवलाभिरामफूत्कारवा
युपदमुन्नतकम्बरायम् । नीत्वोप
कुञ्चितमुखेनवलीढसाम्यमपूर्व चतु
र्ष्कसमयेमुखसिद्धिमाहुरिति ॥
मुखसुरम् । न० ताम्बूलम् । स्मरा
सवे । ताडी ० दू० प्रसिद्धमद्ये ॥
गण्डूषमद्ये ॥ मुखस्यसुरा । विभा
षासेनासुरेतिक्लीवता ॥
मुखस्राव : । पुं० लालायाम् । ला
ल० दू० भा० ॥
मुखाग्नि : । पुं० दावाग्नौ ॥
मुखामय : । पुं० मुखरोगे ॥
मुखार्जक : । पुं० बर्ब्बरे । श्वेतम
र्षासे ॥
मुखास्त्र : । पुं० कर्कटे ॥
मुखाल्का । स्त्री० दावाग्नौ । भूतस
ङ्घायाम्
मुख्य : । पुं० आद्यविधौ । शास्त्रोक्त
प्रथमकल्पे ॥ यथा व्रीहिभिर्य
जेत । श्रुतिमात्रे यथाश्रुततादर्थ्यं
मवसीयते । तं मुख्यमर्थं मन्यन्ते ।
त्रि० श्रेष्ठे । वरे ॥ प्रधाने ॥ मुख
मिव । शाखादित्वाद्य : ॥ मुखे
त्पन्ने ॥ मुखेभव : । दिगादित्वा
द्यत् ॥
मुख्यक्रम : पुं० प्रमाणविशेषे । प्रधान-
क्रमेणयोङ्गानांक्रम : समुख्यक्रम:

येनहिक्रमेणप्रधानानिक्रियन्ते तेने
वक्रमेण० तेषामङ्गान्यनुष्ठीयन्ते ०
तदासर्वेषामङ्गानांस्वै : स्वै : प्रधा-
नैस्तुल्य व्यवधानंभवति । व्युत्क्र-
मेणानुष्ठानेकेषाञ्चिदङ्गानांस्वै : प्र-
धानैरत्यन्तमव्यवधानम् ० केषाञ्चि-
दत्यन्तं व्यवधानंस्यात् । तच्चायुक्त-
म् । प्रयोगविध्यवगतसाहित्यबाधा
पत्ते : । अत : प्रधानक्रमोप्यङ्ग-
क्रमेहेतु : । अतएवप्रयाजशेषेणाघा
रावाग्नेयहविषोभिघारणम् ० पश्चा
दैन्द्रस्यदध्न : । आग्नेयैन्द्रयागयो
पौर्वापर्यात् । एवञ्चद्वयोर्द्वयोरभि
घारणयो : स्वस्वप्रधानेनतुल्यमेका
न्तरितंव्यवधानम् । व्युत्क्रमेणाभि
घारणे चाग्नेयहविरभिघारणाग्ने-
ययागयोरत्यन्तमव्यवधानम् । ऐ-
न्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्त-
रितं व्यवधानं ० तच्चायुक्तमित्युक्तमे
व । सचमुख्यक्रम : पाठक्रमाद्दु-
र्बल : । मुख्यक्रमोहिप्रमाणान्तर-
सापेक्षप्रधानक्रमप्रतिपत्तिसापेक्ष-
तयाविलम्बितप्रतिपत्तिक : । पा-
ठक्रमस्तुनिरपेक्षत्वाऽध्यायपाठक्रम
मात्रसापेक्षतयाऽतएवबलवान् ।
प्रवृत्तिक्रमाच्चबलवान् । प्रवृत्तिक्रमे
हिबहूनामङ्गानांप्रधानविप्रकर्षा
त् । मुख्यक्रमेतुसन्निकर्षात् ।
मुद्गसर्ग : । पुं० व्यावरसृष्टौ ॥ मु-

स्यसर्गस्तुर्यस्तुमुख्यास्तेस्थावरा : स्मृताइ॰वराहपुराणात् ॥
मुख्यार्थ : । पुं॰ शब्दश्रवणमात्राद्ग-म्यर्थे यथा । श्रुतिमात्रेणयत्रा-स्यतादर्थ्यमवसीयते । त मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितम् ॥ प्र तिपाद्यार्थे ॥
मुगूह : । पुं॰ दात्यूहपक्षिणि ॥
मुग्ध : । पुं॰ भिक्षुकविशेषे ॥ यथा । सान्निध्ये विषयाणाञ्चसमर्थोऽविक लेन्द्रिय : । सुप्तवद्वर्त्ततेनित्यं भिक्षु र्मुग्ध : सउच्यते ॥ त्रि॰रम्ये । सु न्दरे मूढे विवेकविकले विप र्यस्त श्रुत्यर्थपरिशीलनविधुरे नवे
मुग्धा । स्त्री॰ नायिकाप्रभेदे उदय द्यौवनामुग्धालज्जाविदितमन्मथा । इ॰लक्षणम्
मुचिर : । त्रि॰दातरि ॥ मुच्यते । मु-च्लृ॰ । इषिमदिमुदीत्यादिनाकि रच् ॥ पुं॰ धर्मे ॥ वायौ ॥ देवे ॥
मुचकुन्द : । पुं॰ मान्धातृनृपतेः पु त्र ॥ पुष्पवृक्षविशेषे । क्षत्रवृक्षे । चित्रके । प्रतिविष्णुके । मेचकन्द-फूल॰इ॰भा॰ । मुचुकुन्द : शिर : पीडापित्तास्रविषनाशन : ॥
मुचटी । स्त्री॰ मुकुट्याम् ॥ मुष्टौ । मुट्ठीइ॰भाषा ॥
मुष्कक : । पुं॰ मुष्कवृक्षे ॥

मुञ्ज : । पुं॰ तृणविशेषे । ब्राह्मण्ये । वाणे । स्थूलदर्भे । मूंज॰इ॰भा॰ ॥ मुञ्जद्वयन्तुमधुरंतुवरंशिशिरंतथा । दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोग जित् । दोषत्रयहरंवृष्यंमेखलासूप युज्यते ॥ मुञ्जद्वयम्॰मुञ्जभद्रमुञ्जौ ॥
मुञ्जकेशी । पुं॰ विष्णौ ॥
मुञ्जरम् । न॰ शालूके ॥
मुञ्जातक : । पुं॰ मुञ्जे ॥ पुष्पशाकप्रभेदे ॥
मुञ्जावट : । पुं॰ तीर्थविशेषे ॥ यत्रमहादेवस्तिष्ठति ॥ तीर्थान्तरे ॥
मुण्ड : । पुं॰ दैत्यविशेषे राहुग्रहे ॥ मुण्डितसमस्तशिर : केशेब्रह्मचा-रिविशेषे ॥ सशिखकेशश्मश्रुरहिते परिव्राजि ॥ नापिते । स्थाणुद्रौ पुं॰न॰मूर्द्धनि न॰बोले ॥ मुण्डायसे ॥ त्रि॰मुण्डिते ॥ मुण्डाते । मुण्डिखण्डने । घञ् ॥
मुण्डक : । पुं॰ नापिते ॥ न॰मस्तके ॥ उपनिषद्विशेषे ।
मुण्डचणक : । पुं॰ कलाये ॥
मुण्डनम् । न॰ वपने । परिवापने । चौरे । केशच्छेदने ॥ मुण्डनंचोपवासश्चसर्वतीर्थेष्वयंविधि : । व र्जयित्वागयांगङ्गांविशालांविरजां तथा ॥ मुडि॰ । ल्युट् ॥
मुण्डफल : पुं॰ नारिकेलवृक्षे ॥

मुण्डाकाराणिफलानियस्यस: । मुण्डं फलानियस्यवा ॥

मुण्डमांसम् । न० मुण्डामिषे । तस्यपाकप्रकारो यथा । समग्रं विदहेन्मुण्डमग्निनास्थूलरेतिना । प्रक्षाल्यतप्तपानीये लोमान्यपिच घर्षयेत् ॥ खण्डयित्वापचेत्तैले घृते वोपस्करान्विते ॥ मुण्डामिषं वातहरं स्निग्धं गुरुतरं स्मृतम् । पश्चोर्यस्यहियन्मुण्डं तन्मांसं कगुणावहम् ॥

मुण्डशालि: । पुं० शालिप्रभेदे । मुण्डनकी । त्रि: शूके ॥

मुण्डा । स्त्री० मुण्डीरिकायाम् ॥ मुण्डितशिरस्कायांस्त्रियाम् ॥

मुण्डाख्या । स्त्री० महाश्रावणिकायां ॥

मुण्डायसम् । न० लौहे ॥

मुण्डितम् । न० लौहे ॥ त्रि० परिवापिते । मुण्डितमुण्डे ॥ मुण्डास्यास्य । मुडि० । क्त: ॥

मुण्डितिका । स्त्री० मुण्डीर्याम् । कदम्बपुष्पायाम् ॥

मुण्डी । पुं० नापिते ॥ मुण्डं करोति । मुण्डमिश्रे तिणिच् । यत्वादित्वाणिनि: ॥ मृत्तहीनेक्षगविशेषे ॥ योक्षग: मृत्तहीन: स्यात्समुण्डीतिनिगद्यते ॥ मुण्डीतुश्वरकासासक्षयश्वासामयोहिम: ॥

मुण्डिनिका । स्त्री० श्रावण्याम् । मुण्डीर्याम् ॥

मुण्डी । स्त्री० मुण्डायाम् । गोरक्षमुण्डीतिख्यातौषधौ ॥ मुण्डीतिक्ताकटु: पाकेवीर्योष्णामधुरालघु: । मेध्यागण्डापचीकृच्छ्रकृमियोन्यर्त्तिपाण्डुनुत् ॥ श्लीपदारुच्यपस्माराप्लीहमेदोगुदार्त्तिहृत् । महामुण्डीच मुण्डीवद्गुणैरुक्ता महर्षिभि: ॥

मुण्डीरिका । स्त्री० मुण्डायाम् ॥

मुत्, -द् । स्त्री० हर्षे ॥ मोदनम् । मुदहर्षे । सम्पदादित्वात्क्विप् ॥ वृद्धिनामौषधौ ॥

मुदा । स्त्री० हर्षे । सुखे ॥

मुदित: । पुं० समस्यांश्लिष्टे ॥ त्रि० आनन्दिते । हर्षिते । विहारादिभि: सन्तुष्टे । मुद० । क्त: । उदुपधादिति० वाक्तित् ॥ न० आलिङ्गनविशेषे ॥ तल्लक्षणं यथा । नायिकयानायकस्ययामपार्श्वेउषित्वावामपादंतस्योरुद्वयमध्येस्थापयित्वोभौमिलित्वायदवस्थानमितिकामशास्त्रं ॥

मुदिता । स्त्री० हर्षे ॥ पुण्यक्रियेषु मुदितांभावयेत् । पुण्यवत्सुपुण्यानुमोदनेनहर्षं कुर्यात् । न तु विद्वेषमन्वीयेयाम् ॥

मुदिर: । पुं० मेघे । वारिवाहे ॥ मोदस्तेनेन । मुद० । इषिमदिमुदो-

तिकिरच् ॥ कामुके ॥ भेके ॥

मुद्ग : । पुं॰ शमीधान्यभेदे । सूपप्रधाने । रसोत्तमे । भुक्तिप्रदे । इत्यानन्दे ॥ मुद्गोरूक्षोलघुर्ग्राही कफपित्तहरोहिम : । स्वादुरल्पानिलोनेत्र्योज्वरघ्नोवनजस्तथा ॥ कृष्णमुद्गो महामुद्गोहरित : पीतकस्तथा । श्वेतोरक्तस्तेषान्तुपूर्वं : पूर्वोलघु : स्मृत : ॥ सुश्रुतेनपुन : प्रोक्तोहरित : प्रवरोगुणै : । चरकादिभिरप्युक्तएषएवगुणाधिक : ॥ मुद्गस्यफलंमुद्ग : । बिल्वादिभ्योण् । तस्यफलपाकेतिलुपियुक्तवद्भाव : ॥ यद्वा । मोदयति । मुद॰ । मुदिग्रोर्गग्गाविति गक् ॥

मुद्गपर्णी । स्त्री॰ वनमुद्गे । काकमुद्गायाम् । सहायाम् । सूर्प्यपर्ण्याम् ॥ मुद्गपर्णीहिमारूक्षातिक्तास्वादुश्चक्रपाला । चक्षुष्याक्षतशोथघ्नीग्राहिणीज्वरदाहनुत् ॥ दोषत्रयहरीलघ्वीग्रहण्यर्शोतिसारहृत् ॥ मुद्ग : पर्णमस्या : । मुद्गशब्देनमुद्गपर्णसदृशंलक्ष्यते । पाककर्णेतिङीष् ॥

मुद्गभुक् । पुं॰ घोटके ॥

मुद्गभोजी । पुं॰ घोटके । अश्वे ॥

मुद्गमोदक : । पुं॰ मुद्गमोदके ॥

मुद्गर : । पुं॰ लोष्टादिभेदने ॥ कर्मारद्रव्ये ॥ मोगरा॰इ॰भा॰प्र॰पुष्पवृक्षविशेषे । गन्धसारे । सप्तपर्णे । अ-

तिगन्धे । जनेष्टे । स्वनामख्यातप्रसिद्धे॰ अस्त्रविशेषे । द्रुघणे ॥ कोरके ॥ न॰ मल्लिकाप्रभेदे ॥ गिरति । गृनिगरणे । अच् । मुद्गोगर : ॥

मुद्गरक : । पुं॰ कर्मारद्रव्ये । कमरख इतिभाषा ॥

मुद्गल : । पुं॰ गोत्रकारकेमुनिविशेषे ॥ हर्यश्वराजपुत्रे ॥ न॰ रोहिषतृणे ॥

मुद्गवटक : पुं॰ । मूंगवरा॰इतिलोकप्रसिद्धे ॥ मुद्गानांवटकास्तक्रे मज्जितालघवोहिमा : । संस्कारजप्रभावेणत्रिदोषशमनाहिता : ॥

मुद्गवटिका । स्त्री॰ मुंगौडी इ॰लोकप्रसिद्धवटिकायाम् ॥ मुद्गानांवटिकास्तद्वद्रचितासाधितास्तथा । पथ्यारुच्यास्ततोलघ्व्योमुद्गसूपगुणा : स्मृता : ॥ तद्वत् ॰माषवटीवत् ॥

मुद्गार्द्रकवट : । पुं॰वटकविशेषे । अदेवरा॰इ॰भा॰ ॥ आदावडा॰इ॰गौ॰भा॰ ॥ मुद्गपिष्ट्याविरचितान् वटकांस्तैलपाचितान् । हस्तेनचूर्णयेत्सम्यक्तस्मिंश्चूर्णेविनिक्षिपेत् । भृष्टहिङ्ग्वार्द्रकंसूक्ष्मंमरिचंजीरकंतथा । निम्बूरसयवानीभ्यांयुक्त्यासर्वंविमिश्रयेत् ॥ मुद्गपिष्टींपचेत्सम्यक्स्थाल्यामास्तारकोपरि । तस्यास्तुगोलकान्कुर्यात्तन्मध्येपूरणंक्षिपेत् ॥ तैलेतान्गोलकान्पक्वाक्वाथितायांनिमज्जयेत् । गोल-

का : पाचकैः प्रोक्तास्तेस्वाद्र्ककव टाश्चपि ॥ मुद्राद्र्ककवटास्त्वाचा लघवोवलकारका : । दीपना स्तर्पणापथ्या स्त्रिषु दोषेषु पूजि ता : ॥

मुद्रा । स्त्री० प्रत्ययकारिण्याम् । छा प० इ० भाषाप्रसिद्धायाम् ॥ मोद- तेऽनया । मुद० । स्फायितञ्चीति रक् ॥ चिन्हे ॥ पञ्चविधलिप्यन्तर्ग- तलिपिविशेषे । छापाअचरइति- भा०प्र० ॥ यथोक्तं वाराहीतन्त्रे मुद्रालिपि : शिल्पलिपिर्लिपिर्ले- खनिसम्भवा । गुण्डिकाघुणसम्भू- तालिपय : पञ्चधास्मृता : ॥ एता भिर्लिपिभिर्व्याप्ताधरित्रीशुभदाहरे ति ॥ मुण्डमालातन्त्रे पियथा । लेखन्यालिखितंविप्रैर्मुद्राभिरङ्कित ञ्चयत् । शिल्पादिनिर्मितंयच्चपा- ठ्यंधार्यञ्चसर्वदा ॥ इ० ॥ लोकप्र सिद्धा । स्वर्णरौप्यमुद्रकयो : ॥ पु राणाद्युक्ता । शरीरेधारणीयेभगव- तश्चायुधादिचिह्ने ॥ कृष्णायुधाङ्कि तंदेहंगोपीचन्दनमृत्स्नया । प्रया- गादिषुतीर्थेषुसगत्त्वाकिंकरिष्य- ति ॥ यदायस्यप्रपश्येतदेहंशङ्खा दिचिह्नितं । तदातदाजगत्स्वामी- तुष्टोहरतिपातकम् ॥ भवतियस्यदे- हेतुमहीराचंदिनेदिने । शङ्खच क्रगदापद्मंलिखितंसोऽच्युत : स्व यम् ॥ नारायणायुधैर्युक्तं कृत्वात्मा नंकलौयुगे । कुरुतेपुण्यकर्माणिमे रुतुल्यानितस्यवै ॥ शङ्खादिना- ङ्कितोभूत्वाश्राद्धंय : कुरुतेद्विज : । विधिहीनन्तुसम्पूर्णं पितृणाञ्चगया- समम् । यथाग्निर्दहतिकक्षंवायुनाप्रे रितोभृशम् । तथादहन्तिपापानि दृष्ट्वाकृष्णायुधानिवै ॥ देवताप्रीति जनिकाङ्गुलिरचनायाम् ॥ मो- दनात्सर्व्वदेवानांद्रावणात्पापस- न्ततेः । तस्मात्मुद्रेतिसाख्याता- सर्वकामार्थसाधनी ॥

मुद्राङ्कित: । त्रि० मुद्रिते । मुद्रया चिह्निते । मोहरकियो० इ० भा० प्र० ॥

मुद्रालिपि : । स्त्री० पञ्चधालिप्यन्तर्ग तलिपिविशेषे । छापेकाअचर० इतिभाषा ॥

मुद्रिका । स्त्री० स्वर्णरूप्यादिनिर्म्मि- तमुद्रायाम् ॥

मुद्रित : । त्रि० अप्रफुल्ले । सङ्कुचि ते । निद्राणे । मीलिते । मुंदा० इ० भा० ॥ मुद्राङ्किते ॥

मुधा । अ० व्यर्थे ॥ मुह्यति । मुह वैचित्ये । काप्रत्यय : । पृषोदरा दित्वात्हस्यध : ॥

मुनि : । पुं वशिष्ठादौ ॥ वाचंयमे । मौनिनि ॥ ज्ञानातिशयवति ॥ मननशीले । विवेकिनि । सन्न्या

सिनि। परमार्थतत्त्वस्यमननान्मु निरितिशास्त्रकर्तांव्युत्पत्तेर्नेतरो जनः शास्त्रविदपितत्त्वज्ञानाभावात्। सदामननशीलेजीवन्मुक्तामुनिः सहि। स्थितप्रज्ञादिभिः शब्दैर्मोक्षशास्त्रेषुवर्ण्यते ॥ दुःखेष्वनुद्विग्नमनाः सुखेषुविगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ मौनान्मुनिर्भवतिनारण्यवसनान्मुनिः। स्वलक्षणन्तुयोवेदसमुनिः श्रेष्ठउच्यते ॥ अगस्त्ये ॥ बुधे ॥ मन्यते। मन ज्ञाने। मनेरुच्चतीन्० उपधाया उत्त्वञ्च। किदित्यनुवर्त्तनान्नगुणः ॥ वङ्गसेने। अगस्त्यद्रुमे ॥ अर्हति। पियाले किंशुके ॥ दमनकवृक्षे ॥ सप्ताङ्के ॥

मुनिखर्ज्जूरिका। स्त्री० खर्जूरीप्रभेदे ॥

मुनिच्छदः। पुं० सप्तच्छदवृक्षे ॥

मुनितरुः। पुं वकवृक्षे ॥

मुनिद्रुमः। पुं० वकपुष्पे। वङ्गसेने। अगस्तिया० इ० भा० प्र० वृक्षे ॥ श्योनाकवृक्षे ॥ मुनिसंज्ञकोद्रुमः। शाकपार्थिवादिः ॥

मुनिनिर्म्मितः। पुं० डिण्डिशे। डिंडसी० टिंडा० इ० प्र० फलशाके ॥ मुनिनानिर्मितः ॥

मुनिपिप्पलम्। न० ताम्रे ॥

मुनिपुत्रः। पुं० दमनकद्रुमे ॥ ऋटषिसुते ॥

मुनिपुत्रकः। पुं० भद्रनामनि। खञ्जने ॥

मुनिपुष्पः। पुं० अगस्तिद्रुमे ॥ न० अगस्त्यपुष्पे।

मुनिपूगः। पुं० रामपूगे। कामीने ॥

मुनिभेषजम्। न० आगस्त्यहरीतक्याम्। अगस्तिपथ्यायाम्। लङ्घने ॥

मुनिव्रतः। त्रि० उपशान्ते। मुनीनांव्रतमस्य ॥

मुनिसुव्रतः। पुं० सुव्रताख्येबुद्धभेदे ॥

मुनिस्थानम्। न० आश्रमे ॥

मुनीन्द्रः। पुं० श्रीघने। बुद्धे। जिने ॥ मुनिष्विन्द्रः श्रेष्ठः ॥

मुन्यन्नम्। न० नीवारादौ ॥ मुनेर्वानप्रस्थस्य अन्नम् ॥

मुमुक्षुः। पुं० यतौ। संसारग्रन्थिभेदनैकृतप्रयत्ने। साधनचतुष्टयसम्पन्ने ॥ यथा। काव्यनाटकतर्कादीनभ्यस्यतिनिरन्तरम्। विजिगीषुर्यथातद्वन्मुमुक्षुः स्वंविचारयेदिति ॥

मुमुक्षुता। स्त्री० मोक्षेच्छायाम् ॥ संसारबन्धनिर्मुक्तिः कथंस्यान्मेकथाविधे। इतियासुदृढाबुद्धिर्

त्व्यासामुमुक्षुता ॥ मुमुक्षोर्भावः तल् ॥

मुमुक्षुत्वम् । न० मुमुक्षुतायाम् ॥ वैराग्यञ्चमुमुक्षुत्वं तीव्रं यस्यतुविद्यते । तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः ॥ मोक्षेच्छा मोक्षविषयेच्छा० तद्वत्त्वम् मुमुक्षुत्वं । भावेत्वः ॥

मुमुचानः । पुं० मेघे ।

मुमुषिषुः । त्रि० चौरे ।

मुमूर्षुः । त्रि० आसन्नमृत्यौ । मर्तुमिच्छौ । सन्नन्तान्मृङः सनाशंसभिक्षउः ॥

मुरः पुं० दैत्यविशेषे । मुरति । मुरसंवेष्टने । इगुपधत्वात्कः ॥ न० वेष्टने ॥

मुरजः । पुं० मृदङ्गे ॥ मुरणम् । मुर० । तुदादिः । घञर्थेकविधानमितिकः । मुरंवेष्टनंजातमस्य ॥

मुरजफलः । पुं० पनसवृक्षे ॥ मुरजसदृशानिफलानियस्य सः ॥

मुरजबन्धः । पुं० चित्रकाव्यविशेषे ॥

मुरण्डः । पुं० लम्पाकदेशे ॥ तद्देशस्थे तुमुरण्डाः ॥

मुरन्दला । स्त्री० मुरलानद्याम् ॥

मुरमर्द्दनः । पुं० विष्णौ ॥

मुररिपुः । पुं० विष्णौ । मुरस्यरिपुः ॥

मुरला । स्त्री० मुरन्दलायांसरिति ॥

मुरली । स्त्री० वंशीवाद्ये । वंशिकायाम् ॥ इतिशब्दरत्नावली ॥

मुरलीधरः । पुं० श्रीकृष्णे ॥

मुरहा । पुं० केशवे । विष्णौ ॥

मुरा । स्त्री० स्वनामाप्रसिद्धगन्धद्रव्ये । तालपर्ण्याम् । गन्धकुट्याम् । मुरातिक्ताहिमास्वाद्वीलघ्वीपित्तानिलापहा । ज्वरासृग्भूतरक्षोघ्नीकुष्ठकासविनाशिनी । मुरति । मुर० । इगुपधत्वात्कः टाप् ।

मुरारिः । पुं० श्रीकृष्णे ॥ मुरस्यअरिः । मुरः क्लेशेचसन्तापेकर्मभोगेचकर्मिणाम् । दैत्यभेदेप्यरिस्तेषां मुरारिस्तेनकीर्त्तितः ॥

मुरुः । पुं० लोहविशेषे ॥

मुर्मिणी । स्त्री० अङ्गारधान्याम् ॥

मुर्मुरः । पुं० तुषवह्नौ ॥ मन्मथे ॥ रविवाजिनि ॥

मुलतानः । पुं० देशविशेषे ॥ करतोयांसमारभ्यहिङ्गुलाजान्तकंशिवे । मुलतानदेशोदेवेशिमक्षाम्लेच्छपरायणः ॥

मुशटी । स्त्री० सितकङ्गुन्याम् ॥

मुशलः । पुं० न० मुसले । मुश्यत्यनेनवा । मुसखण्डने । उज्ज्वलदत्तादयोमुंतालव्यमध्यमाहुस्ततोवृषादित्वात्कलः ॥

मुशलिका । स्त्री० पन्नगाम् ॥ इतिहलायुधः ॥

मुषली । स्त्री० पल्ल्याम् ॥ तालमूल्याम् ॥ इ० राजनिर्घण्ट : ॥
मुषल : । पुं० न० मुसले ॥ मुषखण्डने । मुषखण्डने० इतिधातोर्दन्त्यान्तो षमूर्द्धन्यान्त षवबोपदेवाचे यादिभि : पठितत्त्वात्कल : ॥
मुषा । स्त्री० मूषायाम् ॥ मुष्णाति । मुषस्तेये । भिदाद्यङ् । टाप् ॥
मुषित : । त्रि० वञ्चिते ॥ हृते ॥ खण्डिते ॥ मुष्यतेस्म । मुषस्तेये । क्त : ॥ नमुषितांस्त्रियंप्रचक्षते । अथमुषितेवमुषिताचौरैर्हृतवस्त्रेव० नग्नेत्यर्थ इतिव्याख्येयम् ॥
मुष्क : । पुं० अण्डकोषे । वृषणे ॥ मुष्णातिरेत : । मुष० । स्त्रभूशुषिमुषिभ्य : कक् ॥ सङ्घाते ॥ मोचकवृक्षे । मुष्कके ॥ मुष्कश्चस्तुद्विविध : श्वेतकृष्णप्रभेदत : ॥ तस्करे ॥ मांसले ॥
मुष्कक : । पुं० घण्टापाटलौ । गोलीठे । मुष्के । भाटले । मोखे ॥ मुष्कक : कटुकस्तिक्तोग्राह्युष्णा : कफवातहृत् । विषमेहगुल्मकण्डूवस्तिरुक्कृमिशुक्रनुत् ॥ मुष्णाति रोगम् । मुषे : ककन्तात्० स्वार्थे कन् ॥
मुष्कर: । पुं० समुष्के । प्रलम्बाण्डे ॥ मुष्कोण्ड : । सोस्यास्ति । ऊषसुषीतिर : ॥
मुष्कशून्य : । पुं० वृषणरहिते । अनुपस्थे । स्त्रीस्वभावे । महल्लिके । राज्ञोन्त : पुररक्षके । खोजा० भाषा ॥
मुष्ट : । त्रि० चोरिते ॥ मुषेक्त : ॥
मुष्टि : । पुं० स्त्री० पलपरिमाणे । चारतोला इतिभाषा ॥ बद्धपाणौ । मुट्ठी० इ० भा० । अङ्गुलिसन्निवेशोमुष्टि : ॥ यथा । घासमुष्टिंपरगवेसाद्यं दद्याच्चय : सदा । अकृत्वाखयमाहारं स्वर्गलोकंसगच्छतीतिश्रीमहाभारतम् ॥ त्सरौ । मूठ० इतिभाषा ॥ धान्यमानभेदे । कुडवाष्टभागे । छटांक० इ०भा० ॥ मोषणे । सङ्गोपने । मुष्यतेनया । मुष० । स्त्रियांक्तिन् ॥ यद्वा । मुष्णाति । क्तिच् ॥ प्रहारविशेषे । मुक्की इतिभाषा ॥ पथिक्षुधार्त्तस्य तिलादीनांमुष्टिग्रहणे चौर्याभावो यथा । तिलमुद्गयवादीनांमुष्टिर्ग्राह्यापथिस्थितै : । क्षुधार्त्तैर्नान्यथा विप्रविधिविद्भिरितिस्थिति: ॥
मुष्टिक : । पुं० कंसासुरस्यमल्लविशेषे ॥ स्वर्णकारे ॥
मुष्टिकान्तक : । पुं० बलदेवे ॥ मुष्टिकस्यअन्तक : ॥
मुष्टिद्यूतम् । न० चुबके । द्यूतप्रभेदे ॥
मुष्टिन्धय : । पुं० बालके ॥ मुष्टिंध

यति । धेट् पाने । नाडीमुष्ट्यो श्चेति० खश् । मुम् ॥

मुष्टिबन्धः । पुं० सङ्ग्रहे । मुष्टिबन्धनक्रियायाम् ॥ अहोसन्नस्यमुष्टिबन्धः ॥ मुष्टेर्बन्धः ॥ मुष्टिनाबन्धोदृढग्रहणं वा ॥

मुसलः । पुं० न० अयोग्रे । कण्डनीयदण्डे । मूसर० मूसल० इ० भा० ॥ मुस्यत्यनेनवा । मुसखण्डने । वृषादिभ्यश्चेतिकलः ॥

मुसली । पुं० हलिनि । बलदेवे ॥ मुसलमस्त्यस्य । अतइनिठनाविति ॥ यथोक्तं विष्णुपुराणे जरासन्धयुद्धोद्योगे । हलञ्चबलभद्रस्यगगनादागतं ज्वलत् । मनसोभिमतं विप्रसौनन्दं मुसलं तथेति ॥

मुसली । स्त्री० तालमूल्याम् ॥ तालमूलीतुविद्वद्भिर्मुसलीतिनिगद्यते ॥ मुसलीचद्विधाप्रोक्ताश्वेताचापरसंज्ञका । श्वेताल्पगुणोपेता अपराचरसायनी ॥ मुसलीमधुरा वृष्यावीर्योष्णाबृंहणीगुरुः । तिक्तारसायनीहन्तिगुदजान्यनिलंतथा ॥ आखुपर्ण्याम् ॥ गृहगोधिकायाम् ॥ मुस्यति० मुसतिसंशयं वा । मुस० । वृषादिभ्यश्चित्कलः । जातेरितिगौरादित्वाद्वाङीष् ॥

मुसलीय: । त्रि० मुसल्ये ॥ मुसलायहितः । विभाषाहविरपूपादिभ्यइतिपक्षे छः ॥

मुसल्यः । त्रि० मुसलेनवध्ये ॥ दण्डादिभ्योयत् ॥ मुसलीये । मुसलायहितः । अपूपादित्वात्पक्षे यत् ॥

मुस्तः । पुं० न० मुस्तके । मोथा० इ० भा० ॥

मुस्तकः । पुं० न० मुस्ते । कुरुविन्दे । मेघनामनि । मुस्तायाम् । मोथा० इ० भा० ॥ मुस्तं कटुहिमंग्राहितिक्तंदीपनपाचनम् । कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत् ॥ अनूपदेशेयज्जातंमुस्तकंतत्प्रशस्यते । तत्रापिमुनिभिः प्रोक्तंवरंनागरमुस्तकम् ॥ मुस्तसङ्घाते । चु० । ण्वुल् ॥

मुस्ता । स्त्री० मुस्तके । मोथाख्यतृणे ॥ मुस्तयति । मुस्त० अच् टाप् ॥

मुस्तादः । पुं० शूकरे ॥ मुस्तामत्ति । अद० । कर्मण्यण् ॥

मुस्ताभम् । न० मुस्तकविशेषे । कुटन्नटे । नागरमोथा० इ० भा० ॥

मुस्तुः । पुं० मुष्टौ ॥

मुस्लम् । न० अशुचि ॥ मुस्यति । मुस० । मुसेरक्वाकुलकात् ॥ मुसली ॥

मुहिरः । पुं० कामे ॥ मूर्खे ॥ मुह्यति । मुहवैचित्त्ये । इषिमदि

मुदीत्यादिनाक्तिरच् ॥
मुहुर्भाषा । स्त्री० पुनः पुनः कथने । अनुलापे ॥ मुहुर्भाषणम् । भाष० अच् ॥
मुहुः । अ० पौनःपुन्ये । मोहनम् । मुह० । मुहेः किच्चेत्युसिः ॥ पुनरर्थे ॥
मुहूर्त्तः । पुं० न० द्वादशक्षणात्मकेकाले ॥ त्रिंशत्कालात्मकेकाले ॥ दण्डद्वयात्मकेकाले ॥ मुहूर्त्तंघटिकाद्वयमित्युक्तः ॥ अक्षिपक्ष्मपरिक्षेपोनिमेषः परिकीर्त्तितः । द्वौनिमेषौत्रुटिर्नाम द्वे त्रुटीतुलवः स्मृतः ॥ द्वौलवौक्षणइत्युक्तः काष्ठाप्रोक्ताद्दशक्षणः । त्रिंशत्काष्ठाकलाप्रोक्ताकलात्रिंशन्मुहूर्त्तकः ॥ पुराणोक्तलक्षणन्तु । रौद्रः श्वेतस्तथामैत्रस्ततः सारभटः स्मृतः ॥ सावित्रोवैश्वदेवश्चगन्धर्वः कुतपस्तथा । रोहिणस्तिलकश्चैवविजयोनिर्ऋतिस्तथा ॥ संवरोवरुणश्चैवभगः पञ्चदशस्मृतः ॥ इति दिनपञ्चदशभागैकभागे ॥ यथा । प्रातः कालोमुहूर्त्तांस्त्रीन्सङ्गवस्तावदेवतु । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ॥ सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धंतत्रनकारयेत् । राक्षसीनामसावेलागर्हिता सर्वकर्मसु ॥ हूर्छति । हूर्छाकौटिल्ये । अस्माल्लिङ्चोर्द्ध्वंमौहूर्त्तिकइतिनिर्द्देशान्मुहूर्त्तशब्दोनिष्पन्नः ॥ अल्पकाले ॥ दिनगुणविशेषे । लक्षणयातदुपलक्षितेकाले ॥
मुहिरः । त्रि० मूर्खे ॥ मुह्यति । मुह० । मूलेरादयश्चेतिसाधुः ॥
मुह्यमानः । त्रि० अनेकानर्थप्रकाररविवेकतयाविच्छिन्नचित्ततयाचिन्तामापद्यमाने ॥
मूः । स्त्री० बन्धने ॥
मूकः । पुं० जलेशये । मत्स्ये ॥ दैत्ये ॥ त्रि० अवाचि । वर्णानुच्चारके ॥ दीने ॥ मूमितिकायति । कै० । आतोनुपेतिकः ॥
मूढः । त्रि० तन्द्रिते ॥ बाले । जडे ॥ मूर्खे । यथाजाते ॥ स्वाज्ञानकार्यविपर्ययमोहव्याप्ते ॥ इदमर्थसाधनमिदमनर्थसाधनमितिविवेकशून्ये । अविचारके । अविवेकिनि । अनात्मविदि ॥ तन्द्रादिग्रस्तचित्ते ।.तमसाच्छन्ने । मोहयुक्ते ॥ चित्तस्यद्वितीयायाम्भूमौ ॥ मुह्यतिस्म । मुह० । गत्यर्थेतिक्तः ॥ आकाशादिषुस्थलेषुकेचित्तमः प्रधानतयामूढाः मोहप्रकाशकाः विषमाः गुरवः केचिद्विशेषास्ते मूढाः कथ्यन्ते ॥
मूढग्राहः । पुं० अविवेकातिशय

मूढम् | मूत्रकृच्छ्रम्

क्रतिदुराग्रहे ॥ यासोग्रहणम् । मूढानांग्राह : ॥
मूढता । स्त्री० अकार्यपरिज्ञानत्वे ॥ अविवेकतायाम् ॥ यथा । यानं चितीयानगलश्चदेहोदेहेपिचान्य : पुरुषोनिविष्ट : । ममत्वमुर्व्यां नतथा यथाऽस्मिन्देहेऽतिमात्रं वतमूढतैषेति ॥
मूढहक् । त्रि० देहमानिनि । देहमात्मत्वेनाभिमन्यमाने ॥
मूढयोनि : । पुं० पश्वादौ ॥
मूढा । स्त्री० तामस्यांमनसोहत्तौ ॥
मूत : । त्रि० बद्धे ॥ मूयतेस्म । मूङ् बन्धने । क्त : ॥ आलानपाशे ॥
मूत्रम् । न० प्रस्रावे । मूत०पिसाव० इ०भा० ॥ मूत्र्यते । मूत्रप्रस्रवणे । घञ् ॥ मूत्रमित्याहुरद्रूकांवस्तोर्या जिलनिर्गतम् ॥ यद्वा । मुच्यते यत् । मुचलृ० । सिविमुच्योष्टेरू चेतिष्ट्रन् ॥ अथास्यगुणा : । गोमूत्रं कटुतीक्ष्णोष्णं क्षारं तिक्तं कषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत्कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक्कुष्ठनाशनम् ॥ कासश्वासापहं शोथकामलापाण्डुरोगहृत् । कण्डूकिलासगदशूलमुखाक्षिरोगान्गुल्मातिसारमरुदामयमूत्ररोधान् । कासं सकुष्ठजठरक्रिमि पाण्डुरोगान् गोमूत्रमेकमपिपीत मपाकरोति ॥ सर्वेष्वपिचमूत्रेषु गोमूत्रं गुणतोधिकम् । अतोविशेषात्कथनेमूत्रं गोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् । शूलगुल्मरुजानाहकामलापाण्डुरोगनुत् ॥ कषायं तिक्ततीक्ष्णञ्चपूरणात्कर्णशूलहृत् ॥ नरमूत्रं गरं हन्तिसेवितं तद्रसायनम् । रक्तापामाहरं तीक्ष्णं सक्षारलवणं स्मृतम् ॥ गोजाविमहिषीणान्तुस्त्रीणां मूत्रं प्रशस्यते । खरोष्ट्रेभनराश्वानां पुंसांमूत्रं हितं मतम् ॥ अथमूत्रपरीक्षा । वातेनपाण्डुरं मूत्रं रक्तं नीलञ्चपित्तत : । रक्तमेवभवेद्रक्ताद् धवलं कफेनिलंकफादिति ॥
मूत्रकृच्छ्रम् । न० प्रस्रावघटितरोगविशेषे । मूत्ररोधे । अश्मर्याम् । कृच्छ्रे ॥ मूत्रेकृच्छ्रमत्र ॥ अथास्यचिकित्सा । त्रिकण्टकारग्वधदर्भकाशयवासधात्रीगिरिभेदपथ्या : । निघ्नन्तिपीतामधुनाश्मरीञ्चसमीपस्थमृत्योरपिमूत्रकृच्छ्रम् ॥ त्रिकण्टकादिक्वाथ : ॥ १ ॥ एलाश्मभेदकशिलाजतुगोक्षुराणांमेर्वारुबीजलवणोत्तमकुङ्कुमानाम् । चूर्णानितण्डुलजलेलुलितानिपीत्वाप्रत्यग्रमृत्युरपिजीवतिमूत्रकृच्छ्री ॥ एलादिचूर्णम् ॥ २ ॥ अयोरज :

सूक्ष्मपिष्टंमधुनासहयोजितम्। मूत्रकृच्छ्रंनिहन्त्याशुसंलीढंदिवसत्रयम् ॥ ३ ॥ गुडेनमिश्रितंक्षीरंकटूष्णंकामतःपिबेत्। मूत्रकृच्छ्रेषुसर्व्वेषुशर्करायाश्चनिश्चयः ॥ ४ ॥ धात्रीरसंचेक्षुरसंपिबेद्वाकृच्छ्रेसरक्तेमधुनाविमिश्रम्। शल्याभिघातोत्थितमूत्रकृच्छ्रेकार्याक्रियामारुतकृच्छ्रतुल्या ॥ ५ ॥ क्वाथोगोक्षुरवीजस्ययवक्षारसमन्वितः। पीतःप्रशमयत्येवकृच्छ्रंविड्धारणोत्थितम् ॥ ६ ॥ त्रिफलायाःसुपिष्टायाःकल्कंकोलसमन्वितम्। वारिणालवणीकृत्यपिबेन्मूत्ररुजापहम् ॥ कोलंबदरम् ॥ ७ ॥ गुडमामलकंवृष्यंश्रमघ्नंतर्पणंप्रियम्। पित्तासृग्दाहशूलघ्नंमूत्रकृच्छ्रहरंपरम् ॥ ८ ॥ सपादश्राणतुलितोयवक्षारःसितायुतः। भक्षितोनाशयत्येवमूत्रकृच्छ्रंनसंशयः ॥ ९ ॥ द्राक्षासितोपलाकल्कःपीतःकर्षमितोनरैः ॥ मस्तुनापलमात्रेणमूत्रकृच्छ्रंव्यपोहति ॥ १० ॥ समूलगोक्षुरक्वाथःसितामाक्षिकसंयुतः। नाशयेन्मूत्रकृच्छ्राणितथैवोष्णसमीरणम् ॥ उष्णसमीरणंउष्णवातंमूत्राघातविशेषम् ॥ इतिभावप्रकाशः ॥

मूत्रदोषः। पुं० प्रमेहे ॥

मूत्रनिरोधः। पुं० मूत्रप्रतिबन्धकरोगविशेषे ॥ यथा। पिष्ट्वैवमालतीमूलंग्रीष्मकालेसमाहृतम्। साधितंछागदुग्धेनपीतंशर्करयान्वितम्। हरेन्मूत्रनिरोधञ्चहरेद्वैपाण्डुशर्करां ॥

मूत्रपतनः। पुं० गन्धमार्जारे ॥

मूत्रपुटम्। न० नाभेरधोभागे। मूत्राशये ॥

मूत्रफला। स्त्री० कर्वट्याम् ॥ त्रपुष्याम् ॥

मूत्रलम्। न० त्रपुषे ॥ त्रि० मूत्रवर्द्धके ॥

मूत्रला। स्त्री० कर्कट्याम् ॥ वालुक्याम् ॥

मूत्राघातः। पुं० प्रस्रावरोधकरोगविशेषे ॥ प्रायोमूत्रविघाताद्यैर्वातकुण्डलिकादयः। जायन्तेकुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥ मूत्रविघाताद्यैरित्याद्यशब्दात्पुरीषशुक्रादिवेगविघातादीनांरूक्षाशनादीनाञ्चग्रहणम्। मूत्रविघाताद्यैःकुपितैर्दोषैरित्यन्वयः। ननुमूत्रकृच्छ्रमूत्रघातयोःकोभेदः। उच्यते। मूत्रकृच्छ्रेकृच्छ्रमधिकंविबन्धोऽल्पः। मूत्राघातेतुविबन्धोबलवान्कृच्छ्रमल्पमित्यनयोर्भेदः ॥ अस्यचिकित्सायथा। नलकुशकाशेक्षुवलाक्वाथंप्रातःसुशीतलंससितम्। पिबतोनश्यतिनियतंमूत्रग्रहइत्युवाचकविः ॥ कविःशुक्रः। कर्पूरर-

जसायुक्तावबद्धवर्त्तिः शनैः शनैः । मेढ्रमार्गान्तरेन्यस्तामूत्राघातंव्यपोहति ॥ धान्यगोक्षुरकः क्वाथः कल्कसिद्धं हितंघृतम् । मूत्राघाते मूत्रकृच्छ्रे शुक्रदोषेचदारुणे ॥ धान्यगोक्षुरकं घृतम् ॥ मूत्रकृच्छ्रे स्मरोरोगेभेषजंयत्प्रकीर्त्तितम् । मूत्राघातेषु सर्व्वेषुतत्कुर्य्याद्दोषकालवित् ॥

मूत्रातिसारः । पुं० प्रस्रावातिसरणरोगे ॥ तस्यौषधंयथा । बलामूलत्वचश्चूर्णंपीतंसक्षीरशर्करम् । मूत्रातिसारंहरतिदृष्टमेतन्नसंशयइति ॥

मूत्रातीतः । पुं० मूत्ररोगविशेषे ॥ यथाहुः । चिरंधारयतोमूत्रंत्वरयानप्रवर्त्तते । मेहमानस्यमन्दंवामूत्रातीतःसउच्यते ॥ इति ॥

मूत्राशयः । पुं० वस्तौ । मूत्रपुटे ॥

मूत्राशयपुटः । पुं० वस्त्याम् । मूत्रपुटे ॥

मूत्रितः । त्रि० कृतमूत्रोत्सर्गे । मीढे ॥ मूत्र्यतेस्म । मूत्र० । क्तः ॥

मूर्खः । पुं० पुरीषमे । माषे ॥ गायचीरहिते । सार्थगायचीरहिते ॥ त्रि० अज्ञे । वैधेये । बालिशे ॥ शास्त्रज्ञानशून्ये ॥ शून्यवादिनि ॥ देहात्मवादिनि अधीत्यवेदशास्त्राणिसंसारेरागिणश्चये । तेभ्यः परोनमूर्खोस्तिसधर्मःश्वानशूकरैः ॥ समइतिशेषः । मानुष्यंदुर्लभंप्राप्यवेदशास्त्राण्यधीत्यच । बध्यतेयदिसंसारेकोविमुच्येतमानवः ॥ मुह्यति । मुह० । मुहःखोमूर्च ॥ मूर्खोविषप्रवासीसतिनिजविभवेसख्ययोनास्तिगेहेनानाधान्यौषधीनांसतिपितरिगृहेनार्जितायेनविद्या । भार्यांत्यक्त्वासुरूपांरतिमिहकुरुतेभर्त्तमत्यांचदास्यांवाण्यांवैराभिलाषीकुमतिजनरुचिर्व्वक्तिराजन्नसोयम् ॥ वाण्याम्० गीर्व्वाणभाषायाम् उत्कृष्टपुरुषार्थलाभेसम्भवत्यधमंकामयमानोमूर्खः ॥ मूर्खसहस्रंयोगोविषादपिसुदुर्जरः । विद्वज्जनसहस्रंयोगःसुधारससमःस्मृतः ॥ अत्रमूर्खनिन्दादेवीभागवतेद्रष्टव्या ।

मूर्खता । स्त्री० मूर्खत्वे ॥ मूर्खस्यभावः । तस्यभावस्त्वतलाविति तल् ॥

मूर्खत्वम् । न० मूर्खतायाम् । अज्ञत्वे । मूरखपन० इ० भा० ॥ मूर्खत्वंसुलभंभजस्वकुमतेमूर्खस्यचाष्टौगुणानिश्चिन्तोबहुभोजकोतिमुखरोरात्रिंदिवास्वप्नभाक् । कार्य्याकार्य्यविचारणादिरहितोमानापमानेसमोदत्त्वासर्व्वजनस्यमूर्ध्निचरणौमूर्खश्चिरंजीवतु ॥

मूर्च्छनम्। न० मूर्च्छाग्राम्॥ मूर्च्छापित्ततमः प्राया।

मूर्च्छना स्त्री० गीताङ्गविशेषे। ग्रामस्य सप्तमभागे॥ चतुर्दशविधा याम्। षड्जादिस्वरसंपूर्णतायाम्। तदुक्तं शाण्डिल्येन। यत्रैव स्युः स्वराः पूर्णा मूर्च्छनाऽऽस्त्यु दाहृतेति॥ अन्यत्र मूर्च्छनालक्षणं यथा। क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छेत्युच्यते ग्रामस्थाएताः सप्तसप्त च। ग्रामत्रयेऽपि प्रत्येकं सप्तसप्ततु मूर्च्छना०इत्येकविंशतिमूर्च्छनाभवंति।

मूर्च्छा। स्त्री० कश्मले। मोहे॥ संज्ञावहासुनाडीषु पिहितास्वनिलादिभिः। तमोऽभ्युपैतिसहसासुखदुःखव्यपोहकृत्॥ सुखदुःखव्यपोहाच्चनरः पततिकाष्ठवत्। मोहोमूर्च्छेतितांप्राहुः षड्विधा साप्रकीर्त्तिता॥ मूर्च्छनम्। मूर्च्छामोहसमुच्छ्राययोः। गुरोः श्चहलइत्यः। उपधायाश्चेतिदीर्घः। टाप्॥ इन्द्रियैः सहमनस उपप्लवोमूर्च्छेतिव्याख्यातारः॥

मूर्च्छायः। पुं० मूर्च्छाधाम्॥

मूर्च्छालः। त्रि० मोहयुक्ते। मूर्च्छा। मूर्छास्यास्ति। सिध्मादिषु० क्षुद्रजन्तूपतापयोश्चेतिपठितात्त्वात्। प्राणिस्थादातइतिनभवति० प्राक्षुद्रङ्गादेवेतिव्याख्यानात्॥

मूर्च्छितः। त्रि० मूर्त्ते। मूर्च्छायुक्ते। मूर्छासि। विचेतने॥ सोच्छ्रये॥ मूढे॥ वृद्धे॥ मूर्च्छितस्य। मूर्च्छा०। गत्यर्थेतिक्तः॥ मूर्च्छासञ्जातास्यवा। तारकादित्वादितच्॥

मूर्त्तः। त्रि० मूर्च्छिते। मूर्च्छिते॥ कठिने॥ मूर्त्तिमति। सन्निवेशविशेषवद्द्रव्यं यस्य तन्मूर्त्तमुच्यते। चिक्यम्बुग्निवयं मूर्त्तममूर्त्तं त्वितरद्वयम्॥ मूर्च्छतिस्म। मूर्छा०। अकर्मकत्वात्क्तः। राल्लोपः। नध्याख्येतिनत्वंन॥ न्यायमते० पृथिवी० जलं० तेजः० वायुः मनश्च। एषांगुणाः रूपं० रसः० गन्धः स्पर्शः० परत्वम्० अपरत्वम्० गुरुत्वम्० स्नेहः० वेगश्च मूर्त्तामूर्त्तसाधारणगुणाः। सङ्ख्या० परिमितिः० पृथक्त्वम्० संयोगः० विभागश्च इतिभाषापरिच्छेदः०॥

मूर्त्तवित्। त्रि० आगमिके॥ त्रिशूलधारीमहेश्वरः शङ्खचक्रादिधारीविष्णुर्वापरमार्थोभवतीत्यागमिकाः कल्पयन्ति। तच्चतेषां कल्पनम्० भ्रान्तिमात्रम्। अस्मदादिशरीरवत्तस्यापिशरीरस्यपाञ्चभौ

तिकत्वात्लीलाविग्रहकल्पनञ्च० विग्रहाभावेलीलायोगादयुक्तमेव ॥
मूर्त्तिः । स्त्री० काठिन्ये ॥ प्रतिमायाम् । असर्वगतस्यद्रव्यस्यपरिमाणे ॥ शिवस्याष्टमूर्त्तयोयथा । सर्वंचिति : समुद्दिष्टाभवोजलमुदाहृता । रुद्रोग्निरुग्रोवायुः स्यात्भीमआकाशशब्दिता ॥ पशोः पतिर्यजमानोमहादेवः सुधाकरः । ईशानः सूर्यइत्येतामूर्त्तयोष्टौप्रकीर्त्तिताः ॥ मूर्त्तिर्हिधर्मस्यपत्नी । यथा । मूर्त्तिस्धर्मपत्नीसाकान्तिरूपामनोहरा । कान्तिरूपाशोभारूपा । परमात्माचविश्वौघोनिराधारोयथाविना ॥ शोभांविनापरात्मापिनिराधारोनिरर्थकइत्यर्थः ॥ सर्वंचशोभारूपाचलक्ष्मीर्मूर्त्तिमतीसती । श्रीरूपामूर्त्तिरूपाचमान्याधन्यातिपूजितेतिभागवते ९ स्कन्धे १ ध्यायः ॥ काये । देहे । जरायुजाण्डजोद्भिज्जादिभेदेनविलक्षणाविविधसंस्थानासुतनुषु ॥ मूर्च्छति० मूर्च्छतेिवा । मूर्च्छा० । क्तिन् । राल्लोपः ॥ रूपे ॥ स्वभावे ॥ लग्ने ॥
मूर्त्तिमान् । त्रि० कठिने । मूर्त्तिविशिष्टे ॥ मूर्त्तिः काठिन्यमस्यास्ति । तदस्यास्त्यस्मिन्निति मतुप् ॥ स्त्रियाम्० मूर्त्तिमती । उगित्वान्ङी

प् ॥ न० शरीरे ॥
मूर्त्त्युपचयः । पुं० स्थौल्ये ॥
मूर्द्धकः । पुं० क्षत्रिये ॥
मूर्द्धकर्परी । स्त्री० जलच्छायायाम् ॥
मूर्द्धखोलम् । न० छत्रे ॥
मूर्द्धजः । पुं० केशे ॥ त्रि० मूर्द्धिजाते ॥
मूर्द्धतैलम् । न० तैलविशेषे ॥ अभ्यङ्गः परिषेकश्चपिचुर्बस्तिरितिक्रमात् । मूर्द्धतैलंचतुर्धास्याद्बलवत्तद्यथोत्तरं ॥
मूर्द्धा । पुं० उत्तमाङ्गे । शिरसि । मस्तके ॥ छाचाः कारेः शिरोभिस्तुनृपानिस्त्रिंशिराधनी । चिपिटैस्तु पितुर्मृत्युर्गंभाव्याः परिमण्डलैः घटमूर्द्धापापरुचिर्धनाढ्यैः परिवर्जितः ॥ मुह्यत्यस्मिन्नाहते । मुह० । श्वन्नुक्षन्निति० मुहेः कनिन्० निपातनादुपधादीर्घोधोन्तादेशोरमागमश्च ॥
मूर्द्धन्यः । त्रि० मूर्द्धनिभवे ॥ शरीरावयवाच्चेतियत् । येचाभावकर्मणोरितिप्रकृतिभावान्नस्तद्धितइति० टिलोपाभावः ॥
मूर्द्धपुष्पः । पुं० शिरीषवृक्षे ॥
मूर्द्धरसः । पुं० भक्तफेने ॥
मूर्द्धवेष्टनम् । न० उष्णीषे ॥
मूर्द्धाभिषिक्तः । पुं० भूपाले । राजनि ॥ क्षत्रिये । राजन्ये । बाहुजे ॥

कासविकृतदन्तवत् ॥ लघुमूलकमु-
ष्णं स्वादुच्यं लघुचपाचनम् । दोष-
चयहरं स्वर्यं ज्वरश्वासविनाशनम् ॥
नासिकाकण्ठरोगघ्नं नयनामयना-
शनम् । महत्तदेवरूक्षोष्णं गुरुदोष-
चयप्रदम् ॥ स्नेहसिद्धं तदेवस्यादो-
षत्रयविनाशनम् । तत्पुष्पं श्लेष्मपि-
त्तघ्नं फलं वातकफप्रदमिति ॥ मूल-
ति । मूल० । क्वुन् । यद्वा मूलय-
ति । मूलरोहणे । चु० । ण्वुल् ।
संज्ञायांकन् ॥ यद्वा । मूलेजात :
। पूर्वाह्णापराह्णार्द्रामूलप्रदोषा-
वस्करादुन् ॥

मूलकदण्ड : । पुं० गांडर० गण्डक०
द्व० प्र० मूलकावयवे ॥ सपच :
खण्डितलवणदण्डोमूलकसूक्ष्मक :
। छृतेनभृष्टस्विन्नोवालवणेनवि-
मिश्रित : ॥ गुरुच्यं मूलकं शाकं
विष्टम्भिकफकारकम् । वातपित्त-
हरं श्लेष्मकृच्छ्रंसुगुणावहम् ॥

मूलकपत्रम् । न० मूलकस्यपर्णं ॥
पाचनं लघुरूच्योष्णं पत्रं मूलकजं न-
वम् । स्नेहसिद्धं त्रिदोषघ्नमसिद्धं
कफपित्तकृत् ॥

मूलकपर्णी । स्त्री० शोभाञ्जने ॥

मूलकमूला । स्त्री० चीरकञ्चुक्या-
म् । चोरीशब्दे ॥

मूलकर्म्म । न० कार्म्मणे । टौना०
इ० भा० प्र० कर्म्मविशेषे । मूलै-

रोषधीमूलै : कर्म० वासनोच्चाट-
नस्तम्भनवशीकरणादि० मूलकर्म्म
। उपपातकविशेषएतत् । यथा ।
सर्वाकरेष्वधीकारोमहायन्त्रप्रवर्त्त-
नम् । हिंसौषधीनांस्त्र्याजीवोऽ-
भिचारोमूलकर्म्म च ॥ इतिमनु: ।
मूलकर्म्म ०मन्त्रौषधादिनावशीकर-
णमितिकुल्लूकभट्ट : ॥

मूलकार : । पुं० मूलग्रन्थकर्त्तरि ॥
मूलंकरोति । कृञ : कर्म्मण्यण् ॥

मूलकारिका । स्त्री० चुल्ल्याम् ॥
मूलग्रन्थार्थप्रकाशकपद्ये ॥ मूल-
धनस्यवृद्धिविशेषे ॥

मूलकृच्छ्र : । पुं० न० एकादशविध-
पर्णकृच्छ्रव्रतान्तर्गतव्रतविशेषे ।
यदाक्वथितानिकेवलमूलानिमासंपी-
यन्ते ० तदामूलकृच्छ्रव्यपदेशंलभ-
न्ते । यथाहमार्कण्डेय : । फलैर्मा-
सेनकथित : फलकृच्छ्रोमनीषिभी:
। श्रीकृच्छ्र : श्रीफलै : प्रोक्त: पद्मा-
क्षैरपरस्तथा ॥ मासेनामलकैरेवं-
श्रीकृच्छ्रमपरंस्मृतम् । पत्रैर्मत :
पत्रकृच्छ्र : पुष्पैस्तत्कृच्छ्रउच्यते ॥
मूलकृच्छ्र : स्मृतोमूलैस्तोयकृच्छ्रो-
जलेनतु० इति ॥

मूलज : । पुं० उत्पलादौ ॥ न० आ-
र्द्रके ॥ त्रि० मूलोद्भवे ॥

मूलत्रिकोणभवनम् । न० सूर्यादिग्रहा-
णांराशिरूपगृहविशेषे ॥ यथा । सिंह

गोमेषवनिताधमुर्यूकघटास्तथा। मूलत्रिकोणभवनान्याहुः सूर्यादितः क्रमात्॥ एतेराशयः क्रमात् सूर्यादीनांमूलत्रिकोणभवनान्याहुः। यथा। सिंहः सूर्यस्यमूलत्रिकोणभवनम्। एवंवृषश्चन्द्रस्य॰मेषः कुजस्य॰कन्याबुधस्य॰धनुर्गुरोः तुलाशुक्रस्य॰कुम्भः शनेरिति॥

मूलत्रिकोणांशः। पुं॰ रव्यादीनांत्रिकोणभागे॥ य॰। खयुग्मभार्कादिक्पालदिक्पञ्चदशविंशतिः। मूलत्रिकोणभागाः स्युः सूर्यादीनांयथाक्रमात्। यथा। सिंहराशौसूर्यस्यविंशत्यंशाममूलत्रिकोणभागाःस्युः। एवंचन्द्रस्यवृषेत्रयमतुङ्गांशत्रयादूर्ध्वंसप्तविंशत्यंशाः कुजस्यमेषेद्वादशांशाः बुधस्यकन्यायांतुङ्गपञ्चदशांशादूर्ध्वंदशांशाःपञ्चविंशत्यंशपर्यन्तम्॰गुरोर्धनुषिदशांशाःशुक्रस्यतुलायांपञ्चदशांशाःशनेःकुम्भेविंशत्यंशाः मूलत्रिकोणभागाः स्युरिति॥

मूलदेवः। पुं॰ मूलभद्रे। कंसासुरे॥

मूलद्रव्यम्। न॰ मूलधने॥

मूलधनम्। न॰ वणिङ्मूलवित्ते। नीव्याम्। परिपणे। पूंजी॰इ॰भा॰॥ मूलधतवनस्य॥

मूलनगरम्। न॰ राजधान्याम्॥

मूलपर्णी। स्त्री॰ मण्डूकपर्ण्याम्॥

मूलपुष्करम्। न॰ पुष्करमूले॥

मूलपोती। स्त्री॰ शाकप्रभेदे। क्षुद्रपल्ल्याम्। क्षुद्रपोतिकायाम्॥

मूलप्रकृतिः। स्त्री॰ आद्यायांशक्तौ। प्रधाने॥ प्रकृतिःप्रधानम्। मूलञ्चासौप्रकृतिश्चेतिविग्रहः। विश्वस्यकार्य्यकलापस्यसामूलम्॰नत्वस्यामूलान्तरमस्तिअनवस्थाप्रसङ्गात्। अचानवस्थायामस्तिप्रमाणम्॥

मूलफलदः। पुं॰ पनसे। कण्टकिफले॥ मूले॰फलंददाति। डुदाञ्॰। कः॥

मूलबन्धः। पुं॰ राजयोगाङ्गविशेषे॥ यन्मूलंसर्वभूतानांयन्मूलंचित्तबन्धनम्। मूलबन्धःसदासेव्योयोग्योराजयोगिनाम्॥

मूलभद्रः। पुं॰ कंसासुरे॥

मूलरसः। पुं॰ मोरटलतायाम्॥

मूलविभुजः। पुं॰ रथे॥ मूलानि विभुजति। भुजोकौटिल्ये। मूलविभुजादित्वात्कः॥

मूलस्तम्भः। पुं॰ स्थितिहेतौ॥

मूला। स्त्री॰ शतावर्याम्॥ मूलभे॥

मूलाधारः। पुं॰ गुह्यलिङ्गयोर्मध्ये ऽङ्गुलिद्वयमितस्थाने। शरीरस्थसकलनाडीनांमूलस्थाने॥ मूलमाधारषट्कानाम्मूलाधारंततोविदुरितिदेवीगीतोक्तेः॥

मूलाविद्या । स्त्री० अनाद्यविवेके ॥ अयंजीवोनकूटस्थंविविनक्तिकदाचन । अनादिरविवेकोयंमूलाविद्येतिगम्यताम् ॥

मूलाह्वयम् । न० मूलके ॥

मूली । पुं० वृक्षे ॥

मूली । स्त्री० ज्येष्ठाम् ॥

मूलेर: । पुं० जटायाम् ॥ मूलति । मूल० । मूलेरादयश्चेति साधु: ॥

मूल्यम् । न० अवक्रये । वस्त्रे । मोल ० निरख० हि० भा० दर० दाम० इतिसाधारणजनभाषा ॥ भृत्यायाम् । वेतने । महीना० भाडा० हि० भा० ॥ मूलेनआनाम्यम्०मूलेनसमंवा । नौवयोधर्मेत्यादिनायत् चि० मूलतउत्पाटनयोग्येमुद्गादौ ॥ मूलमावर्हियस्य । मूलमस्यावर्हीतियत् ॥

मूष: । पुं० मूषिके ॥ तैजसावर्त्तन्यां ॥

मूषक: । पुं० मूषिके ॥ मूषति । मूषस्तेयेदीर्घोपधोप्यस्ति । भ्वादि: । ण्वुलसंज्ञायांकुनवा ॥

मूषककर्णी । स्त्री० आखुपर्ण्याम् ॥

मूषकमारी । स्त्री० सुतश्रेण्याम् ॥

मूषका । स्त्री० मूषिकायाम् ॥

मूषिकाराति: । पुं० ओतौ । विडाले ॥

मूषली । स्त्री० पल्ल्यां ॥

मूषा । स्त्री० स्वर्णाद्यावर्त्तनपात्रे । तैजसावर्त्तन्याम् ॥ देवताडे ॥ अन्त: शुषिरायांमृत्प्रतिमायाम् ॥ मूषति । मूष० । इगुपधेतिक: ॥ गवाक्षे ॥ यथा । एकद्वित्र्यादिमूषावहनमितिमहीव्रह्मिभूमिभूमिभृत्सुहर्म्येरम्येष्टमूषेचतुरविरचितेशल्यशालाविशाले । इत्यादिलीलावत्यांक्षेत्रव्यवहार: ॥

मूषाकर्णी । स्त्री० आखुपर्ण्याम् ॥

मूषातुत्थम् । न० कांस्यनीले । वितुन्नके । हेमतुत्थे ॥

मूषिक: । पुं० उन्दुरौ । आखौ ॥ अस्यमांसगुणा: । अहिनकुलशल्यगोधामूषिकमुख्याविलेशया: कथिता: । श्वासानिलकासहरंतन्मांसंपित्तदाहकरम् ॥ अन्येविलेशयायेस्यु: केङ्किडोन्दुरुकादय: । गर्हितंतस्यमांसञ्चमद्यगौरवदुर्जरम् ॥ अपिच । मूषकोमधुर: स्निग्धोव्यवायीवलवर्धन: ॥ पारिभाषिकोयथा । विभवेसतिमैवासिनदद्दातिजुहोतिच । तमाहुराखुंतस्यान्नंभुक्त्वाकृच्छ्रेणशुध्यति ॥ मुष्णाति । मुष० । मुषेर्दीर्घश्चेतिकिकन् ॥

मूषिकपर्णी । स्त्री० जलदन्तविशेषे । चित्रायाम् । उपचित्रायाम् । न्यग्रोध्याम् । मूषाकर्णीतिख्याता

याम् । इन्दुरकानीपामा०टू०गौ० दे०भा० ॥ मूषिकपर्णमस्याः मूषिककर्णाकारपर्णत्वात् । पाकर्णेतिङीष् ॥

मूषिका । स्त्री० मूषिकपर्णाम् ॥ मूषकस्त्रियाम् ॥ अजादित्वाट्टाप् ॥ मूषायाम् ॥

मूषिकाङ्कः । पुं० गणेशे ॥

मूषिकाञ्चनः । पुं० विघ्नहारिणि । गणेशे ॥

मूषिकारः । पुं० आखौ । उन्दुरौ ॥ मूषिकायाः पुमान् । आरक्पुंसीत्यारक् ।

मूषिकारातिः । पुं० विडाले ॥

मूषिकाह्वया । स्त्री० सुतश्रेण्याम् । मूषिकपर्णाम् ॥

मूषितः । त्रि० मुषिते । चोरिते । मूष्यतेस्म । मूषस्तेये । क्तः ॥

मूषिपर्णिका । स्त्री० मूषिकपर्णाम् ॥

मूषी । स्त्री स्वर्णाद्यावर्त्तनपात्रे । स्वर्णादिद्रवीकरणपात्रे । मूषायाम् ॥

मूषीकः । पुं० उन्दुरौ । मूषिके ॥

मूषीककर्णी । स्त्री० मूषिकपर्णाम् ॥

मूषीका । स्त्री० उन्दुरौ ॥

मृकण्डः । पुं० मृकण्डुमुनौ ॥ अयमदन्तोमृगय्वादयश्चेतिसूत्रे० उज्ज्वलदत्तग्रन्थे स्पष्टः ॥ मृकण्डस्यमुनेस्तीर्थंतदाख्यामतिनिर्मलमितिस्कान्दोक्तेश्च ॥

मृकण्डुः । पुं० मृकण्डमुनौ

मृगः । पुं० आरण्यपशुमात्रे । करिविशेषे ॥ मृगशिरोनक्षत्र ॥ यथा मृगेगत्वाशिवेस्थित्वाऽदितौगच्छन्जयेद्दरिपूनिति ॥ एकदेशप्रयोगात् ॥ अन्वेषणे ॥ याञ्चायाम् ॥ मार्गशीर्षमासे ॥ यज्ञविशेषे ॥ मृगनाभौ ॥ मकरराशौ ॥ मृगयायाम् ॥ स्वनामप्रसिद्धपशुविशेषे । कुरङ्गे । वातायौ । हरिणे । अजिनयोनौ ॥ अस्यमांसप्रकारगुणाः । मार्गमांसंबहुशकलितंस्विन्नमीषच्चतोयेलग्नस्नेहैर्लवणसहितैपाचितंशब्दमुच्चैः । सान्द्रंसार्द्रंलवणसहितंदाडिमेनातियुक्तंखादन्खादन्कलयतिशिरश्चन्द्रचूडोपिनूनम् ॥ ऐणंमांसंहिमंग्राहिरुच्यंदोषत्रयापहम् । षड्रसंबलदंपथ्यंवृष्यंलघुज्वरापहम् ॥ मृग्यते । मृगअन्वेषणे । अदन्तः । घञ् । मृगोनवविधोयथा । सम्बरोरोहितोन्यङ्कुः कुरङ्गः सुदृशोरुरुः । एणश्चहरिणश्चेतिमृगाः नवविधामताः ॥ पाठान्तरंयथा । समूरुरोहितोन्यङ्कुः सम्बरोबभ्रुणोरुरुः । अशेणहरिणाश्चेतिमृगाःनवविधामताः ॥ हरिणश्चापिविज्ञेयः पञ्चभेदोत्रभैरव । ऋष्यः खड्गोरुरुश्चैवपृषतश्चमृगस्तथा ॥ एतेवलिप्रदानेचचर्म

दानेचकीर्त्तिता:॥ इतिकालिका पुराणे ६७ अध्याय : अथमृगपरीचा । मृगनाभिंसमादातुंकौतुकार्थंतथापुन : । मृगा : पोष्यामहीन्द्राणांतेषांलच्यामिलचणम् ।। पृथिव्यब्वायुगगनतेजोधिकास्तुपञ्चधा भिद्यन्ते नैकभेदास्तु ममस्तामृगजातय : ।। तद्यथा । येगन्धिन: चीणशरीरकर्णास्ते पार्थिवागन्धमृगा प्रदिष्टा : । सर्वाङ्गमेषांसुरभिप्रकामंपुण्येप्रदेशेप्रभवन्तितेतु ॥ येवैविशालागुरुदीर्घशृङ्गाश्चमांसलाश्लौक्ष्णखुराःदेशा : । आप्यास्तुतेवैप्रसरन्तिभूरिसर्वंचदेशेप्रभवन्तिचैव ॥ धावन्तियेवातमिवान्तरीचेदीर्घास्तुतेवातमृगा : प्रदिष्टा : । तेयत्रयत्र वभवन्तिशक्तास्तत्रैवमर्वाणिशुभानिसन्ति ॥ लघुप्रमाणालघुवीर्यसत्वानिर्गन्धदेहाश्छगलप्रमाणा : । तेगागनावेगकरानराणांस्पृश्यानतेनापिनिरीचणीया : ॥ येकृष्णवर्णा गुरुदीर्घशृङ्गा : क्रुद्धाभृशंयान्तिचवायुवेगा : । तेकृष्णसारा : खलु तैजसास्तुपुण्यप्रदेशेप्रभवन्तितेतु ॥ भोजोप्याह । पार्थिवादिमृग: सर्वश्चतुर्जातिर्भवेत्पृथक् । सुशृङ्गास्तनुलोमानोब्राह्मणामृगजातय : । क्रुद्धा : पञ्चरिशृङ्गाश्चचत्रिया : खरलोमशा: । चावक्तशृङ्गास्तनवो



हरिणावैश्यजातय: । कुशृङ्गाश्चाप्यशृंगाश्चाशूद्रा: खरतनूरुहा: । अश्वानांयेगुणादोषा स्ते ज्ञेयाहरिणेष्वपि ।। तथापिदोषा : पश्चामीवच्यन्ते हरिणाश्रया : । नेत्रयोरन्तरेयस्यलोमावर्त्ता : सपापकृत् ॥ विषमौविकृतौशृङ्गौयस्यसत्त्वेमनाशन : । आवर्त्त : पृष्ठतोयस्यआनाभिमभिविन्दति ॥ पश्चार्द्धेयस्यवावर्त्तस्तौस्थाज्यौभयकारकौ । वर्णेनेत्रपदादीनांवैकृताङ्गनाशन : ॥ गार्ग्य : । दोषवन्मृगजातीनांविजातोनामथापिवा । दर्शनात्स्पर्शनाच्चैवगन्धादानाच्चपोषणात् ॥ भवेयुर्विपद : सर्वास्तथाचैवाद्यपोषणात् ॥ शङ्खोपि । हरिणपोषणतो धरिणीभुजांनहिभवेन्मरुदुद्भवपीडनम् । नपविवह्निरुजारिपुजंभयंतदवतंहरिणंगुणिनंनृप: ॥ इतिमृगपरीक्षा युक्तिकल्पतरौ ॥ चतुर्विधपुरुषेषुपुरुषविशेषे ॥ तल्लचणं यथा । वदतिमधुरवाणीदीर्घनेत्रोऽतिभीरुश्चपलमतिसुदेह : शीघ्रवेगोमृगोयम् ॥ शशकेपद्मिनीतुष्टामृगेतुष्टाचचित्रिणी । वृषभे शङ्खिनी तुष्टाहयेतुष्टाचहस्तिनी ।। पद्मिनीशशयोर्योनिमेढ्रकौचतुरङ्गलौ । चित्रिणीमृगयोर्योनिमेढ्रकौचतथाविधौ ॥ इ० रतिमञ्जरी ॥

मृगगामिनी । स्त्री० विडङ्गे ॥ मृगस्येवगमनशीलायाम् ॥

मृगघर्म्मजम् । न० जवादिनामकगन्धद्रव्ये ॥ चि० मृगघर्मजाते ॥

मृगचेटकः । पुं० खट्टासे ॥

मृगचेष्टितम् । न० मृगेङ्गिते ॥ तद्यथा । सीमागतावन्यमृगारुवन्तः स्थितावजन्तोयसमापतन्तः । सम्प्रत्यतीतेभयानिदीप्ताः कुर्वन्ति शून्यंपरितोभ्रमन्तः ॥ दीप्ताः भयंकुर्वन्तिआवेदयन्तीतिसर्वंचान्वयेबोध्यः ॥ तेग्राम्यसत्त्वैरनुवाच्यमानाभयायरोधायभवन्तिवन्याः । द्वाभ्यामपिप्रत्यनुवाशितास्तेवन्दिग्रहायैवमृगारुवन्ति ॥ वन्येसत्त्वेद्वारसंस्थेपुरस्यरोधोवाच्यःसंप्रविष्टेविनाशः । सूतेमृत्युः स्याद्भयंसंस्थितेचगेहंयातेबन्धनंसंप्रदिष्टम् ॥

मृगजहुः पुं० मृगापत्ये ॥

मृगजालिका । स्त्री० वागुरायाम् ॥

मृगजीवनः । पुं० व्याधे ॥ मृगाः जीवनमस्य ॥

मृगणा । स्त्री० अपहृतद्रव्यान्वेषणे ॥ मृग० । ण्यासंस्तियुच् ॥

मृगतृट् । स्त्री० मृगतृष्णायाम् ॥

मृगतृषा । स्त्री० मरीचिकायाम् ॥ मृगाणांतृषायस्यस्याम् । अर्शआद्यच् । टाप् ॥

मृगतृष्णा । स्त्री० मरीचिकायाम् ॥ ग्रीष्मेमरुदेशेसिकतासुसूर्यरश्मयः प्रतिफलितादूरस्थानांजलमितिबुद्धिविषयास्तासुमृगतृष्णायस्यस्याम् । अर्शआद्यच् । टाप् ॥

मृगतृष्णिका । स्त्री० मृगतृष्णायाम् ॥ मृगतृष्णैव । स्वार्थेकन् ॥ रे चित्तचिन्तयचरंचरणौमुरारेः पारंगमिष्यसियतोभवसागरस्य । पुत्राः कलत्रमितरेसुहृदःसहायाः सर्वंविलोकयसखेमृगतृष्णिकाभम् ॥

मृगदंशकः । पुं० कुक्कुरे ॥ मृगान्दशति । दंशदशने । कर्म्मण्यण् । कः ॥

मृगधूर्त्तकः । पुं० गोमायौ । शृगाले ॥ मृगेषुधूर्त्तइव । संज्ञायांकन् ॥

मृगनाभिः । पुं० कस्तूर्याम् ॥ मृगस्य नाभिः ॥

मृगनाभिजा । स्त्री० कस्तूर्याम् ॥

मृगनेत्रा । स्त्री० रात्रिविशेषे ॥ त्वयापुत्रकनाधीतंमृगनेत्रासुरात्रिषु-तेनत्वंविदुषांमध्येपङ्केगौरिवसीदसि । मृगेनक्षत्रविशेषेणनेतायस्याः । नेतुर्नक्षत्रेऽब्वक्तव्यः ॥ योषित्प्रभेदे । मृगलोचनायाम् ॥ मृगस्यनेत्रेइवनेत्रेचञ्चलेयस्याः ॥

मृगपतिः । पुं० मृगेन्द्रे । सिंहे ॥

मृगपिप्लुः । पुं० पक्षजे । चन्द्रे । हि

मांशी ॥
मृगप्रियम् । न० पर्वततृणे ॥
मृगवधाजीव : । पुं० व्याधे ॥ मृगवध आजीवो यस्य स : ॥ मृगवधेनाजीवति वा । जीव० । इगुपधेति कः ॥
मृगबन्धनी । स्त्री० मृगबन्धनार्थं जालविशेषे । खावल्‌० इ० पर्वत भा० ॥ वागुरायाम् ॥ मृगो बध्यतेऽनया । बन्धबन्धने । करणेल्युट् । ङीप् ।
मृगभक्ष्या । स्त्री० जटामांस्याम् ॥
मृगमद : पुं० कस्तूर्याम् ॥ मृगस्य मद : ॥
मृगमदवासा । स्त्री० कस्तूरीमल्लिकायाम् ॥
मृगमातृक : । पुं० मृगविशेषे ॥ स्वल्प : पृथूदरोच्चै य : शरभो मृगमातृक : । गुणै: शशेन सदृशो गदितो मृगयमातृक : ॥
मृगया स्त्री० आखेटने । मृगव्ये । आखेटे । खेटे । हेडा० इ० भा० ॥ अवलम्ब्य कुलाशिनो झषान् निजनीडद्रुमपीडिन : खगान् । अनवद्यतृणार्दिनो मृगान् मृगयाघायनभूभृतां मता ॥ इति श्रीहर्ष : ॥ मृग्यन्ते मृगा अस्याम् । मृग० । घु० अदन्त : । परिचर्य्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानमिति साधु : ॥
मृगयु : । पु व्याधे । लुब्धके । हिंडिया० इ० भा० प्र० । मांसविक्रयार्थं मृगादिपशुहन्तरि ॥ मृगान् वधार्थं याति । या० । मृगय्वादित्वात् कु : ॥ गोमाये । शृगाले ॥ परमेष्ठिनि ॥
मृगरसा । स्त्री० सहदेव्याम् ॥
मृगराट् । पुं० सिंहे । मृगेषु राजते । राज्‌० । क्विप् ॥
मृगराज : पुं० सिंहे ॥ मृगाणां राजा । राजाह : सखिभ्यष्टच् ॥
मृगराटिका । स्त्री० जीवन्त्याम् ॥
मृगरिपु : । पुं० सिंहे ॥ मृगाणां रिपु: ॥
मृगरोमजम । न० राङ्कवे । मृगरोमजे वस्त्रे ॥
मृगलाञ्छन : । पुं० चन्द्रे । शशिनि ॥ मृगो लाञ्छनं यस्य ॥
मृगवल्लभ : । पुं० कुन्दुरुतृणे ॥
मृगवाहन : । पुं० वायौ ॥ मृगो वाहनं यस्य ॥
मृगव्ययम । न० मृगयायाम् ॥ मृगा व्ययन्तेऽत्र । व्ययगतौ । बाहुलकादपीतिड : ॥
मृगशिरा : । स्त्री० पंचमनक्षत्रे ॥ मृग : शिरोऽस्य ॥
मृगशिर : । न० मृगशीर्षे । पंचमे नक्षत्रे ॥ अत्र जातस्य फलम् । शरासनाभ्यासरतो विनीत: सदानुरक्तो गुणिनां गुणेषु । भक्तानुपक्त इभरे

णपूर्णः सन्मार्गवर्त्तीमृगजन्मभागी ॥
आक्रान्त्यामृगः शिरोऽस्य ॥
मृगशिरा । स्त्री० आग्रहायण्याम् ॥
मृगशिरसि ॥
मृगशीर्षम् । न० मृगशिरसिनक्षत्रे
॥ आक्रान्त्यामृगः शीर्षंयस्य ॥
मृगशीर्षा । स्त्री० मृगशिरोनक्षत्रे ॥
मृगा । स्त्री० सहदेवीलतायाम् ॥
मृगाक्षी । स्त्री० इन्द्रवारुण्याम् ।
विशालायाम् ॥ मृगनेत्रायांराक्षौ
॥ मृगलोचनायांनार्याम् ॥ मृगस्य
अक्षिणीइवअक्षिणीयस्याः ॥
मृगाङ्कः। पुं० कलानिधौ हिमांशौ ॥
कर्पूरे। वायौ ॥ मृगचिह्ने ॥ मृ
गोऽङ्कोयस्यसः ॥ यथादर्पणंप्राप्य
परावृत्तानयनरश्मयोग्रीवास्थमेवमु
खंदर्पणगतमिवपश्यन्ति०एवंचन्द्र
मण्डलंप्राप्यपरावृत्तास्तेदूरत्त्वदोषा
त्०पृथिवीमव्यक्तरूपामिवचन्द्रमण्ड
लगतांपश्यन्ति०सएवचन्द्रेमृगचि
ह्नमित्युपचर्यते० इतिव्याख्याता
रः ॥ यक्ष्मरोगस्यौषधविशेषे ॥
यथा। स्याद्रसेनसमंहेममौक्तिकंद्वि
गुणंभवेत्। गन्धकस्तुसमस्तेनरस
पादस्तुटङ्कणः॥ सर्वंतद्गोलकंकृत्वा
काञ्जिकेनविशोधयेत्। भाण्डेल
वणपूर्णेथपचेद्यामचतुष्टयम् ॥ मृ
गाङ्कसंज्ञकोज्ञेयोरोगराजनिकृन्त
नः ॥ अपिच। रससभस्मनोहेम

पिष्टीकृत्यप्रयोजयेत्। गुञ्जाचतुष्ट
यञ्चाज्यमरिचैर्भक्षयेद्वरः ॥ इति
मधुमती ॥
मृगाजीवः। पुं० व्याधे ॥
मृगाण्डजा। स्त्री० कस्तूर्याम् ॥
मृगादनः। पुं० तरक्षौ। तेंदुवावाघ
०तरख इ० भा० प्र० ॥ मृगमत्ति
। अद०। ल्युः ॥
मृगादनी। स्त्री० इन्द्रवारुण्याम्।
गवादन्याम् ॥ मृगेर्वारौ ॥ सहदे
व्याम् ॥
मृगादिः। पुं० मार्गशीर्षे ॥
मृगादी। पुं० सिंहे ॥ मृगानत्तुंशी
लंयस्य। णिनिः ॥
मृगाधिपः। पुं० सिंहे ॥
मृगान्तकः। पुं० चित्रव्याघ्रे। चीता
० इ० भा० ॥ मृगाणामन्तकः ॥
मृगारातिः। पुं० मृगस्यशत्रौ ॥
कुक्कुरे ॥ मृगस्यअरातिः ॥
मृगारिः। पुं० कण्ठीरवे। सिंहे
॥ शार्दूले। व्याघ्रे ॥ मृगस्यअरिः
॥ कुक्कुरे ॥ रक्तशिग्रौ ॥
मृगावित्। पुं० व्याधे ॥
मृगास्यः। पुं० मकरराशौ ॥ मृगस्य
आस्यमिवआस्यंयस्यसः ॥
मृगितः। त्रि० अन्वेषिते। ढूंढा०
इ० भा० ॥ मृग्यतेस्म। मृग०
। क्तः। इट् ॥
मृगी। स्त्री० वनिताविशेषे ॥ मृग

जातिस्त्रियाम् । मृगीणांजङ्गलोत्था नांच्छागोक्षीरगुणंपय : ॥ कश्यपकन्यायाम् । पुलहभार्यायाम् । हरिणादिमृगाणांमातरि ॥ मध्यावृत्तिप्रभेदे । रोमृगी० इतिलक्षणलक्षिते ॥ यथा । सामृगीलोचना । राधिकाश्रीपते : ॥ हरिण्याम् ॥ सितोदरेपीतपृष्ठे वराटके ॥

मृगेक्षणा । स्त्री० मृगनेत्रायाम् ॥ मृगेर्वारौ ॥

मृगेन्द्र : । पुं० सिंहे ॥ नाभिषेकोनसंस्कार : सिंहस्यक्रियतेवने । विक्रमार्जितसत्त्वस्यस्वयमेवमृगेन्द्रता ॥ मृगाणामिन्द्र : ॥ वर्णवृत्तान्तरे ॥ पयोधरधारिमृगेन्द्रमवेहि ॥ यथा । वृथाविलपानि ॥ मध्यलघो: पञ्चमात्रापर्याये० ऽ । ऽ० ॥ यात्रायोगान्तरे ॥ लग्ने शुक्र : शशीबन्धौ कर्मस्थानेगुरुर्यदा । मृगेन्द्रयोगोविख्यातोयातु : सर्वार्थसाधक: ॥

मृगेन्द्रचटक : । पुं० श्येने ॥ चटकानांमृगेन्द्र : ॥ राजदन्तादि : ॥

मृगेन्द्रमुखम् । न० अतिजगती १३ छंदोभेदे ॥ भवतिमृगेन्द्रमुखंनजौजरौग : ॥ यथा । गुरुभुजवीर्यभरं हरिंमदांन्धायुधिसमुपेत्यनदानवाजिजीवु : । क्षुधितमृगेन्द्रमुखंमृगाउपेत्यक्वनुखलबिभ्रतिजीवनस्ययोगम् ॥

मृगेन्द्राशी । स्त्री० वासके ॥

मृगेर्वारु : । स्त्री० श्वेतेन्द्रवारुण्याम् । मृगाक्ष्याम् । श्वेतपुष्पायाम् । मरुजायाम् ॥

मृगेष्ट : । पुं० मुद्गरवृक्षे ॥

मृग्य : । त्रि० अन्वेष्ये । मृगितव्ये ॥

मृज : । पुं० वाद्यविशेषे । मर्दले । दारुजे । मादल० इ० गौ० दे० भा० प्र० ॥

मृजा । स्त्री० मार्जनायाम् । प्रोञ्छनादिनाङ्गनिर्मलीकरणे ॥ मार्जनम् । मृजूशुद्धौ । मृजूशौचालङ्करणयोश्चुरादिर्वा । भिदाद्यङ् ॥

मृज्य : । त्रि० मार्ज्जनीये ॥

मृड : । पुं० शिवे ॥ मृडति । मृडसुखने । मृड्णातिवा । मृडचचात्चोदे । इगुपधत्वात्क : ॥

मृडङ्कण : । पुं० बालके ॥ मृडति । मृड० । मृड : कीकच्कङ्कणाविति कङ्कण : प्रत्यय : ॥

मृडा । स्त्री० दुर्गायां ॥

मृडानी । स्त्री० चण्डिकायाम् । अम्बिकायाम् ॥ मृडस्यस्त्री । इन्द्रवरुणेतिङीषानुकौ ॥

मृडी । स्त्री० दुर्गायाम् ॥

मृडीक : । पुं० मृगे । हरिणे ॥ मृडति । मृड:कीकच्कङ्कणाविति कीकच् ॥

मृणालम् । न० नलदे । उशीरे ॥ पुं०

न० वर्से । पद्मनाले ॥ मृणालंशी तलंवृष्यंपित्तदाहास्रजिद्गुरु । दुर्जरंस्वादुपाकञ्चस्तन्यानलकफप्रदम् ॥ सङ्ग्राहिमधुरंरूक्षं शालूकमपितद्गुणम् । विसाङ्कुराश्चन्द्रकलानुकाराविभाविता: सैन्धवनिम्बुकाभ्याम् । विकीर्णखण्डीकृतशृङ्गवेराज लेपिवह्निं लघुदीपयन्ति ॥. मृण्यते । मृणहिंसायाम् । तमिविशिविडिमृणीतिकालन् ॥

मृणालिनी । स्त्री० पद्मिन्याम् ॥ मृणालानिसन्त्यत्र । पुष्करादिभ्यो देशइतीनि: ॥

मृणाली । स्त्री० विसे । जलादिमूले ॥ अपचयविवक्षायामगौरादित्त्वान्ङीष् ॥ स्वल्पमृणालजातौ ॥

मृत: । त्रि० परासौ । प्राप्तपञ्चत्त्वे । परेते । प्रेते । संस्थिते । प्रमीते । मरा० इ० भा० ॥ यथा । धर्म: प्रव्रजितस्तप: प्रवसितं सत्यञ्चदूरेगतंपृथ्वीमन्दफलाजना: कपटिनो लौल्येस्थिताब्राह्मणा: । मर्त्या: स्त्रीवशगा: स्त्रियश्चचपला: नीचाजनाउन्नताहाकष्टंखलुजीवितंकलियुगेधन्यानरायेमृता: ॥ इतिगारुडे ११५ अध्याय: ॥ न० मृत्यौ ॥ याचिते ॥ मृतन्तुयाचितंप्रोक्तमितिमनु: । याचनवृत्तिर्हिमरणमिवदु: खजनकत्त्वान्मृतमुच्यते ॥ म्रियते स्म । मृङ्प्राणत्यागे । गत्यर्थेतिक्त: तनिमृङ्भ्याकिच्चेति तन्वा ॥

मृतकम् । न० शवे ॥ मरणाशौचे ॥ यथा । यदिस्यान्मृतकेसूतिर्मृतके चमृतिस्तथा । शेषेणैवभवेच्छुद्धिरह्न: शेषे द्विरात्रकम् ॥

मृतकल्प: । त्रि० मृतप्राये ॥ ईषदूनोमृत: । ईषदसमाप्ताविति कल्पप्प्रत्यय: ॥

मृतकान्तक: । पुं० शृगाले ॥

मृतजीव: । पुं० तिलकवृक्षे ॥

मृतमत्त: । पुं० )

मृतमत्तक: । पुं० ) शृगाले ॥

मृतवत्सा । स्त्री० अजीवत्सन्तानायाम् । मृतापत्यायाम् ॥

मृतसञ्जीवनी । स्त्री० मृतजीवनार्थिकायांविद्यायाम् ॥ गौरक्षदुग्धायाम् ॥ मृत: सञ्जीव्यतेऽनया । जीव प्राणधारणे । ल्युट् । ङीप् ॥

मृतस्नात: । त्रि० अपस्नाते । मृतमुद्दिश्यकृतस्नानेजने ॥ मृतेस्नात: । सप्तमीतिसमास: ॥

मृतस्नानम् । न० अपस्नाने । मृतोद्देशेनस्नाने ॥

मृतस्वमोक्ता । पुं० राजर्षिविशेषे ॥

मृतामदम् । न० तुत्थे ॥

मृतालकम् । न० तुवरिकायाम् ॥ मृतमालयति । अलभूषणादौ ।

मंख्यया । संज्ञायांकन् ॥
मृतिः । स्त्री॰ मरणे ॥ मृङ्प्राण त्यागे । स्त्रियांक्तिन् ॥ मृतिः प्राणवियोगः स्यान्नतुनाशः सतो मतः । मृङ्प्राणत्यागइत्युक्तं स्वयंनष्टः कथंत्यजेत् ॥
मृत्करः । पुं॰ कुम्भकारे ॥
मृत्कांस्यम् । न॰ शरावे ॥
मृत्किरा । स्त्री॰ जलजन्तुविशेषे । घुर्घुर्याम् ॥
मृत्क्षारम् । न॰ मूलके ॥
मृत्खलिनी । स्त्री॰ सप्तलायाम् । चमकषायाम् ॥
मृत्तालम् । न॰ तुवरिकायाम् । सुराष्ट्रजमृत्तिकायाम् ॥ मृदितालः प्रतिष्ठाऽस्या: ॥
मृत्तालकम् । न॰ मृत्ताले ॥ स्वार्थे कन् ॥
मृत्तिका । स्त्री॰ मृदि ॥ माटी॰ इ॰ भा॰ ॥ मृदेव । स्वार्थे॰ मृदस्तिकन् । प्रत्ययस्यादित्त्वं वसिद्ध॰इकारोच्चारणं प्रक्रियालाघवार्थम् । टापोलुक्यपिश्रवणार्थञ्च । पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिकः पटः ॥
मृत्फली । स्त्री॰ कुष्टौषधे ॥
मृत्युः । पुं॰ मरणे । पञ्चतायाम् । निधने । शरीराद्यारम्भककर्मक्षय निमित्ते । सर्वमर्मच्छेदनरूपे॰ शरीरादिविच्छेदे ॥ सचसर्वेषांब्रह्मादीनांकालंप्राप्यावश्यमेवभवति । तथाहि । प्राप्तेकालेस्वयंब्रह्मापरार्द्धद्वयसम्मिते । निधनंयातितरसा जगत्कर्तास्वयंप्रभुः ॥ चतुर्युगसहस्रेषुब्रह्मणोदिवसेकिल । पतन्ति भवनात्पञ्चनवचेन्द्रास्तथापुनः तथैवद्विगुणेविष्णुर्मरणायोपकल्पते ॥ तथैवद्विगुणेकालेशङ्करः शान्तिमेतिच ॥ काचिन्तामरणे मूढानिश्चलेदैवनिर्मिते । महीमध्ये धराणाञ्चनाशः सूर्य्यशशाङ्कयोः ॥ जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यच । अध्रुवेस्मिन्शरीरेतुरक्षणीयंयशः स्थिरम् ॥ इतिश्रीदेवीभागवते ५ स्कन्धे ३१ ऽध्यायः ॥ आसन्नमृत्युर्लोकोयंध्रुवादीन्नहिपश्यति ॥ तथाहि । अरुन्धतींध्रुवञ्चैवविष्णोस्त्रीणिपदानिच । आसन्नमृत्युर्नोपश्येच्चतुर्थंमातृमण्डलम् ॥ अरुन्धतीभवेज्जिह्वाध्रुवोनासाग्रमुच्यते । विष्णोः पदानिभ्रूमध्येनेत्रयोर्मातृमण्डलमितिकाशीखण्डे १२ अध्यायः ॥ संसारे । अविद्याकामकर्मसमुदाये । स्वाभाविकेकर्मणि ॥ स्वाभाविकेज्ञाने ॥ संहारकारिणांमध्येविनाशहेतौ भगवतोविभूतौ । यमे । वैवस्वते ॥ मरणम् । मृङ् । भुजिमृङ्भ्यां

युक्तावुकाविति त्यक् ॥ योगविशेषे ॥ यथा । रवावनुराधा० सोमे उत्तराषाढा० कुजे शतभिषा० बुधे अश्विनी० गुरौ मृगशीर्षम्० भृगौ श्लेषा० शनौ हस्त नक्षत्रे मृत्युयोगो भवति ॥ लग्नादष्टमभवने ॥ यात्रायोगान्तरे ॥ अन्योन्यचेच गाविकर्भे वाकविभास्करौ । मृत्युयोगोयमाख्यातो यातुर्मृत्युप्रदायकः ॥

मृत्युजरे । स्त्री० द्वि० प्रज्वारस्यप्रियाप्रिययोः ॥ यथा । कालकन्ये मृत्युजरे प्रज्वारस्यप्रियाप्रिये । याभ्यां जगत्समुच्छिन्नं विधात्रा निर्मितं विधौ ॥ जरामृत्योरपि कालादुत्पन्नत्वात्कन्यासदृशत्वात्कन्यात्वम् । ते मृत्युजरे कालस्य कन्ये प्रज्वारस्य प्रकृष्टज्वरस्य प्रियाप्रियेपत्न्यौ भवतः । प्रियातो प्रियेऽतिशयितप्रियेद्वस्यर्थः ॥

मृत्युञ्जयः । पुं० कृत्तिवाससि । शिवे ॥ मृत्युकन्याजिताशश्वच्छिवे न गुरुणा मम । न मृत्युनाजितः शम्भुः कल्पे कल्पे श्रुतौ श्रुतम् ॥ मृत्युं जयति । जिजये । संज्ञायां भृतृवृजिधारिसहितपिदमः । इतिखच् । मुम् ॥ यात्रायोगान्तरे ॥ लाभे भौमोगुरुश्छिद्रे षष्ठस्थानेच भास्करः । मृत्युञ्जयसमा

ख्योयं सर्वशत्रुनिबर्हणः ॥

मृत्युनाशकः । पुं० पारदे ॥ त्रि० मरणहर्त्तरि ॥

मृत्युपाशः । पुं० अधर्माज्ञानरागद्वेषादौ ॥

मृत्युपुष्पः । पुं० इक्षौ ॥

मृत्युफलः । पुं० महाकालफले ॥

मृत्युफली । स्त्री० कदल्याम् ॥

मृत्युभङ्गुरकः । पुं० भवरुति । प्रेतपटहे । मरणसमयवाद्ये ॥

मृत्युमृत्यः । पुं० रोगे ॥

मृत्युमान् । त्रि० मृते ॥

मृत्युवञ्चनः । पुं० शम्भौ ॥ श्रीफले ॥ द्रोणकाके ॥

मृत्युवीजः । पुं० वंशे ॥

मृत्युसूतिः । स्त्री० कर्कट्याम् । सागमायाम् ॥ मृत्युर्वे सूतिः प्रसवो यस्याः ॥ यथाकर्कटकीगर्भमाधत्तेमृत्युमात्मनः ॥

मृत्सा । स्त्री० प्रशस्तमृदि ॥ प्रशस्ता मृत् । सस्नौ प्रशंसायामितिसः । टाप् ॥ तुवरिकायाम् । तूवर० इ० भा० ॥ मृत्सास्त्यस्याः चेत्वेन । अर्शआद्यच् । टाप् ॥

मृत्स्ना । स्त्री० प्रशस्तायां मृत्तिकायाम् । मृत्सायाम् ॥ प्रशस्ता मृत् । सस्नौ प्रशंसायामितिस्नः । टाप् ॥ तुवर्याम् । आढक्याम् । अरहर तूवर० इ० भा० ॥

मृत्‚ द् । स्त्री० मृत्तिकायाम् ॥ शौचे मृद्विशेषो यथा विष्णुपुराणे । वल्मीकमूषकोत्खातां मृदमन्तर्जलां तथा । शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम् ॥ अन्तः प्राण्यवपन्नाच्च हलोत्खातां च पार्थिव । परित्यजेन्मृदस्त्वेताः सकलाः शौचसाधने इति ॥ अन्तः प्राण्यवयन्मासकीटाम् ॥ मृदति० मृद्यते वा । मृदश्चोदेः सम्पदादित्वात् क्विप् । काच्याम् । तुवरिकायाम् ॥

मृदङ्कुरः । पुं० हारीतपक्षिणि ॥

मृदङ्गः । पुं० स्वनामप्रसिद्धे वाद्ये । मुरजे ॥ अथ मृदङ्गादिविवरणम् । मर्द्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः । रक्तचन्दनजो वाद्यो गभीरध्वनिरुच्चकैः ॥ सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते । त्रयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम् ॥ दक्षिणञ्च भवेत्तेन मेकेनाऽर्द्धाङ्गुलेन वा । करणानन्ववदनो मध्ये चैव पृथुर्भवेत् । षण्मासीयो भवेद्वत्सस्तच्चर्मकरणं मतम् । मृत्तिकानिर्म्मितश्चैव मृदङ्गः परिकीर्त्तितः ॥ पातयेत् खर्ल्लं वाद्यवादनार्थं च मर्द्दले । विभूतिर्गैरिकं भक्तं किन्दुकीनचसंयुतम् ॥ यद्वा चिपीटकं देयं कौविनीसत्त्वमिश्रितम् । सर्वमेकत्र पिष्टं तल्लेपः खरलिरुच्यते ॥ वामास्ये पूरिकां कृत्वा लेपं दद्याच्च दक्षिणे । एवं मर्द्दलकः प्रोक्तः सर्ववाद्योत्तमो मतः ॥ अस्य संयोगमासाद्य सर्ववाद्यं च शोभते । एतद्धि वीजकाष्ठे दलमर्द्धाङ्गुलं विदुः ॥ इति । विशेषः सङ्गीतशास्त्रे द्रष्टव्यः ॥ पटहे ॥ घोषे ॥ वंशे ॥ मृद्यते । मृद० । विडादिभ्यः किदित्यङ्गच् ॥ मृत् अङ्गमस्येति वा ॥

मृदङ्गकः । पुं० मृदङ्गे ॥

मृदङ्गफलः । पुं० पनसवृक्षे ॥ मृदङ्गवत्फलान्यस्य ॥

मृदङ्गफलिनी । स्त्री० कोषातक्याम् ॥

मृदङ्गी । स्त्री० कोषातक्याम् । श्वेतघोषा इति गौ० दे० भा० ॥

मृदरः । पुं० विषे ॥ त्रि० विलससति ॥ म्रियतेऽनेन० मृणाति वा । मृङ् मद० वा । कुदरादयश्चेति० अरप्रत्ययान्तो निपातितः ॥ भये ॥

मृदा । स्त्री० मृत्तिकायाम् ॥

मृदाकरः । पुं० वज्रे ॥

मृदितः । त्रि० अभिनष्टे । विनाशिते ॥ निष्पीडिते ॥ चूर्णीकृते ॥ मृद्यते स्म । मृद० । क्तः । इट् । क्ङिति चेति न गुणः ॥ चौरे ॥

मृदिनी । स्त्री० मृत्सायाम् ॥

मृदुः । त्रि॰ कोमले ॥ अतीक्ष्णे ॥ मृदुः सर्वंत्रबाध्यते ॥ मृद्यते । मृद मर्द्दने । प्रथिम्रदिभ्रस्जामितिकुः सम्प्रसारणं च ॥ मृदुशब्दोमृदुत्व-गुणमुक्त्वातद्द्रव्यमविधत्ते इतिगुणवचनोमृदुशब्दः । तेनस्त्रियांङीष-भावे॰मृदुः ॥ न॰ विशेषनत्रत्रा-दौ ॥ यथा । चित्रेन्दुमित्रपौष्णा-श्वमृदुमैत्रं तयाभृगुः । तत्रगीता-म्बरक्रीडामित्रकार्यंचशोभनम् ॥ स्त्री॰गृहकन्यायाम् ॥

मृदुकृष्णायसम् । न॰ सीसके ॥

मृदुगमना । स्त्री॰ हंस्याम् ॥ त्रि॰मन्दगमने ॥

मृदुचर्म्मा । पुं॰ भूर्ज्जवृक्षे । त्रि॰कोमलत्वग्विशिष्टे ॥

मृदुच्छदः। पुं॰ भूर्जे ।कुक्कुरद्रुमे ॥ शीताले ॥ अक्षोटे ॥

मृदुता । स्त्री॰ मृदुत्वे ॥

मृदुताल : पुं॰ शीतालवृक्षे ॥

मृदुत्वक् । पुं॰ भूर्जपत्रवृक्षे ॥ मृद्वीत्वगस्य ॥

मृदुत्वचः । पुं॰ नृदुत्वचि ॥ मृद्वी-त्वचायस्यसः ॥

मृदुन्नकम् । न॰ सुवर्णे ॥ इतिशब्दचन्द्रिका ॥

मृदुपत्रः । पुं॰ नले॥न॰कोमपत्रर्णे ॥ त्रि॰कोमलपर्णवति॥ मृदूनिपत्राणियस्यसः ॥

मृदुपत्री । स्त्री॰ घिल्लीशाके ॥

मृदुपर्वकः । पुं॰ वेत्रे ॥ त्रि॰ कोमलपर्ववति ॥

मृदुपुष्पः । पुं॰ शिरीषवृक्षे ॥ त्रि॰ कोमलकुसुमविशिष्टे ॥ मृदूनिपुष्पाणियस्यसः ॥

मृदुफलः । पुं॰ मधुनारिकेले ॥ विकङ्कते ॥ त्रि॰ कोमलफलवति ॥ मृदूनिफलानियस्यसः ॥

मृदुबल्वः । पुं॰ सात्त्विकराजसवृत्ति हये ॥

मृदुरेचनी । स्त्री॰ मार्कण्डिकायाम् ॥

मृदुलः ।त्रि॰ कोमले मृदुर्गुणोस्यास्ति । सिध्मादिभ्यश्चेतिलच् ॥ न॰ जले ॥

मृदुलोमकः । पुं॰ शशके॥ त्रि॰कोमलरोमविशिष्टे ॥

मृदूत्पलम् । न॰ नीलपद्मे ॥

मृद्वङ्गम् । न॰ वङ्गे ॥ कोमलावयवे ॥ त्रि॰तद्वति । मृदून्यङ्गानियस्य ॥ कर्मधारयोवा ॥

मृद्वी । स्त्री॰ कपिलद्राक्षायां ॥ कोमलाङ्ग्याम् ॥ मृदुशब्दोमृदुत्वगुणमुक्त्वा॰मृदुत्वगुणयुक्तं द्रव्यमभिधत्ते इतिगुणवचनत्वे न॰वोतोगुण-वचनादितिपाक्षिकोङीष् ॥

मृद्वीका । स्त्री॰ गोस्तन्याम् । द्राक्षायाम् । मुनक्का॰ इ॰ भा॰ ॥ मृद्नाति । मृदु॰ । अलीकादयश्चेति-

साधु : ॥ कपिलद्राक्षायाम् ॥

मृधम् । न० युद्धे ॥ मर्द्दनम् । मृधु हिंसायाम् । वाहुलकात्० भावे० घञर्थेवाक: ।

मृन्मय : । त्रि० मृदोविकार ॥ मयट् ॥ स्त्री० मृन्मयी ॥

मृन्मरु : । पुं० अश्मनि । पाषाणे ॥

मृषा । अ० वितथे । मिथ्या झूठ० इ० भा० ॥ मृष्यते । मृषुसहने । काप्रत्यय : ॥

मृषाध्यायी । पुं० वके ॥

मृषार्थकम् । न० आहृते । अत्यन्तासम्भवार्थवाक्ये ॥ यथा । एषवन्ध्यासुतोयातिखपुष्पकृतशेखर:। कूर्म्मक्षीमतनुत्राण : शशशृङ्गधनुर्द्धर : ॥ इ० । मृषाऽर्थोयस्यतत् । कप् ।

मृषालक : । पुं० आम्रवृक्षे ॥

मृषावाद : । पुं० मिथ्योदिते । मिथ्यावाक्ये । टट्टर्याम् ॥

मृषावादी त्रि० मिथ्यावादिनि । मृषोद्ये । मृषावादोस्यास्ति । इनि: ॥ मिथ्याभियोक्तरि ।

मृषोद्य : । त्रि० मिथ्यावादिनि ॥ राजसूयसूर्य मृषोद्ये त्यादिनामृषोपपदाद्वदे: कर्म्मणिनित्यं क्यब्निपात्यते ॥ न० मिथ्यावाक्ये ॥

मृष्ट : त्रि० अपनीतमले । शोधिते ॥ मृज्यतेस्म । मंजूशुद्धौ । क्त: । न०

मरिचे ॥

मृष्टि : । स्त्री० अन्नादे : संस्कारविशेषे ।

मृष्टेरुक : । पुं० वदान्ये । दानशौण्डे ॥ मिष्टाशिनि ॥ अतिथिद्विषि ॥

मेक : । पुं० अजे । छागे ॥

मेकल : । पुं० ऋष्यन्तरे ॥ गिरिविशेषे ॥

मेकलकन्यका । स्त्री० नर्मदायांसरिति । रेवायाम् ॥ मेकलस्यर्षे रद्रेर्वाकन्यका ।

मेकलाद्रिजा स्त्री० सोमोद्भवायाम् । रेवायाम् ॥ मेकलाद्रेर्जाता । जनी० । ड : ॥

मेचणम् । न० यज्ञीयपात्रविशेषे ॥

मेखल : । पुं० मेकलपर्वते ।

मेखलकन्यका स्त्री० रेवायाम् ॥

मेखला । स्त्री० खड्गबन्धे । खड्गादेश्चर्मादिनिर्मिते कटिबन्धने ॥ युद्धे हस्तात्पतनवारणायमसिबन्धे प्रक्षिप्यमाणे चर्म्मादौ ॥ स्त्रीकट्याभरणे । काञ्च्याम् ॥ रशनायाम् ॥ केचित्तु० एकयष्टिर्भवेत्काञ्चीमेखलात्वष्टयष्टिका । रशनाषोडशज्ञेयाकलाप : पञ्चविंशक: ॥ इतिपठन्ति० इइत्थभेदात्पर्यायता ॥ स्त्रीकट्यांवस्त्रग्रन्थने ॥ श्रोणिस्थाने ॥ शैलनितम्बे ॥ उपनयनकाले

धारणीयमुञ्जनिर्मितसूत्रत्रये ॥ यथा । मौञ्जीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला । क्षत्रियस्यतुमौर्वीज्यावैश्यस्यशणतान्तवी ॥ मुञ्जालाभेतुकर्त्तव्या : कुशाश्मान्तकवल्वजै : । त्रिवृताग्रन्थिनैकेनत्रिभि: पञ्चभिरेववा ॥ इ०मनु : ॥ होमकुण्डोपरिमृद्घटितवेष्टनविशेषे ॥ यथोक्तंवशिष्ठपञ्चरात्रे । यावान्कुण्डस्यविस्तार : खननंतावदिष्यते । हस्तेकेमेखलास्तिस्रोवेदाग्निनयनाङ्गुला : ॥ कुण्डेद्विहस्तेतात्रेयारसवेदगुणाङ्गुला : । चतुर्हस्ते तुकुंडे तावसुतर्कयुगाङ्गुला : ॥ मेखलाब्रह्मचारिमेखलावत्कुण्डवेष्टिताम्‌द्घटिता:तास्वखातदेशाद्याएकाङ्गुलिरूपंकण्ठंपरित्यज्योच्छायेणविस्तारेणचेत्यादिक्रमेणवेदाद्यङ्गुला : एतद्विपरीतास्तन्त्रान्तरोक्ताव्यवहारविरुद्धा : ॥ पिङ्गलामतेपि । खातादेकाङ्गुलंत्यक्त्वा मेखलानांविधिर्भवेदिति ॥ मखंगतिंलाति । ला० । आतइतिक : । पृषोदरादि : ॥ मांलक्ष्मीम् ईखति ०माईखतिवा । माशब्दोनिषेधेईखगतौ । बाहुलकात् कलच् ॥ यद्वा । माइंखलति । खलसञ्चयेसिस्वनेच । मूलविभुजादित्वात् क: । अणितु०वृद्धि : स्यात् ॥ नर्मदायाम् ॥ प्रश्निपर्ण्यां ॥

मेखलिक : । पुं० मेखलिनि ॥ मेखलास्यास्ति । व्रीह्यादित्वाट्ठक् ॥

मेखली । पुं० मेखलावति । मेखलिके । मेखलास्यास्ति । व्रीह्यादित्वादिनि : ॥

मेघ : । न० अभ्रे । वारिवाहे । घने । जलदे ॥ मेघास्त्रिविधास्तत्रवह्निजाधूमयोनय: । निश्वासजास्तुजीमूतास्तेज्ञेयाजीवरूपिण : ॥ यज्ञजास्तुघनाघोरा : पुष्करावर्त्तकादय : । इतिविशेषउक्त : शब्दार्णवे ॥ मेहतिसिञ्चति । मिहसेचने । अच् । न्यङ्क्वादित्वात्कुत्वम् ॥ मुस्तायाम् ॥ राक्षसे ॥ षड्रागान्तर्गतरागविशेषे ॥ यथा । भैरवोथवसन्तश्चनटोनारायणस्तथा । श्रीरागोमेघरागश्चषडेतेपुरुषाह्वया : ॥

मेघकफ : । पुं० करकायाम् ॥

मेघकाल : । पुं० वर्षर्त्तौ ॥

मेघचिन्तक : । पुं० चातकपक्षिणि ॥

मेघङ्कर : । पुं० मेघजनने ॥ मेघान्करोति । मेघर्त्तिभयेषुकृञ : खल्प्रत्यय : । अरुर्द्विषदितिमुम् ॥

मेघज : । त्रि० मेघभववस्तुनि ॥

मेघजालम् । न० कालिकायाम् । मेघावल्यौ ॥

मेघजीवन : । पुं० चातके ॥ मेघेजीवनमस्य ॥

मेघज्योतिः । पुं॰ इरम्मदे । वज्राग्नौ ॥ मेघस्यज्योतिः ॥ अन्योन्यसङ्घट्टनेनमेघाग्निः स्त्यम्बाद्यादीयो ज्योतिरग्निः पततिसः ॥

मेघडम्बरः । पुं॰ मेघगर्जने ॥ मेघस्यडम्बरः ॥

मेघतिमिरम् । न॰ मेघाच्छन्नदिने ॥

मेघदीपः । पुं॰ विद्युति ॥

मेघध्वनिः । पुं॰ गर्ज्जिते । मेघनिर्घोषे ॥

मेघनादः । पुं॰ वरुणे ॥ रावणात्मजे । इन्द्रजिति ॥ मेघस्यनादइवनादोयस्य ॥ मेघशब्दे ॥ पलाशवृक्षे ॥ तण्डुलीयशाके ॥ इतिराजनिर्घण्टः ॥ मेघस्यनादः ॥

मेघनादजित् । पुं॰ रामानुजे । लक्ष्मणे ॥ मेघनादमजैषीत् । जि॰ । सत्सूद्विषेतिक्विप् । तुक् ॥

मेघनादानुलासकः । पुं॰ मयूरे ॥

मेघनादानुलासी । पुं॰ मयूरे ॥ मेघनादेनअनुलसति॰ तच्छील: । लसश्लेषणक्रीडनयोः । सुप्यजातावितिणिनिः ॥

मेघनामा । पुं॰ मुस्तके ॥ मेघनामानिनामास्य ॥ आदिलघौपञ्चमात्रके॰ ।ऽऽ॥

मेघनायकः । पुं॰ आवर्त्ताद्दौ ॥ यथा । वियुतशाकवर्षे तुचतुर्भिः शोधितेक्रमात् । आवर्त्तविद्धिसंवर्त्त पुष्करद्रोणमम्बुदम् ॥ फलंयथा । आवर्त्तीनिर्ज्जलीमेघः संवर्त्तश्चबहूदकः । पुष्करोदुष्करजलोद्रोणः सस्यप्रपूरकइति ॥

मेघनिर्घोषः । पुं॰ स्तनिते । गर्ज्जिते ॥ मेघस्यनिर्घोषः ॥

मेघपर्यायः । पुं॰ आदिलघौपञ्चमात्रके॰ ।ऽऽ॥ मुस्तके ॥ मेघोमेघवाचकः शब्दः पर्यायोऽस्य ॥

मेघपुष्पम् । न॰ पिण्डाभ्रे । वर्षोपले ॥ अम्बुनि ॥ नदीजले ॥ पुं॰ इन्द्रस्याश्वे ॥ कृष्णस्यघोटके ॥ मेघइवपुष्पमिव ॥

मेघप्रसवः । पुं॰ जले ॥

मेघभवः । त्रि॰ मेघोत्पन्नवस्तुनि ॥

मेघभूतिः । पुं॰ वज्रे ॥

मेघमालः । पुं॰ प्लक्षद्वीपस्थे गिरिविशेषे ॥ रमागर्भजातकल्किदेवपुत्रे ॥

मेघमाला । स्त्री॰ कादम्बिन्याम् । मेघानांमाला ॥

मेघयोनिः । पुं॰ धूमे ॥

मेघरागः । पुं॰ रागविशेषे ॥ मेघसंज्ञकोरागः ॥

मेघवर्णा । स्त्री॰ नीलीवृक्षे ॥ त्रि॰ घनसमानवर्णवति ॥

मेघवर्त्म । न॰ नभसि । गगने ॥

मेघवह्निः । पुं॰ वज्राग्नौ । इरम्मदे ॥

मेघवाह: । पुं० इन्द्रे ॥ यथा। राजा त्वर्थान्समाहृत्यकुर्यादिन्द्रमहोत्सवम् । प्रणीतोमेघवाहस्तुमहतीं वृष्टिमाहवेदितिदण्डनीति: ॥

मेघवाहन: । पुं० इन्द्रे । तुरासाहि ।। मेघा: महामेघागजरूपधारिणऐरावतादयोवाहनमस्य ॥ मेघान्वाहयतिचालयतिवा । ल्यु: ॥ इन्द्रोहिमेघानाविश्यवर्षतीत्यागम: ॥

मेघविस्फूर्ज्जिता । स्त्री० अतिधृतिच्छन्द: १९ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा । रसर्त्वश्वैर्य्यौन्मौररगुरुयुतामेघविस्फूर्ज्जितास्यात् ॥ यथा। कदम्बामोदाढ्याविपिनपवना: केकिन: कान्तकेका: ॥ विनिद्रा: कन्दल्योदिशिदिशिमुदाददुराद्दृप्तनादा: । निशान्त्यहिद्युद्विलसितलसन्मेघविस्फूर्जिताचेत् प्रिय: स्वाधीनोसौदनुजदलनोराज्यमस्मात्किमन्यत् ॥

मेघवेश्म । न० खे ॥

मेघसार: । पुं० चीनकर्पूरे ॥

मेघसुहृत् । पुं० मयूरे ॥ मेघ: सुहृदस्य ॥

मेघस्तनितोद्भव: । पुं० विकण्टकवृक्षे ॥

मेघाकाश । पुं० अभ्राकाशे ॥

मेघाख्यम् । न० मुस्तके ॥

मेघागम: । पुं० प्रावृषि । वर्षाकाले ॥ मेघस्यागमोयस्मिन् ॥ मेघस्यागमने ॥

मेघानन्दा । स्त्री० वलाकायाम् ॥

मेघानन्दी पुं० मयूरे ॥

मेघान्त: ॥ पुं० शरदि ॥ मेघानामन्तोयस्मिन् ॥

मेघास्त: । पुं० शरदृतौ ॥

मेघास्थि । न० करकायाम्

मेघाह्लदम् । न० आकाशे ॥

मेघोदर: । पुं० अर्हत्पितरि ॥

मेघ्य: । त्रि० मेघभवे ॥ दिगादित्वात्यत् ॥

मेचक: । पुं० मयूरपुच्छचन्द्रके ॥ मेचकोवर्णोस्त्यस्य । अर्शआद्यच् ॥ श्यामलवर्णे । कृष्णे ॥ मेचक: कृष्णनील: स्यादतसीपुष्पसन्निभ: । इतिशब्दार्णवभेद: ॥ वर्हिकण्ठसमंवर्णंमेचकंब्रुवतेबुधा इतिकात्य: मचतिमिश्रीभवतिवर्णान्तरेण। मच मुचिकल्कने । कृञादिभ्य: संज्ञायां वुन् । पचिमच्योरिच्चोपधाया इतीत्वे लघूपधगुण: ॥ धूमे ॥ मेघे ॥ शोभाञ्जने ॥ न० स्रोतोञ्जने ॥ अन्धकारे॥ नीलाञ्जने ॥ त्रि० श्यामलयुक्ते ॥

मेचकाभिधा । स्त्री० पातालगरुडीलतायाम ॥

मेटुला । स्त्री० चामलक्याम् ॥

मेठ : । पुं० हस्तिपके । निषादिनि ॥

मेढ्र : पुं० मेहने । शिश्ने ॥ मेहन्त्यनेन । मिहसेचने । दाम्नीतिष्ट्रन् ॥ मेहतिवा ॥ मेषे ॥

मेढ्रशृङ्गी । स्त्री० मेषशृङ्गीवृचे ॥

मेण्ठ : । पुं० हस्तिपके ॥

मेण्ड : पुं० मेठे । हस्तिपके ॥

मेण्ढ : । पुं० मेषे ॥

मेथि : । पुं० मेधिकाष्ठे । खलेवाल्याम् । खलेपशुबन्धनार्थकाष्ठे ॥ मेथ्यन्तेपशवोऽत्र । मेथृसङ्गमे । सर्वधातुभ्यइन् ॥

मेथिका । स्त्री० मेथिन्याम् । मेथ्याम् । गन्धबीजायाम् । मेथीतिप्रसिद्धशाके ॥ मेथिकावातशमनी श्लेष्मघ्नीज्वरनाशिनी । ततः स्वल्पगुणावन्यावाजिनांसातुपूजिता ॥ अपिच । मेथिकादीपनीहृद्यावद्धविट्क्रिमिशुक्रनुत् ॥ रूक्षोष्णांततफलंकासानिलश्लेष्मवमीन्जयेत् ॥

मेथिनी । स्त्री० मेथिकायाम् ॥

मेथी । स्त्री० मेथिकायाम् । गौरादित्वात्कृदिकारादितिवाङीष् ॥

मेद : । पुं० मेदसि । वपायाम् । शुद्धमांसस्नेहे ॥ अलम्बुषायाम् ॥ मेद्यति । ञिमिदास्नेहने । घञ् ॥ वैदेहेननिषादभार्यायांजनिते०अन्त्यजविशेषे ॥

मेद : पुच्छ: । पुं० दुम्बके । दुम्बा० दुम्बा० इ० भा० प्र० मेषविशेषे ॥ मेद : पुच्छोद्भवंमांसंहृद्यंवृष्यश्रमापहम् । पित्तश्लेष्मकरंकिञ्चिद्वातव्याधिविनाशनम् ॥

मेद : सारा । स्त्री० मेदायाम् ॥

मेदक : । पुं० जगले । सुराकल्के ॥ मेद्यतिञिमिदा० । क्वुनादिभ्यो वुन् ॥

मेदज: । पुं० भूमिजगुग्गुलौ ॥ त्रि० मेदोभवे ॥

मेद: । न० शुद्धमांसप्रभवस्नेहविशेषे ॥ वपायाम् । वसायाम् ॥ मेदस : स्वरूपंयथा । यन्मांसंस्वाग्निनापक्वंतन्मेदइतिकथ्यते । तदतीवगुरुस्निग्धंबलकार्यतिबृंहणम् ॥ स्थानंयथा । मेदोहिसर्वभूतानामुदरेष्वस्थिषुस्थितम् अतएवोदरेवृद्धि : प्रायोमेदस्विनोभवेत् ॥ रोगविशेषे ॥ तन्निदानंयथा । अव्यायामदिवास्वप्नश्लेष्मलाहारसेविन : । मधुरोऽन्नरस : प्राय : स्नेहान्मेदोविवर्द्धयेत् ॥ अन्नरस: ० आमद्रव: अस्वस्थैवैगुण्यंयथा । मेदसावृतमार्गत्वात्पुष्यन्त्यन्येनधातव : मेदस्तुचीयतेतस्मादशक्त : सर्वकर्मसु ॥ मेद्यति । ञिमिदा० । असुन् ॥

मेदस्कृत् । न० मांसे ॥

मेदा । स्त्री० अष्टवर्गाङ्गौषधिविशेषे ।

मेदोद्भवायाम् । जीवन्याम् । श्रेष्ठायाम् ॥ मणिच्छिद्रायाम् ॥ तल्लक्षणादिर्यथा । शुक्लकन्दो नखच्छेद्यो मेदोधातुमिवस्रवेत् । यः सर्वा मेदेति विज्ञेयो जिज्ञासातत्परैर्जनैः ॥ मेदायुगं गुरुस्वादु वृष्यं स्तन्यकफावहम् । बृंहणं शीतलं पित्तरक्तवातज्वरप्रणुत् ॥ मेदायुगम् । मेदा महामेदे ॥ मेदामहामेदास्थाने शतमूलीं प्रक्षिपन्ति ॥

मेदिनी । स्त्री० काश्मर्याम् । मेदायाम् ॥ मह्याम् । भूमौ ॥ मेदमस्त्यस्याम् । अतइनिः । मलग्नो मेदः कुक्षौ विशालिकोचे ऽदन्तोपि मेदः शब्दोस्ति ॥ यद्वा । मेद्यति । ञिमिदा० । ग्रह्यादित्वाणिनिः ॥ मधुकैटभयोरासीन्मेदसैवपरिप्लुता । तेनेयं मेदिनी देवी प्रोच्यते ब्रह्मवादिभिः ॥

मेदिनीद्रवः । पुं० पांशौ । धूलौ ॥

मेदुरः । त्रि० सान्द्रस्निग्धे । अतिशयस्निग्धे ॥ मेदनशीलः । ञिमिदा० । भञ्जभासमिदोघुरच् ।

मेदुरा । स्त्री० काकोल्याम् ॥

मेदोजम् । न० अस्थ्नि ॥

मेदोद्भवा । स्त्री० मेदायाम् ॥

मेदोध्रुः । पुं० वर्णसङ्करजातिभेदे ॥

मेदोवती । स्त्री० मेदायाम् ॥

मेधः । पुं० यागे । क्रतौ ॥ मेधति । मेधृ सङ्गमे ॥ पचाद्यच् ॥

मेधाः । पुं० मेधोभिधानेमुनिविशेषे ॥ वसिष्ठे ॥ स्वायम्भुवमनोः पुत्रे ॥

मेधा । स्त्री० धारणावत्यां बुद्धौ । अनेकग्रन्थार्थधारणशक्तौ ॥ अतीतानुस्मृतिर्मेधा तत्कालग्राहिणी मतिः । शुभाशुभविचारज्ञा प्रज्ञा धीरैरुदाहृता ॥ इतिविशेषः ॥ साचेयं ज्ञानस्य भार्या । यथा । ज्ञानस्यतिस्रो भार्यास्तु बुद्धिर्मेधा धृतिस्तथा । याभिर्विनाजगत्सर्वं मूढं मत्तसमं सदेति । मेधतेसङ्गच्छतेसर्वमस्याम् । मेधृ । गुरोश्चहलः । टाप् ॥ मेधाकरमौषधं यथा । शङ्खपुष्पी वचासोमा ब्राह्मी ब्रह्मसुवर्चला । अभयाचगुडूचीचअटरूषकवाकुची ॥ एतैरक्षसमैर्भागैर्घृतं प्रस्थं विपाचयेत् । कण्टकार्यारसं प्रस्थं बृहत्याच समन्वितम् ॥ एतद्ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम् ॥ * ॥

मेधाकरः । पुं० मेधाजनकेगणविशेषे । यथा । सतताध्ययनं तत्त्वज्ञानं च कथा सदा । श्रेष्ठानां तत्त्वशास्त्राणामवलोकनमेव च । सद्द्विजाचार्यसेवा च गणो मेधाकरः स्मृतः ॥

मेधाकृत स्त्री० सुनिषण्णके । सिता

वरशाके । त्रि० मेधाकारके ॥
मेधाजित् । पुं० कात्यायनमुनौ ॥
मेधातिथि: । पुं० मुनिविशेषे । कण्वर्षे : पुत्रे ।
मेधारुद्र : । पुं० कालिदासे ॥
मेधावती । स्त्री० महाज्योतिष्मत्याम् त्रि० मेधाविशिष्टायाम् ॥ मेधावान्० मेधावत्० द्र० पुंनपुंसकयो : ॥
मेधाविकम् । न० तीर्थविशेषे ॥
मेधावी । पुं० शुकपक्षिणि ॥ पण्डिते ॥ व्याडौ ॥ मदिरायाम् ॥ त्रि०मेधान्विते ॥ प्रज्ञातिशयवति । जहापोहसमर्थे ॥ शमदमसर्वकर्मोपरमगुरूपसदनादिसाधनवाक्यविचारेणपरिनिष्पन्नं वेदान्तमहावाक्यकरणकांनिरस्तसमस्ताप्रामाण्याशङ्कांचिदन्याविषयकमहंब्रह्मास्मीतिब्रह्मात्मैक्यज्ञानमेवमेधा०तयानित्यंयुक्ते०स्थितप्रज्ञे०विपश्चिति ॥ मेधास्यास्ति । अस्मायामेधास्रजोविनि : ॥
मेधाविनी । स्त्री०ब्रह्मण : पत्न्याम् ब्राह्म्याम् ॥
मेधि : । पुं० खलेवाल्याम् । खलेपशुबन्धनायारोपितेकाष्ठे ॥ पुंसिमेधि: खलेदारुन्यस्तंयत पशुबन्धने ॥ मेध्यन्तेपशवोत्र । मेधृ० । इन् ॥

मेधिर : । त्रि० मेधाविनि ॥
मेध्य : । पुं० यवे ॥ छागे ॥ खदिरे ॥ त्रि०पवित्रे । शुचौ । शुद्धे ।यज्ञिये ॥ मेधनार्हम् । मेधृ० । ऋहलोर्ण्यत् ॥ मेधायैहितोवा ।उगवादिभ्योयत् ॥ मेधामर्हतिवा । दण्डादिभ्योयत् ॥ मेधइववा शाखादिभ्योय : ॥ ज्ञानेनमेध्यमखिलममेध्यंज्ञानतोभवेत् । ब्रह्मज्ञानेसमुत्पन्नेमेध्यामेध्यंनविद्यते ॥
मेध्या । स्त्री० रक्तवचायाम् ॥ रोचनायाम् ॥ केतक्याम् ॥ ज्योतिष्मत्याम् ॥ शङ्खपुष्प्याम् ॥ ब्राह्म्याम् ॥ मेधायैहिता । यत् । टाप् ॥ योषिति । नार्याम् ॥ सोम :शौचंददौस्त्रीणांगन्धर्वश्शुभांगिरम् । पावक : सर्वमेध्यत्वंमेध्यावैयोषितोह्यत : ॥
मेनका । स्त्री० हिमालयस्यभार्यायाम् । अपर्णामातरि ॥ स्वर्वेश्यायाम् । शकुन्तलायाजनयित्र्याम् ॥
मेनकात्मजा । स्त्री० गिरिजायाम् । दुर्गायाम् ॥ मेनकाया : आत्मजा ॥
मेनकापति : । पुं० हिमालये ॥
मेनकापुत्र : । पुं० मैनाके ॥ मेनकाया : पुत्र : ॥
मेनकाप्राणेश : । पुं० हिमालये ॥
मेना । स्त्री० मेनकायाम् । हिमाद्रे

भार्य्यायाम् ॥

मेनाजा । स्त्री० पार्व्वत्याम् ॥

मेनादः । पुं० केकिनि । मयूरे ॥ मार्जारे ॥ छगले । छागे ॥

मेनाधवः । पुं० उमागुरौ । हिमालये ॥

मेनासुतः । पुं० मैनाके ॥

मेयः । त्रि० प्रमेये ॥ मानाधीनामेयसिद्धिः ॥ मीयते । माङ् माने । अचोयत् । ईद्यति । गुणः ॥ मातुंपरिच्छेत्तुं योग्योवा ॥

मेयाभः । त्रि० मेयसमानाकारे ॥ मेघस्याभेवाभायस्य सः ॥

मेरकः । पुं० विष्णौ ॥ असुरभेदे

मेरुः । पुं० सुमेरौ । अत्युच्छ्रितानां शिखरिणांमध्येभगवतोविभूतौ । हेमाद्रौ । रत्नसानौ । सुरालये ॥ जम्बुद्वीपं क्षितेर्नाभिस्तद्वृत्तं लक्षयोजनम् । क्षाराब्धिनापरिक्षिप्तम् परिवृत्तमतावता ॥ तस्यमध्ये स्थितः शैलराजराजोहिरण्मयः । तिरस्कृतांशुमज्ज्योतिर्मेरुःसुरनिषेवितः सषोडशसहस्राणिक्षितौविष्टोमहीतलात् । तदूनमुन्नतोलक्षं मूलेषोडशविस्तृतः ॥ समेरुर्भूमेरन्तःषोडशयोजनसहस्राणिप्रविष्टः महीतलादारभ्यऊर्द्ध्वं यावच्चतुरशीतियोजनसहस्रोन्नतिः मूलेचषोडशसहस्रविस्तारः । ऊर्द्ध्वतोऽस्यशरावा-



कृतिविस्ताराधिक्येनद्वैगुण्यम् । उक्तञ्चश्रीमत्स्वतन्त्रे । षोडशैकसहस्राणिबुध्नभागेप्ररोपितः । तान्यस्यमूलेविस्तारः स्यादूर्द्ध्वं द्विगुणस्तु सः ॥ सशरावाकृतिर्देविमेरुर्देवाश्रयोऽद्रिराट् । इति । विषुपादान्तरेष्वस्यचतुर्व्विषुपर्व्वसु । नेमयः कटकाकारानिर्गतादीप्तिमत्तराः ॥ एकादशसहस्रातुमनुसाहस्रकोपरा । नेमिर्य्यामस्तकोपान्तेलोकपालसमाश्रया ॥ चक्रवाटेतितामाहुः सर्व्वरत्नप्रभावतीम् । अस्यमेरोःस्वोच्छ्रायपादेनपञ्चविंशतिसहस्रात्मकेनान्तरंयेषांतेषु तथाविधेषूत्तरंचतुःसहस्रविस्तृतेषु पर्व्वसुभागसन्धिषु कटकाकाराः सुष्ठुदीप्तास्तिस्रोनेमयोमेखलानिर्गताः । तदेवेषु विषुस्थानेषुचतुर्ष्वत्यंदर्शयति । एकादशसहस्रेत्यादिना । एकाचाद्याद्वादशसहस्रप्रमाणा । द्वितीयामनुसाहस्रिकाचतुर्द्दशसहस्रा । चतुर्द्दशत्वोक्तेश्च । तृतीयाऽष्टादशसाहस्रविस्तृता । सानेमिर्य्यामस्तकसमीपेलोकपालाश्रयभूताचानेकरत्नप्रभाभासुराच । तांचक्रवाटोक्त्याआगमज्ञाआहुः । एवञ्चप्रागुक्तचतुरशीतियोजनसहस्रोच्छ्रायस्यमेरोः पर्व्वत्रयंपञ्चसप्ततिसहस्रमानकम् । कटकत्रयन्तुनवसहस्रोन्नत

मेकैकस्य त्रिसहस्रमानकत्वमित्यागमज्ञाः । सिद्धगन्धर्वमरुतां तद्वः पर्वसु स्थितिः । चक्रवाटाधःस्थितेषु त्रिषु पर्वसु सिद्धादीनामास्पदम् । या तु चक्रवाटाख्योर्द्ध्वमेखला तस्यामष्टसु शृङ्गेषु पुर्य्योऽष्टौ समवस्थिताः । प्राच्यादिष्विन्द्रमुख्यानां-नामतस्तानि बोधत ॥ नानारत्नप्रभाजालमण्डलालङ्कृता हरेः । सिद्धसाध्यमरुज्जुष्टा रुक्मभूरमरावती ॥ रक्तपीतमणिप्रायहेमप्राकारगोपुरा । वह्नेस्तेजोवती वह्नितुल्यभूतनिषेविता ॥ मृत्योः संयमनी तुङ्गलोहप्राकारमण्डला कालपाशपिशाचव्याधिप्रेतमारीनिषेविता ॥ कृष्णा दैत्यपतेर्नैरृत्योर्धाम बहुदैत्यसेविता । नीलरत्नप्रभाजालवितानवरभूषणा ॥ शुद्धवत्यम्बुनाथस्य स्फटिकोपलनिर्म्मिता । पाण्डुराभ्रोपमैर्यादःसेविता भाति धामभिः ॥ वायोर्गन्धवती तुङ्गश्वेतपीतध्वजाकुला । बलवद्भूतसञ्जुष्टा सर्वरत्नविनिर्म्मिता ॥ महोदया चन्द्रमसः श्वेतामुक्तादिनिर्म्मिता । द्विजसङ्घस्तुता भाति पुरैर्हिमगिरिप्रभैः ॥ ज्वलल्ललाटदृग्दग्धस्मरमृत्युयशोभृतः । पुरी यशोवती सर्वरुद्रजारुद्रसेविता ॥ इति सर्वासु सुखदा चक्रवाटार्द्धविस्तृताः । पुर्य्योऽष्टावनिलोद्धूतपारिजातरजोरुणाः ॥ चक्रवाटार्द्धेन नवसहस्रात्मकेन विस्तीर्णाः ॥ वेधसा निर्म्मिता लोकपालचक्रानुवर्त्तिनाम् । भूतये स्वर्गदुस्थे ता गीयन्ते कविभिः क्षितौ ॥ अथ ब्रह्मणः पुरी । चतुर्द्दशसहस्राणि योजनानां स्वयम्भुवः । मध्ये मनोवती नाम पुरी लोकेशवन्दिता ॥ या च कारारुणानुच्चैर्वियन्मार्गान् महः श्रिया । सावित्र्याः स्पर्द्धमानेव स्वर्गकामातिवर्त्तिनी ॥ तस्यामुपासते देवा मुनयश्च महौजसः । महायोगीश्वरं सिद्ध्यै यमाद्यैर्भूतवेधसम् ॥ तदीशभागे तस्याद्रेः शृङ्गमादित्यसन्निभम् । यत्तज्ज्योतिष्कमित्याहुः सदा पशुपतेः प्रियम् ॥ तस्य सानुषु हैमेषु रत्नचित्रेषु संस्थिताः । स्कन्दनन्दिमहाकालगणेशादिगणेश्वराः ॥ मूर्ध्नि देवादिदेवस्य स्थानं त्रिपुरविद्विषः । रुद्रायुतगणैर्जुष्टं ब्रह्माद्यैश्च सुरोत्तमैः ॥ इति मृगेन्द्रसंहितायां विद्यापादे भुवनाध्वप्रकरणे मेरोर्वर्णनम् ॥ जपमालाग्रवर्त्तिन्येकस्मिन् मणौ ॥ मिनोति क्षिपति ज्योतींष्युच्चत्वात् । डुमिञ् प्रक्षेपणे । मिपीभ्यां रुः ॥ माचामात्रे ।०।० ॥

मेरुकः । पुं० यक्षधूपे ॥

मेरुदेवी । स्त्री० नाभिभूतेः पत्न्याम् ॥

भगवतऋषभस्यजनन्याम् ॥

मेरुसावर्णः । पुं० एकादशेमनौ ॥

मेल : । पुं० सङ्गमे ॥ मेलनम् । मिल संश्लेषे । घञ् ॥

मेलक : । पुं० सङ्गे । सङ्गमे ॥ मेलनम् । मिल० । घञ् । स्वार्थेक : ॥

मेलकलवणम् । न० सौवर्चलवणे ॥

मेलनम् । न० मेले । सङ्गमे ॥

मेला । स्त्री० मसीजले ॥ मेलके ॥ अञ्जने ॥ महानील्याम् ॥ टाप् ॥

मेलानन्दा । स्त्री० मस्याधारे । मसीपात्रे ॥

मेलान्धू : । स्त्री० मेलानन्दायाम् ॥

मेलाम्बु : पुं० मस्याधारे ॥

मेष : । पुं० हुडौ । मेढ्रे । उरभ्रे । उरणे । ऊर्णायौ । एडके । मेंढा० इ० भा० ॥ मेषस्यमांसंपुष्ट्यैस्यात्पित्तश्लेष्मकरंगुरु । तस्यैवाण्डविहीनस्यमांसंकिञ्चिल्लघुस्मृतम् ॥ अपि चाश्वमांसगुणा: । मेषमांसंगुरुस्निग्धंबल्यंवातकफप्रदम् । मेद:पुच्छामिषंवृष्यंकफवातकरंगुरु ॥ मिषति । मिषस्पर्द्धायाम् । अच् । भेषज्यप्रभेदे । राशिविशेषे । क्रियसंज्ञके । लग्नविशेषे ॥ मेषलग्नोत्पन्नस्यफलंयथा । मेषलग्नेसमुत्पन्नश्चण्डोमानीधनीशुभ: क्रोधीस्वजनहन्ताचविक्रमीपरवत्सल : ॥

मेषक : । पुं० जीवशाके ॥

मेषकम्बल : । पुं० ऊर्णायौ ॥ मेषलोमकृत : कम्बल : । शाकपार्थिवादि : ॥

मेषलोचन : । पुं० चक्रमर्द्दे ॥ मेषस्य लोचनमिवलोचनमस्य॰तत्तुल्यपुष्पत्वात् । लोचनशब्दस्तत्पुष्पेलाक्षणिक : ॥ चि० मेषचक्षुस्तुल्यनेत्रे ॥

मेषवल्ली । स्त्री० मेषशृङ्ग्याम् ॥

मेषविषाणिका । स्त्री० मेषशृङ्ग्यां ॥

मेषशृङ्ग : । पुं० स्थावरविषप्रभेदे ॥

मेषशृङ्गी । स्त्री० नन्दीवृक्षे । मेढ्रशृङ्ग्याम् । मेषविषाणिकायाम् ॥ मेषशृङ्गीरसेतिक्तावातलाश्वासकासहृत् । रूक्षापाकेकटु : पित्तव्रणश्लेष्माक्षिशूलनुत् ॥ मेषशृङ्गीफलंतिक्तंकुष्ठमेहकफप्रणुत् । दीपनंस्रंसनंकासकृमिव्रणविषापहम् ॥ मेष : शृङ्गमस्या : । मेषशब्दोमेषशृङ्गसदृशेलाक्षणिक : ॥ गौरादि : ॥

मेषा । स्त्री० त्रुटौ । क्षुद्रैलायाम् ॥

मेषाक्ष : । पुं० चक्रमर्द्दके ॥ मेषस्याक्षीवाक्षियस्य॰ तत्सदृशपुष्पत्वात् । अक्ष्णोदर्शनादित्यच् । अक्षिशब्द: पुष्पेलाक्षणिक : ॥

मेषाक्षिकुसुम : । पुं० चक्रमर्द्दके ॥

मेषाण्ड : । पुं० इन्द्रे ॥

मेषाधिप : । पुं० भौमग्रहे ॥ मेषस्य मेषराशे : अधिप : ॥

मेषाण्डी । स्त्री० वस्तान्त्रीवृक्षे ॥
मेषालु : । पुं० वर्ब्बरावृक्षे ॥
मेषाह्वय : । पुं० चक्रमर्द्दे ॥
मेषिका । स्त्री० मेष्याम् ॥
मेषी । स्त्री० मेषस्त्रियाम् । भेड० भेडी० हू० भा० ॥ तिनिशवृक्षे ॥ जटामांस्याम् ॥
मेसूरणम् । न० दशमलग्ने ॥ यथा । कर्मस्थानञ्चदशमंखंमेसूरणमास्पदम् ॥
मेहः । पुं० प्रमेहरोगे ॥ मेहति । मिहसेचने । पचाद्यच् ॥ मेहनंवा । घञ् ॥ प्रस्रावे ॥ मेषे ॥
मेहघ्नी । स्त्री० हरिद्रायाम् ॥ मेहंहन्ति । हन० । अमनुष्यकर्तृकेचेतिटक् ङीप् ॥
मेहन् । त्रि० मूत्रयति ॥ मेहति । मिह० । शतृ ॥
मेहनः । पुं० मुष्कवृक्षे ॥ न० मूत्रे ॥ शिश्ने ॥ मेहन्त्यनेन । मिह० । करणेल्युट् ॥
मैत्रः । पुं० ब्राह्मणे ॥ सुधन्वाचार्य्ये ॥ न० अनुराधानक्षत्रे ॥ विशेषनक्षत्रादौयथा । चित्रेन्दुमित्रपौष्णाश्चमृदुमैत्रंतथाभृगुः । तत्रगीताम्बरक्रीडामित्रकार्य्यञ्चशोभनम् ॥ अष्टमतारायाम् ॥ मित्रदेवताकपायुसम्बन्धान्मूत्रपुरीषोत्सर्गे ॥ यथाह्मपस्तम्बः । मूत्रपुरीषेकुर्य्याद्दक्षिणां दिशंदक्षिणापरांवेति । दक्षिणापरां नैर्ऋतीम्० गत्वेतिशेषः ॥ तथा अस्तमितेचबहिर्ग्रामादाराश्चावसथान्मूत्रपुरीषयोः कर्मवर्ज्जयेदिति ॥ शुष्कैस्तृणैस्तथाकाष्ठैः पत्रैर्वेणुदलैर्नवा । मृन्मयैर्भाजनैर्वापिचान्तर्धायवसुन्धरामितिवायुपुराणम् ॥ मूत्रोच्चारसमुत्सर्गंदिवाकुर्य्यादुदङ्मुखः । दक्षिणाभिमुखोरात्रौसन्ध्ययोश्चयथादिवेतिमनुः ॥ त्रि० मित्रसम्बन्धिनि ॥ मैत्रीस्निग्धता० तद्वति ॥ मित्रस्यकर्मभावोवा । युवादित्वादण् ॥ मित्रोदेवतास्यवा । सास्यदेवतेत्यण् ॥
मैत्रभम् । न० अनुराधानक्षत्रे ॥
मैत्रायणीयः । पुं० यजुर्वेदस्यशाखाभेदे ॥
मैत्रावरुणः । पुं० पुरोनुवाक्यायावक्तरि० ऋत्विग्विशेषे ॥ यथा । मैत्रावरुणेनपुरोवाक्यायामुक्तायां तत्प्रकाशितदेवतोद्देशेनाध्वर्य्युर्होतृपठितयाज्यान्तेवषट्कारेयसोमादिकंजुहोतीति ॥ अगस्त्यमुनौ ॥
मैत्रावरुणिः । पुं० अगस्त्यमुनौ ॥ मित्रश्चवरुणश्च० मित्रावरुणौ । देवताद्वन्द्वेचेत्यानङ् । तयोरपत्यम् । अतइञ् ॥ पीत्वागर्जन्नृत्यपत्ते० ॥
मैत्री । स्त्री० सौहार्द्दे ॥ स्निग्धतायां

म् ॥ सर्वप्राणिषु सुखसम्भोगापन्ने षु० साध्वेतन्ममैतेषांसुखित्त्व मितिमैत्रींभावयेन्नत्वीर्ष्याम्॥ अण न्तान्मैत्रशब्दान्ङीप् ॥ विद्विष्टप तितोन्मत्तवङ्कुवैरातिकीटकैः । ब न्धकीबन्धकीभर्तृक्षुद्रानृतकथैः स ह ॥ तथातिव्ययशीलैश्चपरीवादकै रैः शठैः । बुधोमैत्रींनकुर्वीत० नैकः यत्यन्तकौटवत्पीडकः ॥ उत्कृष्टमध्यमनिकृष्टजनेषु मैत्रीयद्व च्छिलासुसिकतासुजलेषु रेखा । वैरंक्रमादधममध्यमसज्जनेषुयद्वच्छि लासुसिकतासुजलेषु रेखेव्युइटः॥ उपकारित्वे ॥ अनुराधाभे ॥

मैत्रीबलः । पुं० बुद्धे ॥ मैत्रीबलंयस्य सः ॥

मैत्रेयः । पुं० ग्लावाभिधर्षौ । बके । चैकितायने ॥ मुनिविशेषे ॥ मि त्रायाः अपत्यम् । गृष्ट्यादिभ्यश्चे तिढञ् । दाण्डिनायिनेतिनिपात नाद्युलोपः ॥ वैदेहादायोगव्यां जाते० सङ्करजातिविशेषे ॥ मैत्रे यकन्तुवैदेहोमाधूकंसम्प्रसूयते । नॄ न्प्रशंसत्यजस्रंयोघण्टाताडोरुणो दये ॥ माधूकंमधुरभाषिणम् ॥ भाविबुद्धिविशेषे ॥

मैत्रेयिका । स्त्री० मित्रयुद्धे ॥ मित्रयू नांभावे ॥ गोत्रचरणाच्छ्लाघात्या कारतदवेतेष्वितिवुञ् । कैकयमि त्रयुप्रलयानामितियादेशः ॥

मैत्रेयी । स्त्री० याज्ञवल्क्यस्यर्षेः पत्न्याम् ॥

मैथिलः । पुं० जनकनृपे ॥ त्रि० मिथिलायांभवे ॥ अण् ॥

मैथिली । स्त्री० जानक्याम् ॥ सीता याम् ॥

मैथिलेयः । पुं० सीतापुत्रे ॥ अप त्ये ढक् ॥

मैथुनम् । न० मिथुनसाध्येऽग्न्याधा नपुत्रोत्पादनादौ ॥ सङ्गते ॥ रते । सुरते । धर्षिते । व्यवाये । ग्रा म्यधर्मे । निधुवने ॥ मिथुनमेव । प्रज्ञाद्यण् ॥ मिथुनस्येदंवा ॥ स्मर णंकीर्त्तनंकेलिः प्रेक्षणंगुह्यभाषणम् । सङ्कल्पोध्यवसायश्चक्रियानिर्वृत्ति रेवच । एतन्मैथुनमष्टाङ्गंप्रवदन्ति मनीषिणः ॥ अशास्त्रीयेस्त्रीपुंस व्यतिकरे॥ शीघ्रंमैथुनगामीदीर्घा युरन्यथाल्पायुः ॥

मैथुनी । पुं० सारसे ॥

मैथुन्यः । त्रि० मिथुनायहिते । त स्मैहितमितियत् ॥ न० मिथुनी भावसुखे ॥

मैनाकः । पुं० पर्वतविशेषे । हिमा लयस्यज्येष्ठपुत्रे । हिरण्यनाभे । सुनाभे ॥ क्रौञ्चंगिरिमतिक्रम्यमै नाकोनामपर्वतः । मयस्यभवनंतत्र दानवस्यस्वयंकृतम् ॥

मैनाकस्वसा । स्त्री॰ पार्वत्याम् ॥ मैनाकस्यमेनासुतस्यस्वसा ॥

मैनिकः । पुं॰ मात्स्यिके ॥ मीनान् हन्ति । पक्षिमत्स्येतिठक् ॥

मैन्दः । पुं॰ वानरविशेषे ॥ विष्णु वध्यासुरविशेषे ॥

मैन्दहा । स्त्री॰ विष्णौ ॥

मैरेयम् । न॰ मद्यविशेषे ॥ मैरेयंधातकीपुष्पगुडधानाम्बुसहितमितिमाधवः ॥ आसवे ॥ मिरायांदेशविशेषे॰ औषधिविशेषे वाभवम् । नद्यादिभ्योढक् ॥ वारुण्येवमैरेयमितिव्याख्यातारः । तेषांमैरेयदोषेणाविषमीकृतचेतसाम् । निम्लोचतिरत्रावासीद्वैघूनामिवमर्द्दनम् ॥ तेषांयादवानाम् ॥

मोक्षः । पुं॰ पाटलिद्रुमे ॥ मोक्षणे मृतौ ॥ कृत्स्नदेहापवर्गइतिचार्वाकः ॥ प्रक्षीणसर्वावरणत्वात्स्वात न्त्र्यसम्प्राप्ताबुद्ध्वपदासादनंमोक्षइत्यनेकान्तवादिनः । यदाहुः । लोहपञ्जरविच्छेदात्प्लवतेऽलावुकं यथा । आरोहतितथामोक्षंजीवो मोहादिसंक्षयात् ॥ नित्यबोधसुखाद्यैःस्वधर्मैर्युक्तः सतिष्ठतीति ॥ मुक्तौ । कैवल्ये । निर्वाणे । श्रेयसि । निःश्रेयसे । अमृते । अपवर्गे । तत्त्वज्ञानकृतेऽज्ञानतत्कार्याभावे । निरतिशयानन्दाभिव्यक्तौ । निरवशेषानर्थनिवृत्तौ । स्वाविद्याकल्पितानात्मदेहादावात्माभिमानरूपबन्धनिवृत्तिद्वारास्वरूपावस्थाने ॥ अनात्मभूतेदेहादावात्मबुद्धिस्तुदेहिनाम् । साऽविद्यातत्कृतोबन्धस्तन्नाशोमोक्षउच्यते ॥ मोक्षमिच्छन्सदाकर्मत्यजेदेवससाधनम् । त्यजतैवहितज्ज्ञेयंत्यक्तुःप्रत्यक्परंपदम् ॥ यथोक्तंनिर्वाणे । यावन्नक्षीयतेकर्मशुभंवाऽशुभमेववा । तावन्नजायतेमोक्षोनृणांकल्पशतैरपि ॥ यथालौहमयैःपाशैःपाशैःस्वर्णमयैरपि । तथाबद्धोभवेज्जीवःकर्मभिश्चाशुभैःशुभैः ॥ कुर्वाणःसततंकर्मकृत्वाकष्टशतान्यपि । तावन्नलभतेमोक्षंयावद्ज्ञानंनविन्दति ॥ मोक्षणम् । मोक्षअसनेचुरादिः । घञ् ॥ यद्वा । मोक्षयति । मुचेःसन्नन्तादकर्मकाण्णिजन्ताद्घञ् ॥ मुचेर्बाहुलकात्सोवा ॥

मोक्षकः । पुं॰ सुष्कवृक्षे ॥

मोक्षणम् । न॰ मोचने ॥

मोक्षधर्म्मः । पुं॰ शमदमादिषु ॥ महाभारतोक्तप्रकरणविशेषे ॥

मोक्षपरायणः । त्रि॰ सर्वविषयविरक्ते ॥ मोक्षःपरमयनमस्य ॥

मोक्षमयः । त्रि॰ परमानन्दस्वरूपावस्थानरूपे ॥

मोक्षसाधनम् । न॰ ज्ञाने ॥ कर्मणा-

त्वन्तु : करणशुद्धिद्वाराज्ञानेऽप्युपयोगीनत्वेषांसाक्षान्मोक्षसाधनत्त्वम् । । यथा । कषायपक्तिः कर्माणिज्ञानन्तुपरमागतिः । कषायेकर्मभिः पक्वे ततोज्ञानंप्रवर्त्तत इति । उपासनानान्तुचित्तैकाग्र्यम् नकैवल्यमुपासनात् । तथाचमोक्षप्राप्तौचयोमार्गाः । तत्रज्ञानमार्गः साक्षान्मोक्षसाधनमितरौचित्तशुद्धिद्वारेतिविवेकः ।

मोक्षी । त्रि॰ मोक्षाधिकारिमानवे । मोक्षयोग्ये ॥ स्थावराः क्रमयश्चाब्जाः पक्षिणः पशवोनराः । धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्चयथाक्रमम् ॥ चतुर्विधशरीराणिधृत्वामुक्तासहस्रशः । सुकृतान्मानवोभूत्वाज्ञानीचेन्मोक्षमाप्नुयात् ॥ चतुरशीतिलक्षेषुशरीरेषुशरीरिणाम् । नमानुष्यंविनान्यत्रतत्वज्ञानन्तुलभ्यते ॥ अत्रजन्मसहस्राणांसहस्रैरपिपार्वति । कदाचिल्लभतेजन्तुर्मानुष्यंपुण्यसञ्चयात् ॥ सोपानभूतंमोक्षस्यमानुष्यंप्राप्यदुर्लभम् । यस्तारयतिनात्मानंतस्मात्पापतरोऽत्रकः ॥ नरः प्राप्योत्तमंजन्मलब्ध्वाचेन्द्रियसौष्ठवम् । नवेत्त्यात्महितंवस्तुसभवेद्ब्रह्मघातकः ॥ इतिश्रीकुलार्णवेप्रथमोल्लासः ॥

मोक्षोपायः । पुं॰ विविदिषासन्न्यासे ॥ साधनचतुष्टयसम्पत्तौ ॥

मोगः । पुं॰ जलचरपक्षे ॥

मोघः । पुं॰ प्राचीरे ॥ त्रि॰ हीने ॥ इ॰ हे॰ चन्द्रः ॥ हीने ॥ इतिमेदिनी ॥ निरर्थके । निष्फले ॥ मुह्यन्त्यस्मिन् । मुह॰ । हलश्चेतिघञ् । न्यङ्क्वादित्वात्कुत्वम् ॥

मोघकर्म्मा । पुं॰ सकामकर्म्मणि ॥ मोघानिश्रममात्ररूपाणिअग्निहोत्रादीनिकर्म्माणियस्यसः ॥

मोघज्ञानः । त्रि॰ कुतर्कज्ञानविशिष्टे ॥ मोघम् ईश्वराप्रतिपादककुतर्कशास्त्रजनितंज्ञानंयस्य ॥

मोघपुष्पा । स्त्री॰ वन्ध्यायाम् ॥

मोघवृत्तिः । त्रि॰ व्यर्थव्यापारे ॥

मोघा स्त्री॰ पाटलावृक्षे मोहयति । मुह॰ । पचाद्यच् । न्यङ्क्वादित्वात्कुत्वम् ॥ विडङ्गे ॥

मोघाशः । त्रि॰ कर्मिणि ॥ ईश्वरमन्तरेणकर्म्माण्येवनःफलंदास्यन्तीत्येवंरूपामोघानिष्फलैवआशाफलप्रार्थनायस्यसः ॥

मोघोलिः । पुं॰ प्राचीरे ॥

मोचः । पुं॰ शोभाञ्जने ॥ मोचयति । मुच्लृ॰ । णिच् । अच् । न॰ कदलीफले ॥

मोचकः । पुं॰ कदल्याम् ॥ शिग्रौ ॥ मुष्ककवृक्षे ॥ वि॰ निर्मोचके ॥

विरागिणि ॥ मोचयति । मुच्लृ० । णिच् । अच् । स्वार्थे कन् ॥

मोचनम् । न० मोचणे ॥ त्रि० मोच कर्त्तरि ॥

मोचनिर्यास : । पुं० मोचरसे ॥

मोचनी । स्त्री० कंटकार्याम् ॥ मोचकल्याम् ॥

मोचरस : । पुं० शाल्मलिनिर्यासे । पिच्छिलसारे । शाल्मलीवेष्टे ॥

मोचसार : । पुं० मोचरसे ॥ मोचस्रावोहिमोग्राहीस्निग्धोवृष्य:कषायक : । प्रवाहिकातिसारामकफपित्तास्रदाहनुत् ॥

मोचस्रुत् । पुं० मोचस्रावे ॥

मोचा । स्त्री० रम्भायाम् । कदल्याम् ॥ शाल्मलीवृक्षे ॥ नीलीवृक्षे ॥ मुञ्चतिरसम् । मुच्लृ० । पचाद्यच् । टाप् ॥ मोच्यते । घञ् वा ।

मोचाट : । पुं० कृष्णजीरे ॥ रम्भास्थ्नि । कदलीगर्भे ॥ मलयोद्भवे ॥

मोचाफलम् । न० कदलीसस्ये ॥ मोचाफलं स्वादुशीतं विष्टम्भिकफकृद्गुरु । स्निग्धं पित्तास्रतृट्दाहचतक्षयसमीरजित् ॥ पक्वं स्वादुहिमं पाकेस्वादुवृष्यञ्चबृंहणम् । क्षुत्तृष्णानेत्रगदहृन्मेहघ्नं रुचिमांसकृत् । माणिक्यमर्त्त्यामृतचम्पकाद्याभेदा: कदल्याबहवोपिसन्ति । उक्तागुणा स्तेष्वधिकाभवन्ति निर्दोषतास्याल्लघुताचतेषाम् ॥

मोचिका । स्त्री० मत्स्यविशेषे । मोड्० इतिख्याते ॥ मोचिकावातहृद्बल्या वृंहणीमधुरागुरु: । पित्तहृत्कफकृद्रुच्यावृष्यादीप्ताग्नयेहिता ॥

मोचित : । त्रि० मुक्ते । मोक्षंप्रापिते ॥

मोटकम् । न० पितृदानार्थद्विगुणभुग्नकुशचये ॥

मोटकी । स्त्री० रागिणीविशेषे ॥

मोटन : । पुं० वायौ । न० चूर्णीकरणे ॥ पाक्षिमे ॥

मोटनकम् । न० त्रिष्टुप्छन्द: ११ प्रभेदे ॥ यथा । स्यान्मोटनकंतजजाश्चलगौ ॥ रङ्गेखलुमल्लकलाकुशलश्चाणूरमहाभटमोटनकम् । य: केलिलवेनचकारसमेसंसाररिपुं परिमोटयतु ॥

मोटा ॥ स्त्री० बलायाम् ॥

मोट्टायितम् । न० स्त्रीणांस्वाभाविकदशविधालङ्कारान्तर्गतालङ्कारविशेषे ॥ तल्लक्षणं यथा । मोट्टायितंप्रियस्मृत्यासाङ्गभङ्गंविजृम्भणम् ॥ अपिच । कान्तस्मरणवार्त्तादौहृदितद्भावभावत : । प्राकट्यमभिलाषस्यमोट्टायितमुदीर्यते ॥ इ० ॥ मोटनम् । मुटप्रमर्दने घञ् । बाहुलादुपजस्तुट् । भृशादिभ्य

न्ताद्गावेक्ष : ॥
मोण : । पुं॰ शुष्कफले । वाने ॥ नक्र मक्षिकायाम् ॥ सर्पकरण्डे ॥
मोद : । पुं॰ हर्षे ॥ सन्तोषे ॥
मोदक : । पुं॰ क्षत्रियाच्छूद्रायांजा तेवर्णसङ्करजातिविशेषे । मयरा॰ इ॰ गौ॰ दे॰ भाषाप्रसिद्दे ॥ पुं॰ न॰ खाद्यविशेषे । लड्डुके । यवासश र्करायाम् ॥ शर्करादिद्वारापक्वौष धविशेषे ॥ न॰ वर्णवृत्तप्रभेदे ॥ यथा । पादयुगंकुरुनूपुरसुन्दरमाशुकरं कुसुमद्वयमाहर । सुन्दरिसर्वजनी नमनोहरमोदकवृत्तमिदंपरिभावय यथा । मानसमेतदनुक्षणमिच्छति गोपकुलेयदिहरिरागच्छति । तत् करवैप्रणतिंमुरविद्विषिसर्वसपत्नज नेविहततृत्विषि ॥ त्रि॰ हर्षके ॥
मोदनम् । न॰ सिक्थके ॥ मोदे ॥
मोदनीय : । त्रि॰ हर्षणीये । श्रात्म नि ॥
मोदमान : । त्रि॰ श्रानन्दावस्थाप्राप्ते ॥ प्रमुदिते ।' श्रष्टम्यांसिद्धौ ॥
मोदमोदिनी । स्त्री॰ जम्ब्वाम् ॥
मोदयन्ती । स्त्री॰ वनमल्लिकायाम् । कठचेंवेली॰इ॰भा॰ ॥
मोदा । स्त्री॰ श्रजमोदायाम् ॥
मोदाख्य : । पुं॰ श्राम्रवृक्षे ॥
मोदाढ्य : । त्रि॰ हर्षयुक्ते ॥
मोदाढ्या । स्त्री॰ मोहिन्याम् । श्रजमो दायां ॥
मोदित: । त्रि॰ सुरभीकृते । हर्षिते । हृष्टे ॥ मुदहर्षे । कर्त्तरिक्त : ॥
मोदिनी । स्त्री॰ मल्लिकायाम् ॥ यूथि- कायाम् । मदिरायाम् ॥ कस्तूरि कायाम् ॥ श्रजमोदायां ॥
मोरट : । पुं॰ लताप्रभेदे । कर्णपुष्पे । पीलुपर्णे । मधुस्रवे । दीर्घमूले- क्षीरमोरटे ॥ न॰इक्षुमूले ॥ श्रङ्को ठप्रसूने ॥ सप्तरात्रात्परक्षीरे ॥ न ष्टदुग्धभवंनीरंमोरटंसैव्यटीऽब्रवी- त् ॥ मुरति । मुरसंवेष्टने । शका- दिभ्योऽटन् ॥ श्रङ्कोठमूले ॥
मोरटकम् । न॰ इक्षुमूले ॥
मोरटा । स्त्री॰ मूर्विकायाम् । मुरह रा॰इ॰भा॰ । टाप्
मोष : । पुं॰ चौरधने ॥ मुष्यते । मु षस्तेये । घञ् ॥
मोषक : । पुं॰ तस्करे ॥ मुष्णाति । मुष॰ । ण्वुल् ॥
मोषणम् । न॰ लुंटने । मोसना॰लूट ना॰इ॰भा॰ ॥ छेदने ॥ वधे ॥
मोषिता । त्रि॰ चोरे । मोषणकर्त्त रि ।
मोह : । पुं॰ मूर्च्छायाम् ॥ दुःखे ॥ देहादावात्मबुद्धौ ॥ यथ कुण्ठीभवे द्बुद्धि: समोहइतिलौकिका: ॥ चि त्तविभ्रमे ॥ श्रविद्यायाम् । विपर्य ये । श्रस्मितायाम् । तम : कार्ये ।

भ्रमे । हिताहितविवेकासामर्थ्ये ।
तमसि । अज्ञानकृतविपर्य्यये । नि
र्णयासामर्थ्ये । व्याकुलताहेताव
विवेके ॥ मोहेनभवतिभेदः क्लेशाः
सर्वेपितन्मूलाः ॥ अस्याष्टविधाभे
दः । देवाह्यष्टविधमैश्वर्य्यमासा-
द्यामृताभिमानिनः • अणिमादि
कमात्मीयं शाश्वतमभिमन्यन्तइति
• सोयमस्मितामोहोऽष्टविधैश्वर्य्यवि-
षयत्वादष्टविधः ॥ मोहनम् । मु-
ह्वैचित्त्ये । घञ् ॥ धर्मविमूढ-
त्वे ॥ मोहोधर्मविमूढत्वंमानस्त्वा
त्माभिमानिता ॥ मोहवृक्षोयथापा
द्मे । सुमनोवाच । श्रूयतामभिधा-
स्यामिसर्वसंदेहनाशनम् । स्वरूप-
मुपदेशस्यसर्वविज्ञानदर्शनम् ॥
लोभः पापस्यबीजोऽयंमोहोमूलन्तु
तस्यहि । असत्यं तस्य स्कन्धोमा
याशाखासुविस्तरः ॥ दम्भःकौटि
ल्यपत्राणिकुबुद्ध्यापुष्पितः सदा ।
पैशुन्यं तस्यसौगन्ध्यमज्ञानं फल-
मेवहि ॥ छद्मपाषण्डचौराश्चकू
टाः क्रूराश्चपापिनः । पक्षिणोमो
हवृक्षस्यमायाशाखासमाश्रिताः ।
अज्ञानन्तुफलंतस्यरसोऽधर्मः फल
स्यहि । भावोद्रेकोमसंकल्पस्तस्यसत्त्वा
वसन्तुप्रियः । अधर्मस्तस्यसुरभिः
क्रोदस्यमधुरायते । तादृशैस्यफलैश्च
वसुफलोलोभपादपः ॥ तस्यच्छा



यांसमाश्रित्ययोनरः परिवर्त्तते ।
फलानितस्ययोऽश्नातिसुपक्वानिदि
नेदिने ॥ फलानान्तुरसेनैवअधर्मे
णतुपोषितः । सुसम्पुष्टोभवेन्मर्त्त्यः
पतनायप्रयच्छति ॥ इति ॥
मोहकलिलम् । न० अविवेकात्मकालु
ष्ये । अहमिदंममेदमित्यज्ञानवि
लसिते ॥ रजस्तमोमले ॥
मोहनः । पुं० कामदेवस्यबाणविशेषे
॥ धुस्तूरवृक्षे । गर्व्वे । म० ग्राम्य
धर्मे । सुरते ॥ होममन्त्रौषध्यादि
द्वारामुग्धताकरणे । त्रि० मोहका
रके ॥
मोहनलीला । स्त्री० सुरक्रीडायाम् ॥
मोहना । स्त्री० त्रिपुरमालीपुष्पे । म
कन्मालायाम् । पृक्कायाम् ॥
मोहनी । स्त्री० उपोदक्याम् ॥ वटप-
त्र्याम् ॥
मोहपक्षः । पुं० विपर्य्ययसंशयतर्कमा
नप्रमादभयशोकेषु ॥ मोहस्यपक्षः ॥
मोहरात्रिः । स्त्री० जन्माष्टम्याम् ॥ कृ
ष्णजन्मनियाप्रोक्तामोहरात्रिस्तुसा
मता ॥ अपिच । जन्माष्टमीमहेशा
निमोहरात्रिः [illegible]र्त्तिता ॥ दैनन्दि
नप्रलये ॥ यथा । सर्वंपञ्चाशदब्देग
तेतुब्रह्मणोनृप । दैनन्दिनस्तुप्रलयंवे
देषुपरिकीर्त्तितम् ॥ मोहरात्रिश्च
साप्रोक्ताविद्वद्भिः पुरातनैः ।
तत्रसर्वेप्रणष्टाश्चचन्द्रार्कादिदिगी-

ष्वरा: ॥ इत्यादिब्रह्मवैवर्त्तपुराणम् ॥ महाप्रलये० इ० कश्चित् ॥
मोहशास्त्रम् । न० अविद्याजनकग्रन्थे ॥
मोहान्धकार: । पुं० अज्ञानध्वान्ते ॥
मोहित: । त्रि० विवेकायोग्यत्वमापादिते। निर्णयासामर्थ्यंप्राप्ते ॥ मोह: सञ्जातोऽस्य । तारकादित्वादितच् ॥ अनात्मसुदेहेन्द्रियादिष्वात्माभिमानरूपयुक्ते पुरुषे ॥
मोहिनी । स्त्री० त्रिपुरमालिकापुष्पे॥ पृक्कायामोषधौ ॥ शास्त्रीयज्ञानभ्रंसहेतुभूतायांप्रकृतौ ॥ समुद्रमथनकालेदेवानाममृतपानायासुराणांमोहनायचभगवदवतारविशेषे॥ स्वर्वेश्याविशेषे
मौक्तिकम् । न० मुक्तायाम् । इन्दुरत्ने । मुक्ताफले । मोती० इ० भा० ॥ मौक्तिकंशीतलंवृष्यंचक्षुष्यंबलपुष्टिदम् ॥ अपिच । मौक्तिकञ्चमधुरंसुशीतलंदृष्टिरोगशमनंविषापहम् । राजयक्ष्मपरिकोपनाशनंक्षीणवीर्यबलपुष्टिवर्द्धनम् ॥ अस्यलक्षणंयथा । नक्षत्राभंशुभमत्यन्तमुक्तंस्निग्धंस्थूलंनिर्मलंनिर्व्रणञ्च । न्यस्तंधत्तेगौरवंयत्तुलायांतन्निर्मौल्यं मौक्तिकंसौख्यदायि ॥ अस्यदोषलक्षणंयथा । शुक्तिच्छायंमौक्तिकंत्र्यस्रकायंशुक्तिस्पर्शंरक्ततांचातिधत्ते । मत्स्याक्ष्यङ्कंरूक्षमुत्ताननम्रंनैतद्धार्यं धीमतादोषदायि ॥ अष्टधामौक्तिकंयथा । मातङ्गोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृच्छुक्तीनामुदराच्चमौक्तिकमणि:स्पष्टंभवत्यष्टधा॥ मौक्तिकविशेषोयथा । छायापाटलनीलपीतधवलास्तत्रापिसामान्यत: सप्तानांबहुशोनलब्धिरितिचेच्छौक्तेयकंतूल्वणम् ॥ अस्यपरीक्षायथा । लवणक्षाररक्षोदिनिपात्रेऽजगोमूत्रपूरितेक्षिप्तम् । मर्दितमपिशालितुषैर्यद्विकृतंतन्मौक्तिकंजात्यं । मुक्तैव । विनयादिभ्यष्ठक् ।
मौक्तिकतण्डल: । पुं० धवलयावनाले॥
मौक्तिकदाम । न० वर्णवृत्तप्रभेदे ॥ यथा । पयोधरमत्रचतुष्कमवेहिकलाधरवत्किलषोडशदेहि । भुजङ्गपतेहृदिमौक्तिकदामसुवृत्तमिदंशृणु मौक्तिकदाम ॥ यथा । मयातवकिङ्किरकारिकदापिविलासिनिरासमनुस्मरतापि । तथापिमनस्तवनाश्वसनायव्रजामिकथंभवतीमपहाय॥
मौक्तिकप्रसवा । स्त्री० शुक्तौ ॥
मौक्तिकयोनि: । पुं० शुक्तिशङ्खाद्यष्टसु ॥ यथा । शुक्ति: शङ्खोगज: क्रोड: फणीमत्स्यश्चदर्दुर: । वेणुरेतेसमाख्यातास्तज्ज्ञैर्मौक्तिकयोनय: ॥ अगस्त्योप्याह । जीमूतकरिमत्स्याहिवंशशङ्खवराहजा: । शुक्त्युद्भवाश्चविज्ञेयाअष्टौमौक्तिकयोनय: । इति

मौखर्य्यम् । न० मुखरत्वे ॥
मौञ्जी । स्त्री० मुञ्जनिर्मितमेखलायां॥
मौञ्जीतृणाख्य: । पुं० मुञ्जे ॥
मौञ्जीनिबन्धनम् । न० उपनयने ॥ मौञ्ज्यानिबन्धनंयत्र ॥
मौञ्जीपत्रा । स्त्री० बल्वजायाम् ॥
मौञ्जीबन्ध: । पुं० उपनयने ॥
मौञ्जीबन्धनम् । न० उपनयने ॥
मौढ्यम् । न० मोहे ॥ मूढस्यकर्मभावोवा । गुणवचनब्राह्मणादिभ्य: कर्मणिचेतिष्यञ् ॥
मौदकिक: । पुं० कान्दविकविशेषे ॥ मोदका: पण्यमस्यातदस्यपण्यमितिठक् ॥
मौद्ग: । त्रि० मुद्गावयवे ॥ मुद्गविकारे ॥ मुद्गस्यावयवोविकारोवा । बिल्वादण् । मुद्गै: संसृष्टोऽन्नेमुद्गादण् ॥
मौद्गलि: । पुं० काके ॥
मौद्गल्य: । पुं० मुद्गलनिमुचे० गोत्रकारके ॥
मौद्गीनम् । न० मुद्गक्षेत्रे ॥ मुद्गानांभवनंक्षेत्रम् । धान्यानांभवनेक्षे० खञ् ॥
मौनम् । न० अभाषणे । तूष्णीम् । तूष्णीकाम् । शब्दप्रयोगराहित्ये ॥ कर्मविशेषेमौनंयथा । उच्चारेमैथुने चैवप्रस्रावेदन्तधावने । स्नानभोजनकालेचषट्सुमौनंसमाचरेत् ॥ गोप्यानांगोपनहेतुमौनंवाचंयमत्वं- भगवतोविभूति: । नहितूष्णींस्थितस्याभिप्रायोज्ञायते ॥ गुह्यानांमध्येसन्न्यासश्रवणमननपूर्वकमात्मनोनिदिध्यासनलक्षणंमौनंवाभगवतोविभूति: । मौनञ्चैवास्मिगुह्यानामितिभगवदुक्ते: ॥ मुनिभावे । एकाग्रतयात्मचिन्तने० निदिध्यासनाख्ये वाङ्मयसंयमहेतौ ॥ मन: संयमोमौनमितिभाष्यम् ॥ मुने:कर्मणि० ज्ञानाभ्यासलक्षणे० निदिध्यासनशब्दिते ॥ यस्माद्वाचोनिवर्त्तन्ते अप्राप्यमनसासह । यन्मौनंयोगिभिर्गम्यं तद्भवेत्सर्वदाबुध: ॥ वाचोयस्मान्निवर्त्तन्ते तद्वक्तुंकेनशक्यते । प्रपञ्चोयदिवक्तव्य: सोपिशब्दविवर्जित: ॥ इतिवातद्भवेन्मौनं सतांसहजसंज्ञितम् । गिरामौनन्तुबालानांप्रयुक्तं ब्रह्मवादिभि: विवादस्थागे ॥ मुने: कर्म भावोवा । इगन्ताच्चलघुपूर्वादित्यण् ॥
मौनधर: । त्रि० मौनिनि ॥ धरति । धृञ्० । अच् । मौनस्यधर: ॥ मौनंधरतिवा ॥
मौनी । पुं० मुनौ ॥ त्रि०संयतवाचि । मौनवति ॥ यथा । सिनीवाल्यांकुहूः [illegible] भवेत् । मौसहस्र [illegible] मौनिनाकृतम् । एतच्चमौनमरुणोदयमारभ्यस्नानपर्यन्तंकार्यंतत्स्नानकालमात्रे ॥ मौनमस्यास्ति । अतइनिठनाविति॰नि: ॥

मौनेय : । पुं० गन्धर्वगणविशेषे ॥

मौरजिक : । त्रि० मार्दङ्गिके । मुरजवादके ॥ मुरज: लक्षणयातद्वादनंशिल्पमस्य । शिल्पमितिठक् ॥

मौर्ख्यम् । न० जाड्ये ॥ मूर्खस्यभाव: । वर्णदृढादिभ्य: ष्यञ्चेतिष्यञ् ॥

मौर्वम् । न० काण्डे ॥ भस्मनि ॥ मूर्वाया: विकार: अवयवोवा । अण् ॥

मौर्वी । स्त्री० ज्यायाम् धनुर्गुणे ॥ मूर्वायाविकार: । अवयवेचप्राण्योषधिवृक्षेभ्यइत्यण् । ङीप् । अजस्त्र ङ्ग्याम् कौं० गा० द्रु० गौ० भा० ॥

मौल : । पुं० वंशपरम्पराक्रमेणतद्देशावस्थायिनि ॥ भूम्यादेर्मूलस्यात रि । लोडल० द्रु० गौ० भा० ॥ यथा । वंशपरम्परयामौला : सामन्ता : स्वामिनंविदु: । तदन्वयस्यागतस्यराज्यागोचरैर्सही । तल्लक्षणंयथा । वेतचपूर्वन्सामन्ता: पश्चाद्येमान्तरंगता: । तन्मूलत्वात्तुतेमौलाऋषिभि: परिकीर्त्तिता : ॥ मन्विहृदये ॥ मूलादागत: । मूलेभवोवा । अण् ॥

मौलि : । पुं० स्त्री० किरीटे ॥ धम्मिले संयतकेशे ॥ चूडायाम् ॥ मूर्द्धनि ॥ पुं० अशोकपादपे ॥ स्त्री० भूमौ ॥ मूलस्यादूरभव : । सुतङ्गमादित्वादिञ् ॥ यद्वा । मूलस्यापत्यम् । अतइञ ॥

मौषलम् । न० मुषलतुल्ये ॥ यथा । गङ्गायांमौषलंस्नानंमहापातकनाशनम् । महाभारतस्यपर्वविशेषे ॥

मौष्टा । स्त्री० क्रीडाविशेषे ॥ मुष्टि : प्रहरणमस्यांक्रीडायाम् । तदस्यां प्रहरणमितिण : । टाप् ॥

मौहूर्त : । पुं० ज्योतिर्विदि । दैवज्ञे ॥ मुहूर्त्तमधीते० वेदवा । तदधीतेतद्वेदेत्यण् ॥

मौहूर्त्तिक : । पुं० गणके । ज्योतिर्विदि ॥ मुहूर्त्तमधीते० वेदवा । क्रतूक्थादिरितिठक् ॥

म्रक्ष : । पुं० स्वदोषगूहने ॥ म्रक्षणे ॥

म्रक्षणम् । न० स्नेहने । अभ्यङ्गे ॥ तैले ॥ स्निग्धताकारणे ॥ द्रव्यस्यद्रव्यान्तरेण संयोजने ॥

म्रदिमा । पुं० मार्दवे । मृदुत्वे ॥ मृदोर्भाव : । पृथ्वादिभ्यइमनिज्वा ॥

म्रदिष्ठ : । त्रि० म्रदीयसि ॥ इष्ठन् ॥

म्रदीयान् । त्रि० अतिसुकुमारे । अतिशयेनमृदौ ॥ ईयसुन् ॥ * ।

म्लातकम् । न० कैवर्त्तीमुस्तके ॥

म्रियमाण : । त्रि० मरणासन्ने ॥

म्लक्कम् । न० चोरिते ॥

म्लान: । त्रि० मलिने । कश्मरे । मलीमसे क्लेदप्रक्षये । क्त: । संयोगादेरातोधातोर्यण्वतइतिनिष्ठातस्यन: ॥

म्लाना । स्त्री० रजस्वलायाम् ॥ म्लायतिस्म म्लै० । गत्यर्थेतिक्त : । संयोगादेरितितस्यन : । टाप् ॥

म्लानिः । स्त्री० कान्तिक्षये ॥ म्लायति । म्लै० । बाहुलकान्निः ॥

म्लिष्टम् । न० अविस्पष्टे । अस्पष्टवाक्ये ॥ त्रि० अव्यक्तवाचि । अस्पष्टभाषिते ॥ म्लाने ॥ म्लेच्छतेस्म । म्लेच्छ अव्यक्ते शब्दे । धृष्टस्वान्तध्वान्तादिना निपातितम् ॥

म्लेच्छः । पुं० किरातशवरपुलिन्दादि पामरभेदे ॥ म्लेच्छानां सर्वधर्मराहित्यमुक्तं हरिवंशे । सगरस्तां प्रतिज्ञां स्वगुरोर्वाक्यं निशम्य च । धर्मं जघान तेषां वेशान्यत्वं चकार ह । अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत् । यवनानां शिरः सर्वं काम्बोजानां तथैव च ॥ पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः । निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ॥ शका यवनकाम्बोजाः पारदाः पह्लवास्तथा । कोलिसर्पाः समहिषा दार्वाश्चोलाः सकेरलाः ॥ वशिष्ठवचनाद्राजन् सगरेण महात्मना ॥ शकानां शकदेशे भवानां च क्रियाणाम् । एवं यवनादीनाम् ॥ ते चात्मधर्मपरित्यागान्म्लेच्छत्वं ययुरिति विष्णु० पुरा० बौधायनः गोमांसभक्षको यस्तु विरुद्धं बहु भाषते । सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥ पामरः । [illegible] अपभाषणे ॥ अपशब्दे [illegible] अपशब्द

इतिभाष्यम् ॥ न० हिङ्गुनि ॥ म्लेच्छति । म्लेच्छ० । पचाद्यच् ॥

म्लेच्छकन्दः । पुं० लशुने ॥

म्लेच्छजातीयः । त्रि० म्लेच्छप्रकारे ॥ प्रकारवचने जातीयर् ॥

म्लेच्छदेशः । पुं० शिष्टाचाररहित-खशादिदेशे । प्रत्यन्ते यज्ञियदेशादन्यस्मिन् देशे ॥ चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते । तं म्लेच्छविषयं प्राहुरार्यावर्त्तमतः परम् ॥ अत्रापि विशेषो यथा । नद्याश्रीसफला यज्ञर्माविधास्तु स सौदलम् । तं म्लेच्छदेशं जानीयात् यवनायान्तिवेषाताः ॥ म्लेच्छानां देशः

म्लेच्छभोजनः । पुं० गोधूमे ॥ न०-यावके ॥

म्लेच्छमण्डलम् । न० म्लेच्छदेशे ॥

म्लेच्छमुखम् न० ताम्रे । शुल्बे । ताम्बा इति भाषाप्रसिद्धे ॥ म्लेच्छदेशो मुखमुत्पत्तिरस्य ॥ म्लेच्छस्य मुखमिव वा ॥

म्लेच्छास्यम् । न० ताम्रे ॥ म्लेच्छदेश आस्यमुत्पत्तिरस्य ॥ म्लेच्छस्यास्यमिव वा ॥

म्लेच्छितम् । न० अपशब्दे । परभाषायाम् ॥ न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् । सङ्कीर्णनाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥ म्लेच्छतेस्म । म्लेच्छ० क्तः । दृष्ट

